# प्रबन्धप्रकाशः

( द्वितीयो भागः )

अर्थात्

विशिष्टविद्वत्परिषत्सु ग्रन्थकर्त्रा प्रदत्तानां दीक्षान्तादिभाषणानां संग्रहात्मकः, वेदादिसच्छास्त्रेभ्यः संकलितया सुविचारमाधुकर्या समुपेतश्च ग्रन्थः

स च

वाराणसेयसंस्कृतविश्वविद्यालयस्य

उपकुलपतिः

विद्यामार्त्तण्डः ( कां० वि० ), विद्यारत्नम्

**डाक्टर श्री मङ्गलदेव शास्त्री,**

M A., M.O.L , D. Phil. (Oxon.),

इत्येतेन विनिर्मितः

२०१८ वै० ( सन् १९६१ )

[ द्वितीयं संस्करणम् ]



मानवधर्मव्याख्याता स्व० आचार्य श्रीभगवान्दासः
एम० ए०, डी० लिट०

# प्राक्कथनम्

प्रसन्नताया विषयो यत्परःशतवर्षेभ्यः प्रतिकूलपरिस्थितीः सहमाना संस्कृतभाषा साम्प्रतं भारतीयराष्ट्रेण भारतीयमुख्यभाषास्वेकतमत्वेन स्वीकृता भूयोऽप्यभ्युत्थानाभिमुखी दृश्यते। प्रायेण सर्वासां भारतीयभाषाणां मातृभूता हि सा न केवलं भारतीयसंस्कृतेर्निर्वाहिकैव, किन्तु तस्या उद्गमस्थानमपि। लोककल्याणभावनाभिरापूर्णं तस्या वेदोपनिषदादि वाङ्मयं नूनं समस्तस्य जगतोऽमूल्या संपत्तिः। ततश्च संस्कृतभाषाया अभ्युदयो भारतीयभाषाणां संपोषणार्थम्, भारतीयसंस्कृतेः संरक्षणार्थम्, अखिलस्य जगतः कल्याणसाधनसंपत्त्यै चापेक्ष्यते।

स एष संस्कृतज्ञानामतर्कितोपनतः शुभावसरः। ते हि प्राचीनकाले राष्ट्रियजीवनस्य विभिन्नविभागेषु नेतार आसन्। भूयोऽपि तैस्तत्पदमात्मनो देशस्य च हितसंपादनहेतोरासादनीयम्। तदर्थं च तैरवश्यं सततं परिवर्तनशीलाया लोकावस्थितेः सम्यक् परिचयः, प्रगतिशीलपद्धतिं चानुरुध्य सुविस्तृतस्य संस्कृतवाङ्मयस्यानुशीलनमपेक्ष्यते। तदेतादृशमेवोद्देश्यमपेक्ष्य निर्मितोऽयं ग्रन्थः सर्वथा प्राप्तावसर एव।

समस्तेऽपि भारते संस्कृतमहाविद्यालयेषु मूर्धन्यं पदं भजमानस्य काशिकराजकीयसंस्कृतमहाविद्यालयस्य चिराय आचार्यपदमधिष्ठितवता अस्मत्प्रियशिष्येण श्रीमङ्गलदेवशास्त्रिणा संस्कृतभाषाया अभिवृद्धयै संस्कृतज्ञेषु च प्रगतिशीलभावनानां प्रोद्बोधनार्थं यत्सुमहत् प्रयतितं

तत्कस्याविदितम् । उत्तरप्रदेशशासनाधीनं विशिष्टपदाधिकारिरूपेण तेन तस्यैव महाविद्यालयस्य संस्कृतविश्वविद्यालयत्वेन विकासार्थमुपनिबद्धा योजनापि खलु संस्कृतभाषायाः समुन्नत्यै तेनानवरतं क्रियमाणस्य प्रयत्नस्यैवापरं निदर्शनम् ।

तेनैव आचार्यश्रीमङ्गलदेवशास्त्रिणा, प्रगतेर्भावनाया जागर्तिरेव संस्कृतज्ञानां साम्प्रतिकी मुख्यावश्यकतेत्यनुभवता, स्वोपज्ञमनोरमपद्धत्या सोपपत्ति च सरससरलैर्मञ्जुभिश्च पदैर्गूढगम्भीरविषयान् प्रतिपादयता, प्रगतिशीलविचारपरम्पराभिः परिपूर्णो भव्यैर्भावैर्विभूषितो भारतीयताभावनाभावितश्च ग्रन्थोऽयं विनिर्मितः ।

अत्र हि प्राधान्येन संस्कृतज्ञानां हितेन संबद्धान् "अभिनवभारते संस्कृतज्ञानां स्थानम्", "भारतीयसंस्कृतेः स्वरूपम्", "देववाण्या अवनतिरस्माकं कर्तव्यं च", "आर्यधर्मस्य संदेशः" इत्यादिविषयान्, प्राचीनसंस्कृतवाङ्मयेन च संबद्धान् "वेदा अभिनवभारतं च", "भगवद्गीतायाः स्वरूपमुपयोगश्च", "गीतायाः कर्मणो यज्ञस्य च स्वरूपम्" इत्यादिविषयानधिकृत्य तत्तद्विशिष्टावसरेषु ग्रन्थकृता प्रदत्तानां भाषणानां संग्रहः । तत्परिशिष्टरूपेण च ऐतरेयब्राह्मणमाश्रित्य प्रपञ्चितम् "ऐतरेयब्राह्मण आचारविचाराः" नाम ऐतरेयब्राह्मणपर्यालोचनं, वेदादिसच्छास्त्रेभ्यः संकलिता विचारगभीरा हृदयंगमाश्च संदर्भाः सूक्तयश्च नूनं ग्रन्थस्यात्युपयोगितां संपादयन्ति ।

स एष संस्कृतभाषायामिदंप्रथमत्वेन कृतो यत्नः संस्कृतज्ञानामवश्यमभिनन्दनीयो भविष्यतीति मे विश्वासः । तदस्य विषये

देववाण्याः समुत्कर्षं भावयंस्तद्विदां तथा।
ग्रन्थ एष चिरं भूयाद्विदुषां हर्षवर्धनः ॥

इत्येव मदीयं शुभाशंसनम्।

शान्तिसदनम्,
काशी

(डा०) भगवान्दासः
२५—११—१९५० ई०
सौर ६ मार्गशीर्ष, २००७ वि०

# भूमिका

## ( प्रथमसंस्करणस्य )

१६३० तमे खिस्ताब्दे प्रथमवारं मुद्रितस्य प्रबन्धप्रकाशस्य साम्प्रतं यावदष्टौ संस्करणानि जातानीति नूनं तस्य छात्रजनोपकारित्वेन सह लोकप्रियतामपि प्रकटीकरोति। परं क्रमशस्तस्य कलेवरस्य वृद्धया, नूतनत्वेन संनिवेशितानां संनिवेशितुमभिप्रेतानां वा नैकप्रबन्धानां प्रायेण सामान्यछात्राणामनुपयोगित्वेन च तस्य द्वितीयभागस्य प्रकाशनं चिरायावश्यकमभूत्, यस्मिन् हि, न केवलं प्रौढछात्राणामेव, किन्तु अन्येषामपि संस्कृतज्ञानां विदुषां पुरो महत्त्वयुक्तानां विशेषतश्च संस्कृतज्ञैः संबद्धानां प्रश्नानां विषये तत्समाधानपरा विचारा उपस्थाप्येरन्।

नैतत्तिरोहितं विपश्चितां यत्र केवलं भारतीयेतिहास एव, किन्तु समस्तपृथ्व्या अपीतिहासे, नूनमभूतपूर्वैव परिस्थितिः समुपस्थिता जगति साम्प्रतम्। तद्वशादेव नूतना नूतनाः समस्याः, व्यक्तिगतजीवनेन राष्ट्रगतजीवनेन च संबद्धाः, अनवरतं समुदीयमानाः सद्यः समाधानमपेक्षन्ते। तासां च नूतनतया प्रायेण तत्तत्परिस्थितिपरामर्शिन्या नूतनदृष्ट्यैव विवेचनमावश्यकं भवति। वर्तमानजगत इंग्लिशादिभाषाणां नूतनोत्कृष्टसाहित्यस्यैतदेव खलु प्रधानं वैशिष्ट्यं यत्तद् विभिन्नक्षेत्रेषु तत्तत्परिस्थितिवशात्प्रत्यहमुत्पद्यमानानां नानाविधसमस्यानां विचारपुरस्सरं समाधानं विवेचकानां पुरो निदधाति। सुप्रसिद्धानां पत्रिकाणां तत्तद्विश्वविद्यालयीयदीक्षान्तभाषणानां चैतद्दृष्ट्यैव महत्त्वमित्यपि नाविदितं विदुषाम्।

संस्कृतभाषायामपि संप्रति तादृशस्य साहित्यस्यावश्यकता केन संस्कृतज्ञेन नानुभूयते ।

किञ्च, कस्यैतदविदितं यल्लोकप्रगतिर्हि स्वभावत एव नदीव सततमग्रगामिनी न जातु एकावस्थायामेव संतिष्ठते । अद्यत्वे पुनः सा प्रगतिः काष्ठामतिक्रम्य वर्तते । अत एव साम्प्रतं मनुष्यस्य प्रात्यहिकजीवनचर्यायाः साधनेषु प्रकारेषु चापि सर्वथा नूतनतैव प्रतीयते, मानवजातीनां च पारस्परिकव्यवहारा विचाराश्च आमूलतो रूपान्तरमिवापद्यमाना दृष्टिपथमायान्ति ।

सत्यप्येवं किञ्चिदाश्चर्यकरमिवैतद् यत्संस्कृतज्ञेषु अद्यापि सामयिकप्रगतेरुपेक्षाया भावनैव प्रायो लब्धपदा विद्यते । एतादृश्यामवस्थायाम् "कृधी न ऊर्ध्वाञ्चरथाय जीवसे" ( ऋग्० १।३६। १४ ), "भूत्यै जागरणमभूत्यै स्वपनम्" ( यजु० ३०।१७ ), "इन्द्र इच्चरतः सखा" तथा "चरन्वै मधु विन्दति" ( ऐ० ब्रा० ७।१५ ) इत्याद्यनुसारं प्रगतेर्भावनाया जागर्तिरेव संस्कृतज्ञानां साम्प्रतिकी मुख्यावश्यकतेति प्रतिभाति ।

तदेवंविधैरेवोद्देश्यैस्तत्तद्विशिष्टावसरेषु प्रदत्तानामस्माकं भाषणानामेष संग्रहो विज्ञानां संस्कृतज्ञानां पुरः समुपस्थाप्यते । संग्रहस्यान्ते च संयोजितौ ऐतरेयपर्यालोचनं नाम महानिबन्धः सुविस्तृतप्राचीनसंस्कृतवाङ्मयात् प्रायेण पूर्वोक्तदृष्ट्यैव संकलिता कापि सुविचारमाधुकरी च नूनं ग्रन्थस्योपयोगिताया उपादेयतायाश्च प्रकर्षाय भविष्यतः ।

सोऽयं संस्कृतभाषायामिदंप्रथमत्वेनैव कृतः समुद्यमः संस्कृतज्ञानां प्रेमभाजनं भवेदिति नो विश्वासः । किं बहुना,

भद्राः सन्तु प्रशस्तयो
भद्रा वाचो वचोविदः ।
जागृयाम पुरोहिताः ॥

भारतीयसंस्कृतिसंस्थानम्,
इंग्लिशिया लाइन,
बनारस कैंट ।
शरत्पूर्णिमा, २००७
( २५।१०।१९५० )

मङ्गलदेव शास्त्री
( मेधातिथिः )

## द्वितीयसंस्करणस्य

# वक्तव्यम्

प्रसन्नताया विषयो यद् नैकवर्षेभ्यो दुष्प्राप्यस्यास्य ग्रन्थस्य द्वितीयं संस्करणमिदं विद्वज्जनानां पुर उपस्थाप्यते । अस्मिन् हि संस्करणे कांश्चिदंशान् पृथक्कृत्य केचिन्नूतनाः अंशाः संनिवेशिताः सन्ति ।

पृथक्कृतेष्वंशेषु ऐतरेयब्राह्मणपर्यालोचनं मुख्यम् । तच्च अचिरादेव स्वतन्त्रत्वेन प्रकाशितं भविष्यति ।

तदिदं परिष्कृतं परिवर्धितं च द्वितीयं संस्करणं विशेषतो विदुषां मनस्तोषाय भविष्यतीत्याशास्यते ।

वाराणसी
श्रीकृष्णजन्माष्टमी,
२०१८ ( वि० )
( १।९।१९६१ )

मङ्गलदेव शास्त्री
वाराणसेय-
संस्कृतविश्वविद्यालयस्य
उपकुलपतिः

# विषय-सूची

प्राक्कथनम्

भूमिका ( प्रथमसंस्करणस्य )

वक्तव्यम् ( द्वितीयसंस्करणस्य )

## अभिभाषणानि

नाम

### प्रथम उल्लासः

( पृ० १–२६६ )

पृष्ठतः

१—उत्कलसंस्कृतपरिषद् उपाधिवितरणोत्सवावसरे दीक्षान्तभाषणम् ३

अभिनवभारते संस्कृतज्ञानां स्थानम् ... ५

भारतीयसंस्कृतिः ... ... ८

भारतीयसंस्कृतेः स्वरूपम् ... ... १०

भारतीयसंस्कृतेः स्थानमद्यतनीये जगति ... १५

सांप्रतिका भारतीयविश्वविद्यालयाः ... १८

भारतीयसंस्कृतेः समुद्धारः ... ... २०

संस्कृतज्ञानां विशेषावसरः कर्त्तव्यं च ... २२

आत्मपरीक्षणं लोकप्रगतेर्ज्ञानं च ... २३
पाठ्यपद्धतेः परिष्कारः ... ... २७

२—अ० भा० संस्कृतसाहित्यसम्मेलनस्य विशेषाधिवेशनस्य सभापतिपदेन अभिभाषणम् ४५
अभिनवभारते संस्कृतम् ... ... ४६
ऐतिहासिकं सिंहावलोकनम् ... ... ५२
वर्तमानपरिस्थितेरीक्षणम् ... ... ५४
संस्कृतज्ञानां सांप्रतिकी स्थितिः कर्तव्यं च ६०
संस्कृतशिक्षापद्धतेः परिष्कारः ... ... ६२
आवश्यकाः प्रस्तावाः ... ... ६६

३—संयुक्तप्रान्तीयसंस्कृतच्छात्रसम्मेलनस्य द्वितीयाधिवेशने सभापतित्वेनाभिभाषणम् ७९
देववाण्या अवनतिरस्माकं कर्तव्यं च ... ८१
देववाण्याः प्राचीनकाले समुन्नतिः ... ८३
देववाण्या अद्यत्वेऽवनतिः ... ... ८७
देववाण्या अवनतेः कारणानि ... ... ८८
लोकप्रगतेर्लोकावस्थितेश्चोपेक्षा ... ८९
भारतीयमौलिकसंस्कृतेरपरिज्ञानम् ... ९४
वस्तुतत्त्वज्ञानस्योपेक्षा ... ... ९६
अस्माकं कर्तव्यम् ... ... १०१

४—गुरुकुलवृन्दावनविश्वविद्यालयीयमहोत्सवावसरे दीक्षान्तभाषणम् १०९
आर्यधर्मस्य संदेशः ... ... १११
आशावादो निराशावादश्च ... ... ११२
प्रगतिवादो रूढिवादश्च ... ... ११५
मानवतायाः संमानो गौरवं च ... ... १२०
५—'किरठल'स्थार्यमहाविद्यालयस्य 'रजतजयन्ती'महोत्सवावसरे शिक्षासम्मेलनेऽध्यक्षस्य ग्रन्थकर्तुरभिभाषणम् १२५
शिक्षायामादर्शभावना: ... ... १२७
शिक्षायाः प्रधानमुद्देश्यम् ... ... १२८
शिक्षायां सामाजिकी दृष्टिः ... ... १३१
शिक्षायां वैयक्तिकी दृष्टिः ... ... १३२
जनतायाः शिक्षायामाश्रमाणां स्थानम् ... १३६
६—'असम' संस्कृतसमितेरुपाधिवितरणोत्सवे दीक्षान्तभाषणम् १४५
विश्वविद्यालयानां दुरवस्था ... ... १४६
प्राचीना भारतीया आदर्शाः ... ... १५१
अभिनवभारते संस्कृतस्योपयोगिता ... १५८
वर्तमानस्थितेरवेक्षणम् ... ... १६३

ऐतिहासिकं सिंहावलोकनम् ... ... १६६
संस्कृतज्ञानां सांप्रतिकी स्थितिः कर्त्तव्यं च ... १७५
७—अ० भा० संस्कृतसाहित्यसम्मेलनस्य शिक्षापरिषदः सभापतिपदेनाभिभाषणम् १८५
८—गुरुकुल कांगड़ी-विश्वविद्यालयीयमहोत्सवस्य सरस्वतीसम्मेलनाधिवेशने सभाध्यक्षस्य ग्रन्थकर्तुरभिभाषणम् २२३
वेदा अभिनवभारतं च ... ... २२५
९ कलकत्तानगरे 'अखिलभारतीय आर्य (हिन्दू) धर्मसेवासंघ' स्याश्रयेण प्रवृत्ते 'गीताजयन्ती' महोत्सवे सभापतिपदेनाभिभाषणम् २३८
भगवद्गीतायाः स्वरूपम् ... ... २४१
गीतायाः कर्मणो यज्ञस्य च स्वरूपम् ... २५६
गीताया भक्तिः ... ... २६२
आत्मपरीक्षणमन्तरवेक्षणं वा ... २६६
गीताया आशावादः ... ... २६८
१० काशिकराजकीयसंस्कृतमहाविद्यालयस्य अनुसन्धानमन्दिर-प्रारम्भोत्सवे भाषणम् २७३
११ समावर्तनसत्रपद्धतिः २८३

# सुविचार-माधुकरी

## नाम

### द्वितीय उल्लासः

(पृ० ३०१-४०५)


| | | | |
|---|---|---|---|
| ऋग्वेदसंहितायाः | ... | ... | ३०४ |
| शुक्लयजुर्वेदसंहितायाः | ... | ... | ३०६ |
| सामवेदसंहितायाः | ... | ... | ३११ |
| अथर्ववेदसंहितायाः | ... | ... | ३१२ |
| शतपथब्राह्मणात् | ... | ... | ३१६ |
| ऐतरेयब्राह्मणात् | ... | ... | ३१७ |
| गोपथब्राह्मणात् | ... | ... | ३१८ |
| ईशावास्याद्युपनिषद्भ्यः | ... | ... | ३२० |
| निरुक्तात् | ... | ... | ३३३ |
| पातञ्जलमहाभाष्यात् | ... | ... | ३३५ |
| वाल्मीकिरामायणात् | ... | ... | ३३७ |
| महाभारतात् ( विदुरनीतेः ) | | ... | ३४५ |
| कौटिलीयादर्थशास्त्रात् | ... | ... | ३५४ |
| चाणक्यसूत्रेभ्यः | ... | ... | ३५७ |
| मनुस्मृतेः | ... | ... | ३६४ |
| चरकसंहितायाः | ... | ... | ३६७ |

| | | | |
|---|---|---|---|
| रश्मिमालायाः | ... | ... | ३६६ |
| अमृतमन्थनात् | ... | ... | ३८१ |
| धम्मपदात् | ... | ... | ३६१ |
| सन्नीतिमुक्तावल्याः | ... | ... | ३६५ |

( पृ० २७५ )



डाक्टर मंगलदेव शास्त्री,
प्रिंसिपल, गवर्नमेंट संस्कृत कालेज, बनारस
(१९३७–१९४८)

'पुरी' नगर्याम्

उत्कल-संस्कृत-परिषद्

उपाधि-वितरणोत्सवे

ग्रन्थकर्तुः

# दीक्षान्तभाषणम्

(CONVOCATION ADDRESS)

फाल्गुनकृष्णपक्षे १, २००६ वै०

( ३।३।१९५० ई० )

मातृभूमेरभिनन्दनम्

## भारतं तद् विराजताम्

विद्याया निरवद्याया लोककल्याणकाम्यया ।
उत्तरोत्तरमुत्कर्षे नियतं दत्तमानसाः ॥१॥
दम्भेन मायया मुक्ताः स्वच्छा मुक्तावलीव ये ।
विबुधैर्भासितं तैर्यद् भारतं तद्विराजताम् ॥२॥
आसुरीं वृत्तिमुत्सृज्य दैवं भावमुपाश्रिता ।
चारित्र्येण युता नित्यं श्रमेण तपसा तथा ॥३॥
अनुशासन-संजुष्टा शिक्षा यत्र प्रवर्त्तते ।
आशाप्रकाशभूयिष्ठा भारतं तद्विराजताम् ॥४॥

( ग्रन्थकर्तुः )

ॐ

अहं राष्ट्री संगमनी वसूनां
चिकितुषी प्रथमा यज्ञियानाम् ।
तां मा देवा व्यदधुः पुरुत्रा
भूरिस्थात्रां भूर्यावेशयन्तीम् ।
अहमेव स्वयमिदं वदामि
जुष्टं देवेभिरुत मानुषेभिः ।
यं कामये तं तमुग्रं कृणोमि
तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥[१]

(ऋग्० १०।१२५।३,५)

## अभिनवभारते संस्कृतज्ञानां स्थानम्

माननीयाः सभापतिमहोदया विद्वद्वर्याश्च,

परमिदं सौभाग्यं यदहमद्य भगवतोऽनाथनाथस्य जगन्नाथस्या-वासभूम्यां पुण्यपुर्यां पुर्याम् इह सुप्रथितख्यातेरेतस्याः परिषद

१. ऋग्वेदीयस्य अस्य सूक्तस्य आम्भृणी वाग् देवता । (आम्भृणी = अम्भृणस्य महर्षेः संबन्धिनी)

उपाधिवितरणोत्सवावसरे स्नातकानभिलक्ष्य दीक्षान्तभाषण विधातुम् अत्रभवतां समक्षमुपस्थितोऽस्मि।

भव्याः,

नूनमभूतपूर्वोऽयं समयो भारतवर्षस्य दैर्घकालिक इतिहासे। सत्यं सुप्रभाता रजनी। चिरकालिकपारवश्यमहातमिस्रातमोऽपगमे भारतीयगगनमण्डले उदयाभिमुखभारताभ्युदयभास्वतो नूतननूनाशाकिरणोद्भासि दिव्यं प्राभातिकं ज्योतिर्विशालम् आशाचक्रवालम् आभासयन्नो मानसकलिकाः प्रबोधयदिवावलोक्यते।

अस्मिन्हि शोभने समये प्रकृतिदेव्याः क्रोडे क्रीडताम् आद्यानामृषीणाम्

> "एषा दिवो दुहिता प्रत्यदर्शि
> ज्योतिर्वसाना समना पुरस्तात्"[१] (ऋग्० १।१२४।३)

इत्याद्युदग्रं श्रुतिगानमिव भारतीयानामस्माकं सोल्लासमनसां सहसैव मुखान्निःसरति—

> सुप्रभातं विजयतां धियो यत्पुष्टिवर्धनम्।
> पथः सत्यस्य सातये॥[२]

---

१. एषा उषाः। पुरस्तात् पूर्वस्यां दिशि। प्रत्यदर्शि। सर्वेषामाभिमुख्येन प्रकाशते।

२. ग्रन्थकर्तुरेषा गायत्री। सातये लब्धये।

तदेतेन मनोऽभिरामेण अभिनवजीवनदायिना समयेन अभिनवतामापन्न इव भारते

"ताः प्रत्नवन्नव्यसीर्नु नमस्मे
रेवदुच्छन्तु सुदिना उषासः"[१]

( ऋग्० १।१२४।६ )

इत्यनुसारं प्रत्नवन्नव्योऽपि भारतीयसंस्कृतेः प्रजागरः स्यादित्यभिप्रायेण '**भारतं भारती भारतीयसंस्कृतिः**' इति श्रुतिमधुरो रवः सर्वतः श्रुतिपथमापतति ।

न केवलमस्मद्देशस्य विभिन्नक्षेत्रेषु कार्यधुरं वहन्तो नेतार एव तत्तन्मञ्चेभ्यो भारतीयसंस्कृतेर्गुणगानपरा अनवरतमद्यत्वे श्रूयन्ते, किन्तु हिन्दुमहासभा-राष्ट्रियस्वयंसेवकसंघ-अखिलभारतीयसंस्कृतिसंमेलनप्रभृतिसंस्था अपि तथैव खलु तन्महिमवर्णनया मुखरा दृश्यन्ते । किं बहुना, भारतवर्षस्य तु का वार्ता, भारताद् बहिरपि अमेरिका-रूस-फिन्लैण्ड-नारवेप्रभृतिसुदूरदेशदेशान्तरेष्वपि भारतीयसंस्कृतेरध्ययनाध्यापनविषयिणी महती अश्रुतचरी रुचिर्विदुषां नानाविश्वविद्यालयानां च क्रमशः प्रवर्धमाना अहरहः संवादपत्रेभ्यः प्रतीयते ।

---

१. ताः नव्यसीर्नवतरा उषापः उषसः प्रत्नवत् पुरातन्य इव सुदिनाः अस्मे अस्माकं रेवत् बहुधनविशिष्टं यथा भवति तथा उच्छन्तु प्रकाशयन्तु इत्यर्थः ।

तत्र केयं ननु भारतीयसंस्कृतिः, किं तस्याः स्वरूपम्, कीदृशं च तस्याः स्थानमद्यतनीये जगतीति स्वाभाविकी जिज्ञासा समुदेति नो मनःसु। सर्व एष विचारः खलु संस्कृतिसामान्यस्वरूपावधारणसापेक्ष इति संस्कृतिसामान्यमेव तावत्संक्षेपेण विचार्यते।

तत्र संस्कृतिस्तावत्केति जिज्ञासायां **कस्यापि देशस्य समाजस्य वा विभिन्नजीवनव्यापारेषु सामाजिकसंबन्धेषु वा मानवीयत्वदृष्ट्या प्रेरणाप्रदानां तत्तदादर्शानां समष्टिरेव संस्कृति-**रित्येवार्थः प्रमितित्वेन वक्तव्यः। वस्तुतस्तस्यामेव सर्वस्यापि सामाजिकजीवनस्योत्कर्षः पर्यवस्यति। तयैव तुलया विभिन्नसभ्यतानामुत्कर्षापकर्षौ मीयेते। किं बहुना, संस्कृतिरेव वस्तुतः **"सेतुर्विधृतिरेषां लोकानामसंभेदाय"** (छान्दोग्योपनिषदि ८।४।१) इत्येवं वर्णयितुं शक्यते। अत एव च सर्वेषां धर्माणां संप्रदायानामाचाराणां च परस्परं समन्वयः संस्कृतेरेवाधारेण कर्तुं शक्यते।

## भारतीयसंस्कृतिः[१]

उपर्युक्तदृष्ट्यैव भारतीयसंस्कृतेरपि गुणगानमद्यत्वेऽभितः श्रूयते। इयं हि भारतीयसभ्यताया अन्तरात्मा, सर्वेषां भारतीयधर्माणां संप्रदायानां चाधारः। आपाततः परस्परं विरुद्धत्वेन

---

१. भारतीयसंस्कृतिविषये विशेषाध्ययनार्थं ग्रन्थकर्तुः 'भारतीय संस्कृति का विकास' नामकग्रन्थो द्रष्टव्यः।

प्रतीयमानेष्वपि शैवशाक्तवैष्णवजैनबौद्धादिसंप्रदायेषु परस्परं य आन्तरः संबन्धस्तस्य मूलं तेष्वेकसूत्ररूपेण ओतप्रोता भारतीया संस्कृतिरेव। "स यथा सर्वासामपां समुद्र एकायनम्" (बृहदारण्यकोपनिषदि २।४।११), एवं सर्वेषां भारतीयसंप्रदायानां भारतीयसंस्कृतिरेकायनम्।

भारतीयसंस्कृतेस्तत्तत्संप्रदायानां च परस्परं पोष्यपोषकभावरूपः संबन्धः। एकतः सा तानाप्याययति, अपरतस्ते तां पोषयन्ति। अत एव "इदं सत्यं सर्वेषां भूतानां मध्वस्य सत्यस्य सर्वाणि भूतानि मधु" (बृह० उप० २।५।१२) इति श्रुतिमनु "इयं भारतीयसंस्कृतिः सर्वेषां भारतीयसंप्रदायानां मध्वस्याः संस्कृतेः सर्वे संप्रदाया मधु" इदमपि सुतरां वक्तुं शक्यते।

इयं हि यद्यपि तत्तत्संप्रदायेषु व्याप्ता, तथापि न तैरस्याः स्वरूपं परिसमाप्यते। किञ्च, तत्तत्कालभेदेन तत्तदवस्थितिभेदेन च भिन्नापि, गङ्गाया धारेव सततं प्रगतिशीलापि, सा एकसूत्ररूपेण वर्तमाना स्वस्या एकात्मतां पवित्रतां च न जहाति। अत एव भारतवर्षे चिराय प्ररूढासु, अस्माकं दास्यकाले च सुतरां प्रवृद्धासु, अनुदारसांप्रदायिकभावनासु विद्यमानास्वपि, तत्त्वविदो विचारशीला विद्वांसः "परोक्षप्रिया हि देवाः प्रत्यक्षद्विषः" इति श्रुतेरादेशमनुसरन्त इव तेषु तेषु संप्रदायेषु व्यापिन्या एकस्या भारतीयसंस्कृत्या भावनयैव भावितचित्ता उदारहृदयाः सर्वत्र

समदृष्टयो न कुत्रापि संप्रदाये पक्षपातिनो भवन्ति, न चान्यायेन व्यवहरन्ति ।

## भारतीयसंस्कृतेः स्वरूपम्

तस्या एतस्या आसेतुहिमालयम् "आ समुद्रात्तु वै पूर्वादा समुद्रात्तु पश्चिमात्" ( मनु० २।२२ ) परःशतेषु संप्रदायेषु प्रविभक्तायाः, परःसहस्रेभ्यश्च वर्षेभ्यो लोकोत्तरप्रतिभान[1]वद्भिराचार्यैर्महात्मभिश्च जगद्धितसंपादनकामनयैवाभिवृद्धिं नीतायाः, साम्प्रतं च चतुर्दिशम् "**इन्द्राग्नी ता हवामहे**"(ऋग्०१।२१।३),"**सवितारमुपह्वये**" ( ऋग्० १।२२।५ ) इत्याद्यनुसारं देवतारूपेण समाहूयमानाया भारतीयसंस्कृतेः किं स्वरूपं किं वा वैशिष्ट्यमिति महति प्रश्ने समासत एव तत्समाधानमिह प्रदर्श्यते ।

(१) भारतीयसंस्कृतेः स्वरूपावधारणप्रसङ्गे प्रथमं पदमवगाहते **आध्यात्मिकी भावना** । एषा हि तस्या अधिष्ठानं हृदयमात्मैव वा । तिलेषु तैलमिव, पुष्पे सुगन्ध इव, क्षीर आज्यमिव, प्राणिषु प्राणा इव, शरीरे रक्तमिव वा इयं हि तस्याः सर्वं स्वरूपमभिव्याप्य तिष्ठति । मणिमालायां मेरुमभितो मणिगणा इव आध्यात्मिकीं भावनामभितस्तस्या अन्ये गुणा अभिवर्तन्ते । सैव तत्सूत्रं येन वै भारतीयसंस्कृतेः सर्वाण्यन्यानि रूपाणि

---

१ प्रतिभानं प्रतिभा ।

संदृब्धानि[1] भवन्ति । एषैव तानि सर्वाणि यमयति[2] । सब्राह्मणोपनिषत्का वेदाः, स्मृतयः, पुराणानि, बौद्धानां जैनानां चागमाः, महात्मनां वचांसि, अन्यद्वा भारतीयं वाङ्मयं सर्वमप्याध्यात्मिक्या भावनया साक्षादसाक्षाद्वा ओतप्रोतम्। असंख्यानां भारतीयमहात्मनां मुनीनां साधूनां च जीवनान्यस्या एव निदर्शनानि ।

कीदृग्रूपा पुनरियमाध्यात्मिकी भावनेति चेत्, "परोक्षप्रिया हि देवाः प्रत्यक्षद्विषः", "कश्चिद्धीरः प्रत्यगात्मानमैक्षदा[3]वृत्तचक्षुरमृतत्वमिच्छन्" (कठोपनिषदि २।१।१), "श्रेयो हि धीरोऽभि प्रेयसो वृणीते प्रेयो मन्दो योगक्षेमाद् वृणीते"[4] (कठो० १।२।२), "पञ्ञापासादमारुय्ह असोको सोकिनिं पजं । पब्बतट्ठो' व भूम्मट्ठे धीरो बाले अवेक्खति ॥"[5] (धम्मपद २।८) इत्यादिश्रुतिस्मृत्यनुसारं सततं संसरणशीले क्षणपरिणामिनि संसारे आपातरम्यां पर्यन्तपरितापिनीमैन्द्रियिकां तात्कालिकीं च प्रवृत्तिं विहाय

१. संदृब्धानि संग्रथितानि । स्रगिव सूत्रेण विदृब्धानि ।

२. यमयति नियमयति ।

३. प्रत्यगात्मानमन्तरात्मानम् । ऐक्षत् पश्यतीत्यर्थः । छन्दसि कालानियमात् ।

४. धीरो बुद्धिमान् प्रेयसः प्रियतरपदार्थानामपेक्षया श्रेयो वस्तुतः कल्याणम् अभिवृणीते । मन्दोऽल्पबुद्धिस्तु योगक्षेमात् । तन्निमित्तमित्यर्थः । प्रेयो वृणीते ।

५. प्रज्ञाप्रासादमारुह्य अशोकः शोकिनीं प्रजाम् । पर्वतस्थ इव भूमिस्थान् धीरो बालानवेक्षते ॥ इति संस्कृते ।

यत्किंचित्स्वभाववतोऽप्यात्मनः कल्याणकामनया धीरधीभिरेवाव-लम्बनीया अन्तर्वृत्तिरूपा दीर्घदृष्टिरेव सा इत्येव वक्तुं शक्यते।

सा चैषा आध्यात्मिकी भावना समाना सर्वेष्वपि भारतीय-संप्रदायेषु। अन्यत्सर्वमधस्ताद् वर्णितं भारतीयसंस्कृतेः स्वरूपं वस्तुतोऽस्या एव विस्तरो व्याख्यानं वा।

(२) आध्यात्मिकीं भावनामनु समायाति **पारलौकिकी भावना**। आपातरम्ये पर्यन्तपरितापिनि ऐन्द्रियके जीवनेऽनास्था, आत्मनः कल्याणकामना च स्वत एव 'अयमेव लोको न पर' इति भावनाया विरोधिन्यां पारलौकिकभावनायामेव विश्रान्तिं लभेते।

न केवलमयमेव लोकः, किन्तु परोऽपि लोको मनुजेनावेक्षणीयः, अस्ति एव सुकृतस्य दुष्कृतस्य वा कर्मणः फलमिह परजन्मनि वेति दृढो विश्वास एव पारलौकिकी भावना।

तां विना को नु क्षणस्थायिनि सततं संसरणशील इह जीवने शान्तिभाग् भवेत्। एतयैव प्रेरिता भारतीया वीरा रमण्यश्च स्वधर्मस्य स्वदेशस्य च रक्षार्थं हसन्त एव सर्वस्वं प्राणानपि चोत्सृजन्तो भारतीयेतिहासे दृश्यन्ते। सा चैषा पारलौकिकी भावनापि सततमस्मान् कर्तव्यपालनाय प्रोत्साहयन्ती अमूल्यं रत्नमिव भारतीय-संस्कृतेः।

(३) कर्तव्यपक्षेऽपि वर्णनातीतमेव भारतीयसंस्कृतेः स्वरूपम्। तत्र **आत्मसंयम**स्तावत्प्रथमं पदमधितिष्ठति। नानाविधव्रतोपवा-

सादिबहुलेन तत्तत्सांप्रदायिकाचारेण, कृच्छ्रातिकृच्छ्रचान्द्रायणादि-विधानेन च आत्मसंयमस्यैव भारतीयसंस्कृतावनन्यसदृशं महत्त्वमाख्यायते।

पुरुषार्थचतुष्टयसाधकेषु चतुर्ष्वाश्रमेषु यद् ब्रह्मचर्यस्यानन्य-साधारणं प्रमुखं स्थानं तदपि भारतीयसंस्कृतावात्मसंयमस्यैव वैशिष्ट्यं प्रख्यापयति। नैतदहेतुकं यत्पृथिव्यां विभिन्नसभ्यतासु केवलं भारतीयसंस्कृतावेव ब्रह्मचर्यस्य एकतमाश्रमत्वेन स्थापना तस्याद्वितीयमहत्त्ववर्णनं च दरीदृश्यते। कस्याविदितं यद् भीष्म-पितामहसदृशादर्शब्रह्मचारिणां जन्मभूमिरपि भारतमेव।

आध्यात्मिकभावनाधारिण्यां सिक्तायामेव भूमौ पुनरस्यात्म-संयमस्य संभव इति न व्याख्यामपेक्षते। वस्तुतस्तु यमनियमा-दीनि सर्वाण्यपि बाह्याभ्यन्तरशुचितासाधनानि आत्मसंयमस्यैव प्रपञ्चः।

(४) आत्मसंयमादनन्तरं तस्यैव सद्विलास इव भारतीयसंस्कृते-रपरं वैशिष्ट्यं **मातृशक्तेः संमाननं** नाम। भारतीयसंस्कृतेर-साधारणं माहात्म्यमेतत्कृतमेव। विश्वप्रपञ्चस्य मूलकारणभूतामाद्यां महाशक्तिं "या देवी सर्वभूतेषु मातृरूपेण संस्थिता" ( दुर्गासप्तशती ५।७१ ) इत्येवं मातृरूपेण चिरात्संभावयन्त्या, "तव देवि भेदाः स्त्रियः समस्ताः" ( दुर्गा० ११।६ ) इत्येवं च तां निध्यायन्त्या भारतीयसंस्कृत्या मातृशक्तेर्विशेषतः संमानः स्वाभाविक एव। परं नियतमेतद्वैशिष्ट्यमखिलेऽपि संसारेऽसाधारणम्। "मातृवत्परदारेषु"

इति नीतिकृद्भिरभ्युपगतः सिद्धान्तो व्यवहारेऽपि परस्त्रीषु परदारिकासु च मातः! भगिनि! पुत्रि! इत्यादिशब्दान् प्रयुञ्जानैर्वस्तुतः परिपाल्यते भारते पामरैरपि जनैः। किं बहुना, विशेषतो भगवत्याः सीताया देव्या[१] द्रौपद्याश्चापमानपरिमार्जनार्थं प्रवृत्तयो रामायण-महाभारतयोर्निर्माणमपि उपर्युक्तसिद्धान्तनिदर्शनार्थमेव जातमिति मन्ये। ततश्च स्त्रीजातेः संमानभावनाप्यस्माकं भारतीयसंस्कृतेर-वर्णनीयं वैशिष्ट्यमिति निर्विवादम्।

(५) **परस्परं विचारसहिष्णुतापि** अपरं वर्णनार्हं वैशिष्ट्यं भारतीयसंस्कृतेः। सामाजिकाचारेष्वपेक्षितेऽपि प्रायेण व्यक्तीनां साम्ये, विचारविषये सर्वेषां स्वातन्त्र्यं चिरादेवाभिमतमासीद् भारतीयानाम्। परस्परं विचारसहिष्णुतामन्तरेण न तत्प्रथत इति साप्यावश्यकत्वेनाङ्गमस्मत्संस्कृतेः। अत एव ईश्वरानीश्वरवाद-वेदपौरुषेयत्वापौरुषेयत्ववाद-वाममार्गदक्षिणमार्गादिभेदानां परस्परं सहिष्णुतया संस्थितिर्न कस्याप्यविदिता भारते। अत एव च विशुद्ध-भारतीयेतिहासे विदेशेतिहासेष्विव धर्मभेदासहिष्णुतामूलकस्य रक्तपातस्य नामापि न श्रूयते। नृशंसन(=मनुष्यहिंसा)विरोध-प्रतिपादकस्य महाभारतादिप्राचीनग्रन्थेषु श्लाघनीयगुणत्वेनास-कृद्वर्णितस्य आनृशंस्यस्याप्यन्ततो मनुष्यत्वस्य समादररूपायां परस्परं विचारसहिष्णुतायामेव पर्यवसानं भवति।

---

१. तु० "काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत्।" (वाल्मीकि-रामायणे १।४।७)

व्यक्तिस्वातन्त्र्यरूपा वा मनुष्यत्वस्य संमानरूपा वा एषा विचारसहिष्णुतैव वस्तुतो जैनानामनेकान्तवादसिद्धान्तस्य मूलम्। विभिन्नशास्त्रेषु जैनाद्यागमेषु चोपसंगीतगौरवाया अहिंसाया अपि अन्ततस्तत्तच्चेतनव्यक्तीनां स्वव्यक्तित्वविकासार्थमवाधस्वातन्त्र्यमेवाभिप्रायो निष्पद्यते। अत एव भारतीयेतिहासे बलात्कारकारणाद् धर्मान्तरग्रहणस्य वार्ता अश्रुतचरी एव। तदत्र मौलिको भेद आर्यसंस्कृतेरितरसंस्कृतिभ्यः।[१]

## भारतीयसंस्कृतेः स्थानमद्यतनीये जगति

तदेवमाध्यात्मिकभावनाया आधारेण पारलौकिकी भावना, आत्मसंयमः, मातृशक्तेः संमानः, परस्परं विचारसहिष्णुता चेत्यादिरूपैरसाधारणैर्व्यष्टेः समष्टेश्चोदात्ततायाः कल्याणस्य च संपादकैर्गुणैरचिता इयं नो भारतीयसंस्कृतिर्नूनं स्वरूपत एव सकललोककल्याणसाधनक्षमा। अत एव मानवीयधर्मेणानर्थान्तरतया "जातिदेशकालसमयानवच्छिन्नाः सार्वभौमा महाव्रतम्" (योगसूत्रे २।३१) इत्यनुसारं सार्वभौमधर्मस्यैव नामान्तरम्।

लोककल्याणमेव कामयमानैर्ऋषिभिर्मुनिभिराचार्यैश्च प्रायोऽविच्छिन्नरूपेण संपोषितायाः, "मित्रस्य चक्षुषा समीक्षामहे" (यजुर्वेदे

१. तत्रैतौ संग्रहश्लोकौ भवतः—

भावना परलोकस्य संयमोऽध्यात्मभावना।
ब्रह्मचर्यमहिंसा च मातृशक्तेः समादरः॥
संस्कृतेर्भारतीयायास् तत्त्वमाहुर्मनीषिणः।
मौलिकं, तत्प्रपञ्चस्तु बहुलः कालभेदतः॥

३६।१८), "असतो मा सद् गमय। तमसो मा ज्योतिर्गमय। मृत्योर्माऽमृतं गमय" (बृहदारण्यकोपनिषदि १।३।२८) इत्याद्युपदेशामृतैश्च भरिताया अस्याः स्वभावत एव सार्वभौमधर्मरूपत्वे नहि किञ्चिदाश्चर्यम्। अत एव च "कृण्वन्तो विश्वमार्यम् (ऋग्वेद० ९।६३।५), "एतद्देशप्रसूतस्य सकाशादग्रजन्मनः। स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः॥" (मनुस्मृतौ २।२०) इत्याद्युद्घोषास्तस्याः संस्कृतेः संगच्छन्ते। तत्कृत एव च तस्याः कल्याणकारी प्रभावोऽद्यापि सुदूरदेशदेशान्तरेषु, विशेषतश्च बृहत्तरभारतप्रदेशेषु, समुपलभ्यते।

तस्या एतस्याः सांप्रतिके, एकतो नानासंघर्षैरुद्विग्ने, अपरतो जगद्विजिगीषाराक्षस्या समाक्रान्ते, अन्यतः पारस्परिकविद्वेषाविश्वासस्त्रासैः कदर्थिते, क्वचिच्चाद्यापि सभ्यताप्रकाशेन रहिते जगति कीदृशी उपयोगितेति विषये किमु वक्तव्यम्? स्वत एव स्पष्ट एषोऽर्थो नैव हेतुवादैः साध्यतामपेक्षते। **नूनं भारतीयसंस्कृत्यधीनमेव परित्राणं समन्तात् खिन्नस्य जगतः।**

## तस्याः सांप्रतिकी दुरवस्था

सत्यप्येतादृशे लोकोत्तरमहिमशालिनि भारतीयसंस्कृत्याः स्वल्पे वृत्ते च, तस्या भारत एव साम्प्रतिकी दुरवस्था कस्य नाम मनस्तापं न तनुते? चिरादेव जीर्णशीर्णगात्रा सा साम्प्रतं सत्यं मुमूर्षुरिव प्रतीयते। यत्र कुत्रापि दृष्टिर्निःक्षिप्येत तत्रैव सा सुप्तेव,

विलुप्तेव, अथवा विलोपनोन्मुखी एव दृश्यते। सर्वेष्वस्माकं व्यवहारेषु, जीवनक्षेत्रेषु, गृहजीवने, सामाजिकजीवने, विश्वविद्यालयेषु, अन्यत्र वा तस्या आदर्शानां स्वल्पस्य च प्रायेण प्रातिकूल्यमेव दृष्टिपथमापतति।

तस्या आध्यात्मिकताया मौलिक आधार एव तावत् प्रस्खलित इव, शिथिलित इव, उन्मूलित इव वा संजातः। "सं गच्छध्वं सं वदध्वम्" (ऋग्० १०।१९१।२) इतिश्रुतेरादेशानुसारं समष्टिहितसंपादन एवात्महितबुद्धेर्दीर्घदृष्टिमपहाय समाजविद्वेषिण्यामन्धस्वार्थकामनायामेव निमग्नाः, सात्त्विकभावनाः समुत्सृज्य रजस्तमोऽभिभूताः, स्वकर्तव्यपालनविमुखा निरन्तरमधिकारलिप्सयैवोह्यमानाः, "ईहन्ते कामभोगार्थमन्यायेनार्थसंचयान्।......इदमद्य मया लब्धमिमं प्राप्स्ये मनोरथम्" (भ० गीता० १६।१२–१३) इत्येवम् "आत्मसंभाविताः स्तब्धा धनमानमदान्विताः" (भ० गीता० १६।१७) जगतोऽहितायैव प्रायेण प्रवृत्ता मन्ददृष्टयो वयं स्पष्टं नितरां प्रतिकूला आध्यात्मिकभावनायाः।

एवं भारतीयसंस्कृत्या आधार एव समुन्मूलनोन्मुखे का कथा तस्यास्तत्तद्विशेषाणाम्। तथा च आत्मसंयमस्थाने नग्नोच्छृङ्खलतायाः, विचारसहिष्णुतायाः स्थाने सांप्रदायिकविद्वेषिताया वर्गसंघर्षस्य च साम्राज्यमभितो दरीदृश्यते। औदरिका इव 'रोटी रोटी' इति विपुलं क्रन्दन्तोऽपि सुदूरमेव ततः क्रमशो नीयमानाः, वस्त्राद्यावश्यकसामग्रीविहीनाः, सर्वविधानुशासनहीना इव स्वकर्तव्यपालनविषये,

'स्त्रियः स्वतन्त्राः' इत्येवमापाततस्तासां हितं चिकीर्षन्तोऽपि दम्पत्योरकृत्रिमं स्नेहमुन्मूल्य गृहे गृहेऽशान्तिवातावरणोत्पादनपराः, चिरपरम्पराप्ररूढं गुरुशिष्ययोः पवित्रसम्बन्धं कलुषीकुर्वन्तो वयमसंशयं भारतीयसंस्कृतेः सुदूरमुपनीता इव साम्प्रतम् ।

## सांप्रतिका भारतीयविश्वविद्यालयाः

यथा ह वै कस्मिन्नपि देशे राष्ट्रे वा तत्तद्वस्तूनि तत्तद्यन्त्रालयेषु निष्पाद्यन्ते, एवं वात्र तत्रत्यायाः सभ्यतायाः संस्कृतेर्वा अभिवृद्धिः परिपुष्टिर्वा तत्रत्येषु विद्यालयेषु विशेषतश्च विश्वविद्यालयेषु जायते । तत्परीक्ष्यतां तावदस्मदीयानां विश्वविद्यालयानामेव दृष्टिरवस्था चैतस्मिन् विषये । सत्यामपि नानाविधायां स्पृहणीयायां तेषां समुन्नतौ, सत्यपि च निर्विवादं तेषामस्माकं सहुन्नतौ स्वतंन्त्रताप्राप्तौ च महत्युपकारे, को नाम प्रभवेत् प्रत्याख्यातुं यत्तेषामा जन्मतः सर्वापि प्रवृत्तिः सर्वेऽप्यादर्शा आमूलचूडं विदेशप्रभवा एव । भारतीयसंस्कृतेर्भवतु नामाध्ययनाध्यापनं यत्र कुत्रचिद् विशेषविषयरूपेण, तच्चाप्यङ्गुलिनिर्देश्यैश्छात्रैः; परं निश्चितं केनाप्यद्य यावन्नैव प्रयतितं भारतीयसंस्कृत्याधारेण तान् प्रतिष्ठापयितुम् । प्रायेण भारतीयवाङ्मयस्य संस्पर्शेनापि विहीनास्तत्रत्याश्छात्रा अध्यापकाश्च भारतीयसंस्कृतेरादर्शेभ्यः पराङ्मुखा इति न किमप्याश्चर्यम् । अत एव च्छात्रोच्छृङ्खलतया कदर्थनामनुभवतामध्यापकानाम्, निर्व्याजविद्यापरायणतामुत्सृज्य प्रधानतोऽर्थोपार्जनपराणामध्यापकानामुपेक्षाभावेन खिन्नानां छात्राणां च

पारस्परिकसंबन्धस्यादर्शहीनता कं न तापयति भारतीयसंस्कृतेः कल्याणानुवन्धिष्वादर्शेषु श्रद्धावन्तं जनम्। एतस्यैव परिणामोऽयं यदद्यत्वेऽहरहः सुप्रसिद्धविश्वविद्यालयेष्वपि छात्रेभ्योऽप्यध्यापकानां भयस्य, छात्राणां स्वाभीष्टप्रतिघातमूलकस्य तात्कालिकस्याध्ययनाद्विरामस्य, तैरेव न केवलमध्यापकानां किन्तु विश्वविद्यालयप्रधानाधिकारिणामप्यनादरस्य च संवादाः समाचारपत्रेषु दृश्यन्ते।

परदारेषु परदारिकासु च मातृबुद्धिं स्वसृबुद्धिं दुहितृबुद्धिं वा शास्त्रतो व्यवहारतश्च प्रतिपादयति भारतीयसंस्कृतिः। परं तद्विरुद्धमेवास्माकं विश्वविद्यालयेषु च्छात्राणामभद्रो व्यवहारो भारतीयसंस्कृतेस्तु सर्वथा प्रतिकूल एव; भारतीयसंस्कृतेरपरिचितस्यान्यस्यापि कस्यचित्सोऽभिमतो भवेदिति महान्नः सन्देहः।

प्राचीनभारते नैकविधतपस्यया जीवनं निर्वहतां छात्राणां ब्रह्मचर्यं शृङ्गारभावनाराहित्यं सौम्यत्वं मातापित्रोरैश्वर्यशालित्वाशालित्वविचारमप्युत्सृज्य कृष्णसुदाम्नोरादर्शमनु परस्परं भ्रातृभावेन गुरुशुश्रूषया च वर्तनं कस्याविदितं भारतीयसंस्कृतीतिहासविदः। सर्वमेतद्विपर्यस्तमिवाद्यत्वे विद्यासंस्थास्विति नापेक्षते विशेषविवरणम्। शिक्षाया अतीव व्ययसाध्यत्वम्, स्वास्थ्यस्य निर्हासः, कस्या अपि निश्चितायाः सन्ध्यावन्दनादिसहकारिण्या दिनचर्याया अभावः, सर्वमेतदेतत्कृतमेव।

अत एव सांप्रतं भारतीयविश्वविद्यालयेषु भारतीयसंस्कृतेस्तु का कथा; प्रायेण साकल्येन तद्विरुद्धमेव वातावरणम्। भाषाया

भावानां भोजनाच्छादनयोरपि च दृष्ट्या प्रायेणाभारतीयं वर्तनं तत्र।

तदेवमस्माकं विद्यास्थानेभ्य एव बहिष्कृता भारतीया संस्कृतिः कथमन्यत्र राष्ट्रियजीवने समाश्रयं लब्धुं क्षमा भवितुमर्हति। कथं च तस्या दुरवस्था अपरिहेया न भविष्यतीति सर्वथैव दौर्भाग्यं तस्याः। प्रतिवर्षं देशालङ्कारभूतैर्महाभागैर्दीक्षान्तसमारम्भेषु विचारगभीरेषु अभिभाषणेषु क्रियमाणेष्वपि नूनं हृदयतापकरी भारतीयसंस्कृतेरियं दुर्दशा।

## भारतीयसंस्कृतेः समुद्धारः

तदेवमस्याः, प्राचीनकाले व्याप्तदूरदेशदेशान्तरायाः, सांप्रतं पुनः स्वदेशेऽपि दुरवस्थाग्रस्तायाः जीवितसंशयं चोपेतायाः भारतीयसंस्कृत्याः, न केवलं राष्ट्रियजीवन एव "अभयं सत्त्वसंशुद्धिः" (भ० गीता १६।१) इत्यादेर्दैव्याः संपदः परिपोषिकायाः परिस्थितेरुत्पादनार्थम्, किन्तु तत्तद्व्यक्तिगतव्यवहारेष्वपि निर्व्याजमाधुर्यभावानामुत्पत्तये सद्यः समुद्धारोऽपेक्षितः। अत एव राष्ट्रस्यात्मनः समुद्गतं तदन्तर्नादरूपमाह्वानमिवैष भारतीयसंस्कृतेरुद्घोषः समन्तात् साम्प्रतं श्रूयते।

तत्कोऽभ्युपायस्तस्याः समुद्धारस्येत्येव महान् प्रश्नः।

तत्र तावदिदमवधारणीयं यत्सत्यामपि चिरकालतोऽत्यन्तं प्रतिकूलायां परिस्थितौ भारतीया संस्कृतिरद्यापि न सर्वथैव समुच्छिन्ना। जागर्त्येव सा समष्टिरूपेण भारतीयजनताया अन्त-

हृदये मूकभावनासु च। ततः सर्वतः प्रथममावश्यकता यत्तस्या अन्तरात्मन आविष्करणं नाम। तच्च तस्या दीर्घपरम्पराया अध्ययनेनैव साध्यम्। तदर्थं च केवलमेकमात्रं साधनं यदिदं संस्कृतं देववाणी वा।

कस्यैतदविदितं यत् संस्कृतं हि भारतीयसंस्कृतेः शरीरम्। परःसहस्रवर्षेभ्यः समागतायाः, परिस्थित्यनुसारं तत्तत्संप्रदाय-प्रभावाद्वा तत्तद्राजनीतिकप्रभावाद्वा नानावस्था उपभुञ्जानाया अपि अन्तर्वर्तिनीमेकसूत्रतां संदधानाया भारतीयसंस्कृतेः स्वरूपावगमाय देववाण्या विस्तृतं, प्रायेण भारतीयेतिहासकालस्य समव्यापि, वाङ्मयमेव मुख्यं साधनम्।

चिरन्तनकालादेवायुतसिद्ध इव संवन्धो भारतीयसंस्कृत्या सह संस्कृतस्य। भारतीया संस्कृतिरिव संस्कृतभाषापि चिरादेव समानरूपेण समाश्रिता परिपुष्टा च विभिन्नसंप्रदायैः। अद्यत्वेऽपि विभिन्नभाषाभाषिप्रान्तेषु विभिन्नधार्मिकसंप्रदायेषु च संस्कृतभाषैव सांस्कृतिकीमेकसूत्रतां संपादयति। कस्य तिरोहितं यदद्यापि यावद्भारतमार्याणां धार्मिकं कृत्यं प्रायेण संस्कृतद्वारैव संपाद्यते। अद्यापि च दिष्ट्या भारतीयभाषासु केवलं संस्कृतमेव आसेतुहिमा-लयम् आपूर्वापरसमुद्रं च परस्परव्यवहारसाधनम्।

ततश्च निर्विवादं भारतीयसंस्कृतेः समुद्धारस्य मुख्यतमं साधनं संस्कृतमेव।

परमहर्षस्यायं विषयो यत् साम्प्रतमेव भारतीयसंविधानपरिषदा भारतीयमुख्यभाषास्वेकतमत्वेन संस्कृतम्, देशस्य भारतेति नाम च स्वीकृतम्। तदुभयमप्यतीव महत्त्वावहम्। उभयोरप्येष एवाभिप्रायो यत्प्रथमं तु तत्तत्प्रान्तभेदेन तत्तद्भाषादिभेदेन चापाततो भिन्नमप्यस्माकं राष्ट्रमेकात्मताया अनुभवार्थं व्याकुलमिति। द्वितीयम्, कालभेदेन विभिन्नावस्था अनुभवदपि तत् स्वकीयसांस्कृतिकपरम्पराया अन्वयेनैव स्वकीयां भाविनीमुन्नतिं कर्तुकाममिति। शब्दान्तरेषु, भारतीयसंस्कृतेः परम्परामनुसृत्यैव वयमग्रे समुन्नतिपथेन गन्तुकामा इति।

## संस्कृतज्ञानां विशेषावसरः कर्तव्यं च

स एष परःशतवर्षेभ्यो निरन्तरमभिवर्धमानाः प्रतिकूलपरिस्थितीः सहमानानां **संस्कृतज्ञानामतर्कितोपनतः शुभावसरो यद् भूयोऽपि भारतं स्वतन्त्रम्**, भूयोऽपि च भारतीयसंस्कृतेः समुद्धारस्योद्घोषश्चतुर्दिशं श्रूयते, यत्रापि भारतीयसंस्कृतेर्निर्वाहिकायाः संस्कृतभाषाया भारतस्यैकतमप्रधानभाषात्वेन स्वीकृतिः।

परं तेषामेष शुभावसर एव संस्कृतज्ञानां शिरःसु महान्तं कर्त्तव्यभारमापातयति। सांप्रतिकदुरवस्थाया गर्ताद् देववाणीमुद्धृत्य तद्द्वारा विविधनूतनविचारसंघर्षसमाकुलेऽद्यतनीये जगति भारतीयसंस्कृतेः समुद्धारो नाम नहि सुकरं कार्यम्।

नियतमेव संस्कृतभाषायाः संस्कृतज्ञानां च वर्तमानां लोकेन

सर्वथोपेक्षितामिवावस्थां पश्यतः सुतरां दुर्वहता संस्कृतज्ञैरुपर्युक्तभारस्य प्रतीयते ।

**सांप्रतिकजगति जीवनयात्रायां** या खलु देववाण्याः संस्कृतज्ञानां वा स्थितिः कस्य सा न विदिता ? नहि देववाण्याः प्राचीनकाल इव सामान्यजनतायां प्रचारः, उपयोगो वा सामान्यलोकव्यवहारे । नहि जीवनयात्रायां राष्ट्रस्य वा विभिन्नविभागेषु संस्कृतज्ञानस्य काचिद् विशेषापेक्षा । नहि संस्कृतज्ञानां प्राचीनकाल इव सर्वथा सुखेनैव जीवननिर्वाहः । नापि जनतायाः पुरोयायित्वं नेतृत्वं वा । ततश्च उपेक्षिता इव सांप्रतिकजगति, कथं कथमपि च स्वजीवननिर्वाहं कुर्वाणाः संस्कृतज्ञाः कथमिव पूर्वोक्तं दुर्वहभारं वोढुं समर्था भवेयुरिति "प्रांशुलभ्ये फले लोभादुद्बाहुरिव वामनः" इति न्यायेन युक्तियुक्तः संदेहस्तेषामेव मनसि, किं पुनरन्येषाम् ।

सत्यामेतस्यां परिस्थितौ संस्कृतज्ञानामिदमेव सर्वतः प्रथमं कर्तव्यत्वेन समायाति यद् देववाण्यास्तद्विदां चावस्थाया वास्तविकी समुन्नतिः परिष्कारश्चेति । तदेतत्कथमिव साधयितुं शक्यते तैरित्येव दिङ्मात्रेणावस्तात् प्रदर्श्यते ।

## आत्मपरीक्षणं लोकप्रगतेर्ज्ञानं च

**आत्मपरीक्षणं हि नाम मनुष्यस्य प्रथमं समुन्नतेर्मूलम् ।** तद्धि कार्यकर्तुरात्मविश्वासमुपजनयति । विशेषतः स्वकर्तव्यस्य

निर्धारणात् प्राग् मनुष्येण तदपेक्ष्यते। तत्र प्रथमं तावत्संस्कृतज्ञैरवेक्षणीयं यत्तेषां सांप्रतिक्या अवस्थाया उत्तरदायित्वं तेषामप्युपरि। न केवलं लोक एवात्र दोषभाक्। सत्यं तेषामुपेक्षा तत्तत्क्षेत्रेषु। किं तत्र लोक एवापराध्यति? यद्येवम्, किं तैरपराद्धं लोकस्य? किं सा उपेक्षा न तेषामेवानधिकारित्वमूला? किं तेषां साम्प्रतिकी शिक्षा तत्तत्कार्यक्षेत्रे तेषां नेतृत्वसंपादनायालम्? किं ते निरन्तरं परिवर्तिन्या लोकावस्थित्या परिचिताः? न चेत्, त एवात्रापराध्यन्ति न तु लोकः। परिचिताश्चेत्, किमिव राष्ट्रेण तेषां नेतृत्वं न स्वीक्रियते?

यथा तथा वा भवतु, परं नात्र वैमत्यं यत्संस्कृतज्ञाः साम्प्रतं नूनमात्मनोऽवमाननारोगेणाक्रान्ता इव, किंकर्तव्यविमूढा इव, सांख्यशास्त्रीयराजपुत्रन्यायेन स्वरूपमजानाना इव, देववाण्याः प्राचीनगौरवगाथां विस्मरन्त इव, केवलं साधारणातिसाधारणपदानां प्राप्त्यर्थमेव प्रयत्नपरा दृश्यन्ते। संस्कृतज्ञानेन सह लौकिकोन्नतेः कश्चित् प्रातिस्विको विरोधः, अत एव लौकिकोन्नतिदृष्ट्या संस्कृतज्ञानोपार्जनं कश्चिदपराध इतीव तेषामान्तरो विश्वासः प्रतीयते। 'संस्कृतज्ञाः सन्तोऽपि वयम्' इत्यस्य स्थाने 'संस्कृतज्ञत्वकारणादेव वयम्' राष्ट्रस्य तत्तद्विभागेषु न केवलं कार्यकर्तार एव, किन्तु अध्यक्षा अपि, संचालका अपि, नेतारोऽपि भवितुमर्हा इत्येष विचारस्तु तेषां मनःसु प्रायेणावकाशमेव न लभते।

सर्वमेतन्न केवलं देववाण्या, वास्तविकस्वरूपस्यैतिहा-

सिकवृत्तस्य च किन्तु लोकप्रगतेर्लोकावस्थितेश्चाप्यपरिज्ञानमूलकमेव ।

"अहं राष्ट्री संगमनी वसूनाम्", 'यं कामये तं तमुग्रं कृणोमि" ( ऋग्० १०।१२५।३,५ ) इत्यादिश्रुतिशिरोवाग्भिरुपगीतगुणा,

आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च शाश्वती ।
विद्याश्चतस्र एवैताः – – – –

इत्येवमान्वीक्षिक्या त्रय्या च सहैव "वार्त्ता च सर्वजगतां परमार्तिहन्त्री" ( दुर्गासप्तशत्याम् ४।१० ) इत्यनुसारं सर्वजगतां परमार्तिहन्त्या वार्तायाः,"आन्वीक्षिकीत्रयीवार्तानां योगक्षेमसाधनो दण्डः । तस्य नीतिर्दण्डनीतिः । – – – – तस्यामायत्ता लोकयात्रा" ( अर्थशास्त्रे १।४ ) इत्येवं लोकयात्रायै प्रधानसाधनभूतायाः शाश्वत्या दण्डनीतेश्च प्रतिपादनपरा,

यद्यत्स्याद्वाचिकं सम्यक् कर्म विद्याभिसंज्ञकम् ।
शक्तो मूकोऽपि यत्कर्तुं कलासंज्ञं तु तत्स्मृतम् ॥
( शुक्रनीतिसारे ४।३।२५ )

इत्येवं लक्षितानां द्वात्रिंशतो विद्यानां चतुःषष्टेः कलानां च प्रदर्शनपरा,

पठन् द्विजो वागृषभत्वमीयात्
स्यात् क्षत्रियो भूमिपतित्वमीयात् ।

वणिग्जनः पण्यफलत्वमीयाज्
जनश्च शूद्रोऽपि महत्त्वमीयात् ॥
(वाल्मीकिरामायणे १।१।१००)

इत्येवं च राष्ट्रस्य सर्वेषामप्यङ्गानां कल्याणकामनाभावैरुपेता देववाणी प्राचीनभारते, न केवलं मेत्तावृत्तेरेव, न वा केवलमैश्वर्य-मदमत्तानामविवेकिनामतिशयोक्तिपूर्णैः प्रशस्तिशतैर्मनोविनोदस्यैव साधनमासीत्, किन्तु राष्ट्रजीवनोपयोगिषु सर्वेष्वपि विभागेषु सर्वेषु च कार्येषु पुरोयायित्वस्य पौरोहित्यस्य ( पुरोऽग्रे हिताः स्थापिताः पुरोहिताः, नेतार इत्यर्थः। तेषां भावः कर्म वा पौरोहित्यम्) मार्गप्रदर्शकत्वपदस्य च प्राप्तेरपि एकमात्रं साधनमासीदिति प्रायेण नानुभवामो वयं संस्कृतज्ञाः।

किञ्च, व्यवहारोपयोगिनीनां लोकप्रगतेर्लोकावस्थितेश्च परिचायिकानां विद्यानामध्ययनं भीतानामिव, समुद्विग्नानामिव, दूरतः परित्यजतामस्माकं संस्कृतज्ञानां लोकस्योपेक्षापि समुन्नतौ महानन्तराय इति कस्य तिरोहितं विपश्चितः। लोकप्रगतिर्हि नदीव सततमग्रगामिनी न जातु एकावस्थायामेव संतिष्ठते। ऋतूनामिव तस्या अपि आनुकूल्येन वर्तनं जीवनस्य सफलजीवनयात्राया वा प्रथमं लक्षणम्। लोकप्रगतिमनुरुध्यैव प्रवर्तमानास्तत्तद्देशनिवासिन्यो जातयो जगति स्वयशः समन्तात् प्रसारयन्ति। अन्यास्तु कालकवलतामासादयन्ति।

ततश्चाभिनवभारते ऐतिहासिकपरम्पराप्राप्तस्य स्वकीयकर्तव्यभारस्य समुद्वहनाय प्राचीनगौरवपदस्य च पुनरवाप्तये संस्कृतज्ञानां सर्वतः प्रथममेतदेव कर्तव्यं यत्तैरात्मनोऽवसादकरमवमाननाभावं सर्वथा परित्यज्य लोकप्रगतिं लोकावस्थितिं चानुरुन्धानैरक्षिणी समुन्मील्य लोकस्य तीव्रवेगेन परिणमन्ती क्रान्तिमयी अवस्था निभालनीया।

अद्यत्वे हि देशकालयोरभूतपूर्वं संकोचमापादयद्भिर्वैज्ञानिकाविष्कारैर्नूतनातिनूतनविचारधाराभिश्च जगतः स्वरूपमेव परिवर्तितमिवावलोक्यते। तज्जनिताश्च नूतननूतनाः समस्याः प्रतिदेशमुदीयमाना दृश्यन्ते। नूनमेतादृशे समये केवलपरम्परानुगामिनीः प्रवृत्तीः परित्यज्य लोकप्रगतिमनुरुध्य सामयिकैर्भूत्वैव मनुष्यैः स्वकीयसमस्यानां समाधाने दत्तावधानैर्भवितव्यम्। सर्वस्या अपि समुन्नतेरयमेव प्रथमोऽभ्युपायः।

## पाठ्यपद्धतेः परिष्कारः

कस्यापि देशस्य राष्ट्रस्य वा समुत्थानस्य प्रथमं सोपानं विचारपुरस्सरं निर्णीतस्तत्रत्यः शिक्षाक्रम एव भवतीत्यद्यत्वे सर्वसम्मतः सिद्धान्तः। कस्या अपि जनताया विचाराणामादर्शानां वा निर्माणं परिपुष्टिश्च पाठ्यपद्धतिद्वारैव संभवति। प्रायेण तत्तच्छिक्षाक्रमस्य साहाय्येनैव, हिट्लरकालिके जर्मनीदेशे वा भवतु, गतमहायुद्धात्प्राग् जापानदेशे वा भवतु, रूसदेशे च सांप्रतिकपुनर्निर्माणे वा भवतु, अन्यत्र वा कुत्रचित्, सर्वत्रैव यूनां विचारधाराया

निर्माणं परिवर्तनं क्रान्तिर्वा संपाद्यमाना दृष्टा दृश्यते च सर्वैरप्यस्माभिः ।

अतश्च स्वभावतः एवावस्थानामावश्यकतानां चानुरूप्येण सर्वे शिक्षाक्रमाः पाठ्यपद्धतयश्च परिवर्तनशीला भवन्ति । संस्कृतपाठ्यपद्धतिरप्यस्य नियमस्य नापवादः ।

इतिहासविदां नाविदितं यन्न केवलं कालक्रमेण विकासमाप्नुवतां नूतनातिनूतनविद्याविभागानां कारणवशादेव, किन्तु तत्तद्विद्याविभागेषु विशिष्टनूतनग्रन्थानां रचनावशादपि संस्कृतपाठ्यपद्धतौ महान्ति परिवर्तनानि समयानुरूप्येणाजायन्त । संस्कृतवाङ्मय एकत्र ब्राह्मणेतिहासपुराणकल्पगाथानाराशंसीनाम् ( द्रष्टव्यं तैत्तिरीयारण्यकम् २।९ ), अपरत्र सषडङ्गवेदानाम्, अन्यत्र द्वादशादिभेदेन तत्तद्विद्यानां निर्देशेन, समयभेदेन तत्तद्ग्रन्थेषु भिन्नभिन्नानामाचार्याणां ग्रन्थानां ग्रन्थकृतां च प्रमाणत्वेनोपन्यासेन च संस्कृतपाठ्यपद्धतेः कालक्रमेण विभिन्नकारणवशाज्जायमानं परिवर्तनं स्पष्टतः प्रतीयते ।

या चेयमद्यत्वे प्रचलिता संस्कृतपाठ्यपद्धतिः सा नातिप्राचीनेत्यत्र विषये विदुषां नैव विवादः । नैकविधप्रतिकूलपरिस्थितीनां सद्भावेऽपि संस्कृतपठनपाठनपरम्परायाः, विशेषतश्चानेकेषां दुरूहग्रन्थानामध्ययनाध्यापनपरम्परायाः, संरक्षणेन सत्यपि तस्या महत्त्वे, अस्माकं राजनीतिकदास्ययुगस्य दुष्प्रभावेण प्रभाविता सा नूनमपरिहार्यदोषैर्विहीना भवेदिति नैव संभवति ।

## स्वराज्यभानावस्तंगते राष्ट्रियप्रतिभाकमलानां संकोचः स्वाभाविकः ।

राजनीतिकदासतान्धकारयुगे सर्वत्र न केवलं नूतननिर्माणप्रवृत्तीनां कुण्ठीभाव एव, किन्तु प्राचीनसंचितवस्तूनां संरक्षणमपि स्वभावतो दुष्करतामापद्यते। अत एव नातिचित्रं यद् भारतीयेतिहासस्यान्धकारयुगे प्रवृत्तेयं संस्कृतपाठ्यपद्धतिः सातिशयं संकुचितगात्रेव, निष्प्राणेव, प्रगतिपराङ्मुखीव च प्रतीयते।

भारतीयेतिहासस्य स्वतन्त्रतायाः स्वच्छन्दवातावरणे विनिर्मितान् नवजीवनदायिनो ग्रन्थान् प्रायेणोपेक्षमाणायाः, दास्यकाले च विनिर्मितटीकोपटीकाबहुलग्रन्थजालैर्निगडितायास्तस्याः संकुचितगात्रत्वं कस्य तिरोहितं विपश्चितः?

जनताया राष्ट्रस्य च जीवनेन प्रायेण सर्वथैव संपर्कविहीनायास्तस्याः प्रगतिपराङ्मुखत्वे निष्प्राणत्वे च कस्य विवादः संभवति?

सा चाद्यत्वे स्वराज्यभानोरभ्युदये, संजाते च सर्वतो राष्ट्रे नवनवाशाकिरणसंचारे, न केवलं संस्कृतज्ञानामभिनवभारते स्वकीयस्य परम्पराप्राप्यनेतृत्वस्य पुनर्लाभार्थमेव, किन्तु क्षणे क्षणे परिवर्तमानानां जगतः परिस्थितीनामवगतेस्तदनुरूपं च कार्यकरणशक्तेः संपादनार्थमपि, तीव्रवेगेनाविरतं प्रवर्धमानानां मानवीयज्ञानसीमानां परिचयेन स्वकीयविद्याविभागानामभ्युन्नयनार्थमपि, किञ्च प्राचीनानां विलुप्तानां विलोपोन्मुखानां वा अनेकेषां ग्रन्थरत्नानां विद्यानां च समुद्धरणार्थमपि, पुनः परिष्कारमर्हतीति

कस्य संदेहो भवेत् ? तस्यैतस्य परिष्कारस्यैव प्रकारा दिङ्मात्रेणै-वाध: प्रदर्श्यन्ते ।

## ( क ) सामान्यज्ञानस्यावश्यकता

सर्वेष्वपि समुन्नतदेशेषु प्रत्येकं शिक्षितनागरिकस्य कृते सामान्यव्यवहारोपयोगिनां गणितभूगोलेतिहासराजशास्त्रपौरशास्त्र-लोकभाषादिविषयाणां सामान्यज्ञानमनिवार्यत्वेनावश्यकमित्येतत् शिक्षाया मौलिकसिद्धान्तत्वेनाभ्युपगम्यते । तत्र हि एतत्सामान्य-ज्ञानादृते शिक्षितेत्यभिख्यामेव न लभते कश्चिज्जनः ।

एतेषां विषयाणां सामान्यज्ञानं हि, न केवलं छात्राणां यथायथं मनोविकासार्थमेव, न केवलं साधारणजनताया जीवनेन संबद्धानां सामाजिकीनामार्थिकीनां राजनीतिकीनां च समस्यानां यथोचितमव-बोधायैव, न वा केवलं तासां समुचितसमाधाने स्वकर्तव्यपालना-यैव आवश्यकम्, किन्तु स्वकीयजीवने प्राप्तानामवसराणामुप-योगार्थमप्यावश्यकम् ।

संस्कृतज्ञानां विषयेऽप्युक्तसिद्धान्तस्यावहेलना नूनं तेषामेव हानिकरी । "बुद्धिहीना विनश्यन्ति यथा ते मूर्खपण्डिताः" ( पञ्च-तन्त्रे ), "उष्ट्रः पक्षिविशेषः", 'विशेषेण आ समन्ताज्जिघ्रति' इति व्युत्पत्तिवशाद् व्याघ्रशब्दार्थं वस्तुतोऽजानतः कस्यचिद् वैयाकरण-धुरन्धरस्य व्याघ्रद्वारेव मृत्युः—सर्व एते परम्पराप्राप्ता लोकप्रवादा एतस्यैवार्थस्य प्रख्यापकाः । "इतिहासपुराणाभ्यां वेदं समुपबृंहयेत् ।

बिभेत्यल्पश्रुताद्वेदो मामयं प्रहरिष्यति॥" इत्यादिप्रमाणैश्चापि अयमेवार्थः पुष्टिं समश्नुते।

प्रात्यहिकव्यवहारोपयोगिनां सामान्यविषयाणामज्ञानकारणादेव संस्कृतज्ञाः प्रायेणाद्यत्वे पङ्क्तिपात्रत्वपदयोग्या अपि पृथग्जना इव जनताया जीवनदृष्ट्या प्रतीयन्ते। ततश्च नागरिकत्वपदप्राप्त्याणामवसराणां पूर्णतः सदुपयोगाय कर्तव्य एवानिवार्यरूपेण सन्निवेश उक्तसामान्यविषयाणां संस्कृतपाठ्यपद्धतौ।

## (ख) प्रौढपाण्डित्यस्य संरक्षणेन सहैव विवेचना-शक्तेरप्युपबृंहणम्

अस्माकं सुदीर्घे राजनीतिकपरतन्त्रतायाः काले सर्वतः प्रतिकूलासु परिस्थितिषु अनिवार्य एवासीद् महान् ह्रासो देववाण्याः। सत्यप्येवम्, प्रायेण राजशक्तिसकाशादुत्साहप्रेरणयोरभावेऽपि, कथंचित् यत्किंचित् संस्कृतपरम्परायाः संरक्षणं तत्खलु समस्तेऽपि भुवने कस्यापि वाङ्मयस्येतिहासेऽदृष्टचरम्। हन्त! एतस्मिन्नन्धकारयुगे देववाण्याः परःशतानि ग्रन्थरत्नानि विलुप्तानि, प्रायेण चास्तमुपगता स्वोपज्ञग्रन्थानां निर्माणपरम्परा। तथापि परममस्माकं भागधेयं यत्तपस्यां श्रद्धां देशभक्तिमेकान्तनिष्ठां विशेषतश्च देववाणीं प्रत्यनन्यप्रेमभावनां समाश्रितैः, सततं निष्कामभावनया विद्यायाः पठनपाठनयोरनुरक्तैर्भारतीयविद्वद्भिर्बाहुल्येन प्राचीनानेकदुरूहग्रन्थाणांवारपारीणान् टीकोपटीकापुत्रान् विधाय कथमपि प्रौढपाण्डित्यपरम्परा संरक्षिता। पदवाक्यप्रमाणानां पारगाः प्रसिद्धयशोगौरवाः प्रौढप्रगाढ-

पाण्डित्या अप्पय्यदीक्षित-भट्टोजीदीक्षित-नागेशभट्ट-पण्डितराजजगन्नाथप्रभृतयस्तस्या एव परम्परायाः सममेव परिणामा निर्वाहकाश्च। नूनमेतादृशं प्रौढपाण्डित्यमस्माकं गर्वस्य गौरवस्य च विषयः।

सैषा प्रौढपाण्डित्यपरम्परा कथंचिदुह्यमाना, भारते ब्रिटिशशासनारम्भकाले च नैककारणवशाद् मुमूर्ष्ववस्थामापन्ना, भारतीयविभिन्नप्रान्तेषु प्रचलितसंस्कृतपरीक्षाप्रणाल्याः साहाय्येन पुनरुच्छ्वासमिवावाप्य केनापि रूपेणाद्यापि प्रचलति। परं सत्यपि परीक्ष्यच्छात्राणां संख्यायां वृद्धौ निस्संशयं सा जीवितसंशयमुपस्थितेव दृश्यते। परीक्ष्यच्छात्रैः परिचितानां विदुषां नैतत्तिरोहितम्। प्रायेणैकदेशिपाण्डित्यस्य पक्षपातिनी प्रचलिता पाठ्यपद्धतिर्वा, छात्राणामध्यापकानां चालस्यप्रमादौ वा, छात्राणामेकमात्रं परीक्षोत्तरणाभिलाषो वा, शिक्षणविधिनाऽपरिचिता अप्रौढा अध्यापका वा अत्र कारणमिति विवेचनस्य नायमवसरः। तथापि नात्र वैमत्यं संभवति यदेषा अवाञ्छनीया परिस्थितिर्यथा विलोपमापद्यते, यथा च च्छात्रेषु अध्यापकेषु च वस्तुतः प्रौढपाण्डित्यस्य संपादनविषय आस्था समुत्पद्यते, तथैव खलु न केवलं पाठ्यपद्धतेः किन्तु परीक्षाप्रथाया अपि सुतरां परिष्कारोऽपेक्षितः शीघ्रमेव।

अत्रेदमप्यवधेयं यत्प्रौढपाण्डित्यं हि प्राधान्येन विवेचनाबुद्धिमपेक्षते। तां विना हि तत् प्रायेण आहोपुरुषिकारूपे प्रौढिवादे, वस्तुतत्त्वपरीक्षणप्रवृत्तिविरोधिन्यामत्यन्तं शब्दप्रमाणपरतायाम्, सर्वज्ञानोन्नतिप्रतिरोधिन्यां विचारसंकीर्णतायामेव वा पर्यवस्यति।

सामान्येन शब्दैकप्रमाणपरतामप्रवृत्तिं परप्रत्ययनेयबुद्धिं च विहाय तत्तद्विषयेषु स्वयमेव यथाप्रमाणं वस्तुतत्त्व-परीक्षणमुखी प्रवृत्तिरेव विवेचनाबुद्धिः ।

स्वभावतो मनुष्येषु उदीयमानया विशिष्टजिज्ञासा-बुद्ध्या समेधिता, यथासंभवं च प्रायोगिकपरीक्षणैरुपचिता विवेचनाबुद्धिरेव सर्वविधज्ञानविज्ञानयोः समुन्नतेर्मूलम् ।

"परीक्ष्यकारिणो हि कुशला भवन्ति", "नापरीक्षितमभिनिविशेत्", "सम्यक्प्रयोगनिमित्ता हि सर्वकर्मणां सिद्धिरिष्टा। व्यापच्चासम्यक्प्रयोगनिमित्ता" (इत्यादि चरके), "अनुभवेन वस्तुतत्त्वस्य कार्त्स्न्येन याथार्थ्यज्ञानवानाप्तः" (न्यायवात्स्यायनभाष्ये), "मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन् को न ऋषिर्भविष्यतीति। तेभ्य एतं तर्कमृषिं प्रायच्छन्" (निरुक्ते) इत्यादिप्रमाणानि तस्या एवोपयोगितां तत्तत्प्रकारैरुपवर्णयन्ति ।

अद्यत्वे संस्कृतक्षेत्रे कियती तस्या आवश्यकतेति नैव तिरोहितं विदुषाम् ।

वर्तमानकाले हि संस्कृतपठनपाठनपद्धतेरयमेको महान् दोषो यत्प्रथमं तु छात्रेषु कस्मिन्नपि विषये, विवेचनाबुद्धेस्तु का कथा, स्वाभाविकविशिष्टजिज्ञासाबुद्धेरप्यनुदय एव। उदयेऽपि अभ्यस्यमानग्रन्थप्रमाणबलादेव 'शेषं कोपेन पूरयेदिति' न्यायेन सबलात्कारमिव तस्या उपशमः क्रियते। अभ्यस्यमानग्रन्थोक्ताः

पदार्थास्तत्तद्ग्रन्थे यथा प्रतिपादितास्तथैव वस्तुतत्त्वज्ञाननिरपेक्षया ग्राह्यन्ते।

व्याकरण उदाहरणरूपेणान्यथा वा समागतानां नानाशब्दानां केऽर्थाः ? काव्यादिषूपवर्णितानां तत्तत्पदार्थानां वस्तुतो लोके किं स्वरूपम् ? पुराणेतिहासादिषु वर्णितानां पर्वतानां देशानां नद्यादीनां च वस्तुतः कुत्र स्थितिः कानि च तन्नामानि इदानीन्तने भारतेऽन्येषु वा देशेषु ? ज्यौतिषे वा सविस्तरमुपवर्णितानां नक्षत्रादीनां वस्तुतः खगोले कुत्र कीदृशी स्थितिः ? इत्येवंविधानां जिज्ञासानां प्रायेणानुदय एवाद्यत्वे संस्कृतज्ञेषु। उदयेऽपि कति नाम ताः समाधातुं प्रयत्नपरा दृश्यन्ते ?

दर्शनशास्त्रेषु अंशतोऽनूदितान् दर्शनान्तरपदार्थान् यथा कथंचित् पठित्वैव सन्तुष्टा नहि चेष्टन्ते केऽपि प्रायेण वस्तुतस्त-त्तद्दर्शनान्तरपदार्थैस्तान् संवादयितुम्।

ततश्च प्रौढपाण्डित्यं वास्तविकीं पुष्टिं फलेग्रहितां चाश्नुवीते-त्यभिप्रायेण संस्कृतपठनपाठनपद्धतौ सर्वज्ञानसमृद्धेर्जननीरूपाया विवेचनाशक्तेरुपबृंहणस्याप्यतीवावश्यकता।

## (ग) अनुसन्धानप्रवृत्तेरुद्बोधनम्

नैतदविदितं विदुषां यत्सांप्रतिकजगति येयमाश्चर्यमयी चेतश्चमत्कारिणी समुन्नतिरभितो दृश्यते सा खलु ज्ञानविज्ञानयो-र्विभिन्नविभागेषु निरन्तरमभियोगभाजां विदुषामनुसन्धानस्यैव

फलम्। अत एवाद्यत्वे समुन्नतदेशैर्विश्वविद्यालयानामन्यसंस्थानां च द्वारा छात्रेषु अध्यापकेषु अन्येषु च विद्वत्सु अनुसंधानप्रवृत्तेः प्रोत्साहनार्थं प्रतिवर्षमधिकाधिको धनव्ययः क्रियमाणः श्रूयते। किं बहुना, विश्वविद्यालयानां प्रधानलक्ष्येषु अनुसंधानप्रवृत्तेरुद्बोधन-स्याप्येकतमत्स्थानमित्येष सर्वसम्मतः सिद्धान्तः साम्प्रतं जगति।

एतस्याः प्रवृत्तेरेव परिणामो यत्पाश्चात्यैर्विद्वद्भिर्भारतीय-संस्कृत्यादिना संबद्धेष्वपि विषयेषु विस्मयावहं महत्श्लाघनीयं कार्यं संपादितमस्ति। तुलनात्मकभाषाविज्ञान-पुराणविज्ञाना-दीनां जन्म, विलुप्तप्रायस्य सुदीर्घस्य भारतीयेतिहासस्य विस्मृति-कुहरान्तर्हितानां शिलालेखादीनां साहाय्येन पुनर्निर्माणम्, परः-शतानां लुप्तानां लुप्तप्रायाणां च संस्कृतग्रन्थानां वैज्ञानिकप्रक्रियया संपाद्य प्रकाशनमित्यादि सर्वमद्भुतं कार्यं तस्या एव फलम्।

प्रसन्नताया विषयो यद्भारतेऽपि तस्याः प्रवृत्तेः प्रारम्भो यत्र तत्र सांप्रतं श्रूयते विभिन्नविषयानाश्रित्य। तत्परिणा-मरूपेणैव भारतीयसंस्कृत्या विशेषतश्च देववाण्या संबद्धेषु भारतीय-साहित्यदर्शनादिविषयेषु क्रियमाणस्यानुसन्धानकार्यस्य प्रकाशनार्थ-मनेका अनुसन्धानपत्रिकाः, लुप्तानामनेकेषां संस्कृतग्रन्थानां वैज्ञानिकप्रक्रियानुसारं सम्पादितानां प्रकाशनार्थं च नैकाः संस्कृत-ग्रन्थमाला अद्यत्वे भारतीयविभिन्नप्रान्तेषु प्रकाश्यन्ते। विभिन्न-भारतीयविषयेषु यदन्यद्विस्तृतमनुसन्धानकार्यं स्वदेश एव समा-रब्धं तद्विवरणस्य तु नायमवसरः।

सत्यप्येवं खेदात्रहमेतद् यत्प्राचीनपरिपाटीमाश्रित्य संस्कृतपठन-पाठनपरम्पराया निर्वाहका: संस्कृतज्ञा विद्वांसः, स्वकीयविषयाणां विशेषज्ञा: सन्तोऽपि, अद्य यावदस्मिन्ननुसंधानकार्ये न केवल-मुदासीना एव, किन्तु बाहुल्येनापरिचिता अपि एतस्य प्रक्रियया मौलिकसिद्धान्तैश्च। वस्तुतस्तु अनुसन्धानप्रक्रियाविज्ञैस्तैरेव संस्कृ-तज्ञैरेतत् कार्यं यथा सौष्ठवेन कर्तुं शक्यते, न तथान्यैर्भारतीयैर-भारतीयैर्वा संस्कृतज्ञैरपि। किंच तेषामेव भारतीयसंस्कृतिप्राणा-नामेतन्मुख्यतया कर्तव्यं यत् खलु भारतीयवाङ्मयस्य समुद्धरणम्, यच्चापि भारतीयसंस्कृतेरन्तरात्मनो हृदयस्य चाविष्करणम्।

सत्यमष्टादशशताब्द्या अन्तिमभागादारभ्य वैदेशिकैर्विद्वद्भि-र्भारतीयवाङ्मयस्य, विशेषतः संस्कृतवाङ्मयस्य, उद्धारार्थं महत्त्वयुक्तमनुसन्धानात्मकं कार्यं कृतम्, भारतीयसंस्कृतेरान्तरं स्वरूपं चाववोद्धुं वाढं प्रयतितम्। परन्तु सर्वोऽप्ययं तेषां प्रयत्नः सर्वथा श्लाघ्योऽपि भारतीयदृष्ट्या सफलः सन्तोषावहश्चेति वक्तु दुःशकं प्रतीयते। वस्तुतस्तु भारतीयसंस्कृतेर्वास्तविकं स्वरूपं तस्यामास्थावन्तो भारतीया एव विद्वांसो वोद्धुं बोधयितुं च प्रभवन्तीति नातिशयोक्तिः।

किञ्च, अनन्तो वै विषयोऽनुसन्धानस्य। संस्कृतवाङ्मय एव तावदद्यापि परःशतानि ग्रन्थरत्नानि विलुप्तान्येव तिष्ठन्ति। तेषां सप्रयत्नमन्वेषणम्, अन्विष्टानां च वैज्ञानिकप्रक्रियया संपाद्य प्रकाशन-मनुसन्धानमेवापेक्षते। एवमेव कालवशाद्धि विलुप्तपरम्पराणां

तत्तच्छास्त्राणां विद्याविभागानां च गूढाभिप्रायाविष्करणमप्यनुसन्धानाधीनमेव। कति नाम महाविद्वांसोऽपि अद्यत्वे ब्राह्मणग्रन्थानां पुराणानां सुविस्तृतवाङ्मयस्य वस्तुतोऽभिप्रायं विदन्ति? के वा भारतीयसंस्कृतेर्विभिन्नविभागानां शाखानां च विकासस्य परम्परया परस्परं संबन्धेन चात्र यावत्परिचिताः? तदेतत्सर्वं वैज्ञानिकप्रक्रियाध्ययनमनुशीलनमनुसन्धानं चापेक्षते।

तदस्मिन् सुमहति कार्ये, अभिनवभारतनिर्माणार्थं विशेषत आवश्यके, संस्कृतज्ञा अपि स्वल्पानुरूपं स्वकीयसाहाय्यप्रदानयोग्या भवेयुरिति दृष्ट्या संस्कृतपठनपाठनपद्धतेः परिष्कारप्रसङ्गेऽनुसन्धानप्रवृत्तेरुद्बोधनमपि मुख्यं स्थानं लब्धुमर्हति।

## (घ) विद्यायास्तत्तद्विषयेषु नवीनोन्नतेः परिचयः

आसीत्स समयो भारतीयेतिहासे यदा खलु भासते स्म भारतं विविधविद्यानां विलासेन, विकासेन च नानाविधकलानाम्। तस्मिन् हि काले प्रासरत्समन्ताद् भारतीयानां गणितादिविद्यानां प्रकाशो विदेशेष्वपि। परं सर्वमपि तद्विपर्यस्तमिव भारतस्य दास्यकाले। तस्मिन्हि अन्धकारयुगे सर्वाप्यस्माकं प्रगतिरवरुद्धा। एतस्मादेव कारणात्संस्कृतवाङ्मयस्यापि विभिन्नविषयेषु प्रगतिरनेकशताब्दीतोऽवरुद्धैव तिष्ठति। स्वभावत एव तेषां सर्वं दृष्टिक्षेत्रं मध्यकालीनमेव अस्यामपि शताब्द्याम्।

या पुनः स्वतन्त्रेषु देशान्तरेषु विद्यायाः प्रायेण निखिलविभा-

गेषु साम्प्रतमभ्युन्नतिः संपन्ना सा कस्याविदिता। अन्येषां विभागानां तु का कथा, भारतीयसंस्कृतिसंबद्धेष्वपि विषयेषु तेषां यत्कार्यं तदपि नितरां विस्मयावहमित्युक्तमेव पुरस्तात्। गणितज्यौतिषादिविषयेषु तु निरन्तरमभिवर्धमाना तत्रत्या समुन्नतिः केन न श्रुता भवेत्? कथमिव तया सह भारतीया मध्यकालीना समुन्नतिरेषां शास्त्राणां तुलयितुं शक्येत? एतादृशी एव परिस्थितिरितिहासभाषाशास्त्रादीनामन्येषां संबन्धे।

संस्कृतवाङ्मयमद्यापि अस्पृष्टमेवास्ते तया समुन्नत्या। संस्कृतज्ञा अपि प्रायेणापरिचिता एव तया साम्प्रतं यावत्। अत एव संस्कृताध्ययनाध्यापने वर्तमानजगति प्राचीनवस्तुसंग्रहालयरूपेणैव दृश्येते। न तयोः सांप्रतिकता अद्यावधिकता[1] वा स्वीक्रियते लोकैः। तस्मादेवैतद्विशेषतः संस्कृतज्ञानामात्मनोऽवमाननाया हेतुः। स्पष्टमेषा परिस्थितिर्नहि संस्कृतज्ञानां हितावहा, नापि तेषामनुरूपा। **को नु आत्मनो हितमाकाङ्क्षन् विद्यायाः समुन्नतावनुदारो भवितुमर्हति?**

तथा च विद्यायास्तत्तद्विषयेषु विशेषतश्च स्वकीयविशिष्टविषयेषु संस्कृतज्ञा नवीनोन्नत्या अपरिचिता मा भूवन्निति क्रियतामेव प्रयत्नः।

---

१. सांप्रतिकता अद्यावधिकता वा = The quality of being up to date.

## संस्कृतविश्वविद्यालयस्योपयोगिता स्वरूपं च

तदेवं प्रदर्शिता अस्माभिर्दिङ्मात्रेणैव ते तेऽभ्युपाया ये नूनं समाश्रयणीया अस्मन्मतेन देववाण्याः संस्कृतज्ञानां चाभ्युन्नतये। प्रतिप्रान्तं प्रायेण समाना एव समस्याः संस्कृतस्य संस्कृतज्ञानां च। अतः समानरूपेणैव तेषामभ्युपायानामुपयोगिता सर्वेष्वपि भारतीयप्रान्तेषु। तथापि कुत्र कियती कीदृशी वा प्रायोगिकता व्यावहारिकता वा तेषामिति तत्तदवस्थानुरूपं स्वशक्त्यनुसारं च तत्तत्प्रान्तेनैव निर्णेतुं शक्यते।

सत्यप्येवम्, नात्र संदेहो यदेषामभ्युपायानां साकल्येन वास्तविकदृष्ट्या कार्यरूपेण समाश्रयणं केनापि विश्वविद्यालयेन विश्वविद्यालयदेशीयसंस्थयैव वा कर्तुं शक्यते। अत एव एकस्य संस्कृतविश्वविद्यालस्य तत्कालमेवावश्यकता अभिनवे भारते। अत एव च भारते यत्र तत्र संस्कृतविश्वविद्यालयस्य स्थापनाया हृद्या वार्ता श्रूयते। संयुक्तप्रान्ते (=उत्तरप्रदेशे) त्वत्र विषय एका योजनापि व्यवस्थापिकायाः सभायाः पुरस्तात् शीघ्रमेव स्थापयितुं सज्जिता वर्तते।[१] तदेतत्सर्वथैव संस्कृतज्ञानामाशावहम्।

तदत्र प्रसङ्गप्राप्त एव कश्चिद्विचारः संस्कृतविश्वविद्यालयस्य स्वरूपस्य आदर्शानां च विषये। सुस्पष्टं प्रदर्शितमस्माभिरुपरिष्टात्

---

१. तत्र वाराणस्यां वाराणसेयसंस्कृतविश्वविद्यालयस्य स्थापना १९५८ तमे ईसवीसंवत्सरे जातेति सर्वेषां विदितम्।

सांप्रतिकभारतीयविश्वविद्यालयानां प्रायेणाभारतीयं स्वरूपम्, भारतीयसंस्कृतेरादर्शानां च प्रतिकूलं वातावरणम्। नूनं तेषामपरा प्रतिकृतिरेव नाभिलष्यते संस्कृतज्ञैः। तया हि संस्कृतस्य संस्कृतज्ञानां भारतीयराष्ट्रस्य वा वास्तविकं हितं साधयितुं शक्यत इति संभावनापि न संभवति।

**भारतीयसंस्कृतेरादर्शैरनुप्राणिता एव विश्वविद्यालयाः, न केवलं जराजीर्णस्य भारतवर्षस्यैवाभिनवीकरणाय, किन्तु नानाविधसंघर्षवह्निभिर्दन्दह्यमानस्य जगतोऽपि शान्तये, सांप्रतं भारतेऽपेक्षिता इति नो विश्वासः। तादृश एव संस्कृतविश्वविद्यालयः संस्कृतज्ञानामपि हितावहो भवितुमर्हति।**

परं विश्वविद्यालयेति वै महदभिधानम्। तस्य गौरवगरिम्णः संरक्षणमतीव दुष्करमपि सदत्यावश्यकम्।

एकान्तभावेन विविधविद्यानां समुन्नतेर्भावना, सर्वविधायाः समुन्नतेर्मूलं विचाराणामौदार्यम्, विचारसंकीर्णतारूपया साम्प्रदायिकभावनया राष्ट्रभ्रंशकरेण क्षुद्रेण तत्तज्जातिपक्षपातेन च राहित्यमित्येतादृशा हि महान्तो गुणाः सामान्येन सर्वविश्वविद्यालयानाम्।

भारतीयसंस्कृतेरादर्शानां त्वाधारेण संस्थापिते विश्वविद्यालये, न केवलमेतेषामेव सामान्यगुणानाम्, किन्तु भारतीयत्वभावनाभावितानामस्मद्विशिष्टगुणानामपि संपत्तिरभीप्सिता। तदेतत्संस्कृतविश्वविद्यालयस्य सममेव कर्तव्यं गौरवं च। एवमेव तस्य सार्थकता संभवति, नेतरथा। नूनं स भारतीयसंस्कृत्याः प्रमुखं केन्द्रं भवेत्। तस्य दृष्टिश्च बृहत्तरभारतस्य भवेत्। एवं हि स वैदिकबौद्धजैनादिरूपेण सुविस्तृतांया भारतीयसंस्कृतेर्विशालकेन्द्रत्वेनान्ताराष्ट्रिकं[1] महत्त्वमाप्तुमर्हति। नूनमेतादृशो विश्वविद्यालयो न केवलं संस्कृतज्ञानाम्; न केवलं भारतस्य, किन्त्वखिलस्य जगतः कल्याणाय प्रभविष्यतीति कस्य संदेहो भवेदित्यलमनया प्रस्तुतानुप्रस्तुतपरम्परया।

## उपसंहारः

यथा तथा वा भवतु। संस्कृतविश्वविद्यालयो भवतु मा वा भूत्। नैव विद्यते संस्कृतज्ञानां कर्तव्यपक्षे द्वैधा प्रतिपत्तेरवकाशः। भारतवर्षस्येतिहासे चिराय सोत्कण्ठमुदीक्षितः कालोऽयं समुपस्थितः। अस्मिन्नवसरे हि दिष्ट्या भारतीयसंस्कृतेः

---

१—आन्ताराष्ट्रिकम्। राष्ट्राणामन्तरन्ताराष्ट्रम्। ततः "अन्तःपूर्वपदाट्ठञ्" (पा० ४।३।६०) इति सूत्रेण तत्र भव इत्यस्मिन् विषये ठञ्। आन्तर्गेहिकमिति यथा।

संस्कृतस्य च समुन्नतेर्वार्ता सर्वतोदिशं श्रूयते। सोऽयमतर्कितोपनतः शुभावसरो नैवोपेक्षणीयः। "श्रद्धा[1] हि तद् यद्द्य।....अनद्धा हि तद् यच्छ्वः" ( शतपथब्राह्मणे २।३।१।२८ ) इति वै शातपथी श्रुतिराह।

चिरं प्रसुप्तमस्माभिः। परं नायं निद्रातन्द्रयोः कालः। सद्यस्तावदात्मन एव परीक्षणं विधेयं सावधानेन चेतसा। ततो निभालनीया तीव्रवेगेन परिवर्तमाना जगतः परिस्थितिः। नूनं वयं सर्वात्मना भारतीयसंस्कृतेस्तच्छरीरभूताया देववाण्याश्च समुपासकाः। आसीच्च पुरा तयोरेवाधिपत्यं भारते तस्य सुदिनेषु। परं "ते हि नो दिवसा गताः!"

हन्त! पुनरपि भारतं स्वतन्त्रम्। तस्याभिनवीकरणस्य पुनर्निर्माणस्य च प्रश्नः सर्वेषामस्माकं पुरस्तात्। तद्धि नूतनं निर्माणं भारतीयसंस्कृतेराधारेणैव भवेदिति वै, मनुष्यमात्रस्य कल्याणकामनया, सर्वेषामस्माकमभिमतम्। तदपेक्षते तस्याः संस्कृतेर्देववाण्याश्च समुद्धरणम्।

"यो जागार तमृचः कामयन्ते" ( ऋग्०५।४४।१४ ), "उत्तिष्ठत जागृत प्राप्य वरान् निबोधत" ( कठोपनिषदि १।३।१४) इति श्रुत्यनुसारं लोकस्य कालस्य च प्रगतिम्, अभिनवभारतस्य चावश्यकता अनुरुध्य देववाण्याः समुन्नतौ

---

१. श्रद्धा = निश्चितम्।

तत्परैर्भवितव्यमस्माभिः । अयमेव पन्था येन वयं संस्कृतज्ञा ऐतिहासिकपरम्परानुरूपं स्वकीयगौरवपदं प्राप्तुं शक्नुमो भूयोऽप्यभिनवे भारते। नूनं "नान्यः पन्था विद्यतेऽयनाय[1]" ।

तदभिनन्दामो वयं भारतीयसंस्कृतेर्देववाण्याश्चाधिदेवतां भारतीं भुवम्—

## ❀ सा नो माता भारती भूर्विभासताम् ❀

येयं देवी मधुना तर्पयन्ती
तिस्रो भूमीरुद्धृता द्योरुपस्थात् ।
कामान् दुग्धे विप्रकर्षत्यलक्ष्मीं
मेधां श्रेष्ठां सा सदास्मासु दध्यात् ॥१॥

सर्वे वेदा उपनिषदश्च सर्वा
धर्मग्रन्थाश्चापरे निधयो यस्याः ।
मृत्योर्मर्त्यानमृतं ये दिशन्ति वै
सा नो माता भारती भूर्विभासताम् ॥२॥

यां प्रच्युतामनु यज्ञाः प्रच्यवन्ते
उत्तिष्ठन्ते भूय उत्तिष्ठमानाम् ।

---

१. यजुर्वेदे ३१।१८ ।

यस्या व्रते प्रसवे धर्म एजते
सा नो माता भारती भूर्विभासताम् ॥३॥
यां रक्षन्त्यनिशं प्रतिबुध्यमाना
देवा ऋषयो मुनयो ह्यप्रमादम् ।
राजर्षयोऽपि ह्यनघाः साधुवर्याः
सा नो माता भारती भूर्विभासताम् ॥४॥
महान्तोऽस्यां महिमानो निविष्टा
देवा गातुं यां क्षमन्ते न सद्यः ।
सा नो वन्द्या भ्राजसा भ्राजमाना
माता भूमिः प्रणुदतां सपत्नान् ॥५॥
(मेधातिथेर्मङ्गलदेवशास्त्रिणः)

इति शम्

( पृ० २७८ )



डाक्टर जे० आ० वैलेन्टाइन,
प्रिंसिपल, गवर्नमेंट संस्कृत कालेज, बनारस
(१८४६–१८६१)

अखिलभारतीय-

संस्कृतसाहित्यसम्मेलनस्य

नाथद्वारापुण्यस्थाने

विशेषाधिवेशनस्य

सभापतेर्

ग्रन्थकर्तुः

# अभिभाषणम्

१३, १४ मार्गशीर्ष शु० २०१३

( १५, १६।१२। १९५६ )

# मातृभूमेरभिनन्दनम्

卐 सा नो माता भारती भूर्विभासताम् 卐

सर्वे वेदा उपनिषदश्च सर्वा
धर्मग्रन्थाश्चापरे निधयो यस्याः ।
मृत्योर्मर्त्यानमृतं ये दिशन्ति वै
सा नो माता भारती भूर्विभासताम् ॥१॥

यां प्रच्युतामनु यज्ञाः प्रच्यवन्ते
उत्तिष्ठन्ते ते भूय उत्तिष्ठमानाम् ।
यस्या व्रते प्रसवे धर्म एजते
सा नो माता भारती भूर्विभासताम् ॥२॥

महान्तोऽस्यां महिमानो निविष्टा
देवा गातुं यां क्षमन्ते न सद्यः ।
सा नो वन्द्या भ्राजसा भ्राजमाना
माता भूमिः प्रणुदतां सपत्नान् ॥३॥

( ग्रन्थकर्तुः )

( २ )

ॐ

दिव्यो गन्धर्वः केतपूः केतं नः पुनातु ।
वाचस्पतिर्वाचं नः स्वदतु ॥ (यजु० ११।७)

मान्या विपश्चिद्वर्याः,

महतः प्रमोदस्यायमवसरो यदद्य वयं नानाप्रदेशेभ्यः समागत्य अस्माकं विश्ववन्द्याया देववाण्या भूयोऽप्यभ्युदयं कामयमाना भक्तजनवल्लभस्य भगवतः श्रीनाथस्यावासभूम्यामिह पुण्यपुर्यां सुप्रथितख्यातेरस्य निखिल-भारतवर्षीय-संस्कृतसाहित्यसम्मेलनस्य विशिष्टाधिवेशन-प्रसङ्गेन समवेताः स्मः ।

तत्र भारतीयेन अधिशासनेन भारतगतस्य संस्कृताध्ययनस्य सांप्रतिकीं समवस्थां सर्वतो दिशं परिशीलयितुम्, अथ संस्कृताध्ययनस्य संस्कृतसंशोधनस्य चाभिवृद्ध्य उपायविशेषानुपकल्पयितुं संस्कृतायोगस्य नियुक्तिरेव विशेषतोऽस्य विशिष्टाधिवेशनस्य निमित्तमिति नाविदितं भवताम् ।

आशोत्फुल्लमानसैः संस्कृतानुरागिभिश्चिराय सोत्कण्ठमुद्वीक्षितस्य खल्वस्य संस्कृतायोगस्य नियुक्तिर्नूनं सर्वेषामस्माकं प्रसन्नताया विषयः । भारतवर्षस्य सर्वतो दिशमभिनवनिर्माणकामनाया अनुकूलैव सा सर्वथा । तदर्थं चाधिशासनमस्माकं धन्यवादानर्हति ।

तथापि खेदस्यायं विषयो यदायोगस्य संघटनाप्रकारः संस्कृतज्ञेषु महतो विषादस्य क्षोभस्य च प्रसङ्गमुपस्थापयति। तस्य च कारणम्—आयोगसदस्येषु संस्कृताध्ययनाध्यापनस्य प्राचीनपरम्पराया निर्वाहकस्य पक्षस्य प्रायेण सर्वथा अभाव एव। कति नाम विविधविषयविशेषज्ञेष्वपि तत्सदस्येषु एतादृशा येषां प्राचीनपरम्परागतायाः संस्कृतपठनपाठनपद्धतेः, वाराणसीसदृशस्थानेषूपलभ्यमानस्य तद्वातावरणस्य वा, साक्षादनुभवो भवेत् ?

परःसहस्रवर्षेभ्योऽविच्छिन्नपरम्परायास्तस्याः पद्धतेर्दुरूहग्रन्थानामध्ययनाध्यापनकौशलस्य प्रौढप्रगाढपाण्डित्यस्य च संरक्षणदृष्ट्या अद्वितीयं महत्त्वमिति को नाम विप्रतिपद्येत ?

नूनमेतादृशस्यायोगस्य नियुक्तिर्वरविरहिताया वरयात्रायाः प्रस्थानमिवाभाति। अथवा सत्यमेवैतत्—

'येषामर्थे काङ्क्षिता' तैर्दैवचायया: समुन्नतिः।
त एवोत्सारिता दूराद्हो! लोकविडम्बना॥

तेनैतेन संस्कृतप्राणानां विदुषां भारतव्यापिना क्षोभेण विषादेन च भारतीयमधिशासनमपरिचितमिति नैव संभवति। अद्यापि विद्यते समयः। आशास्यते सर्वैरप्यस्माभिर्यन्न्यूनातिन्यूनं चतुर्णां तस्याः परम्परायाः साक्षादनुभववतां विदुषामपि तत्र संनिवेशेन आयोगविषयक उक्तः संकुचितदृष्टिदोषः सद्यः परिह्रियेताधिशासनेन। आयोगस्य पूर्णतया साफल्यलाभाय नितरामावश्यकमेतदिति वै सर्वेषामस्माकमभिमतम्।

यथा तथा वा भवतु। नैवात्र संदेहो यत्सांप्रतिके भारते संस्कृताभ्युत्थानस्य तदभ्युपायानां च सर्वेषां सर्वथा प्राप्तकालम्। किञ्च, संस्कृतायोगस्य शिक्षामन्त्रालयस्य च सूचनार्थं, तयोः संस्कृतसंबन्धिन्यां विचारणायां यथासंभवं साहाय्यप्रदानार्थं च कर्तव्यमिदमस्माकं यत्संस्कृतस्याध्ययनाध्यापनपद्धतेरनुशीलनस्य च सर्वानेव पक्षान् पुरस्कृत्य संस्कृतभाषायास्तद्विदां चावश्यकतानां विषये स्वकीयं निश्चितं मतं प्रकाशनीयमिति।

तत्र देववाण्या भूयःसमुत्थानस्य सांप्रतं कुत आवश्यकतेत्येव तावत्समाधानमपेक्षते—

( १ )

## अभिनवभारते संस्कृतम्

कस्यात्र संदेहो यत्सांप्रतिके भारतस्य पुनर्निर्माणे नैकदृष्ट्या संस्कृताभ्युत्थानस्य महत्युपयोगिता। तथा हि

(क) **सांप्रदायिकं सांमनस्यमेव** तावद् गृह्यताम्। नाविदितमेतत्कस्यापि यत् चिरकालप्ररूढाभ्यः संकीर्णसांप्रदायिकभावनाभ्यो महद्भयमस्माकं राष्ट्रस्य। तासामीदृशीनां दुरन्तानां भावनानां प्रतीकारार्थं देववाण्या अभ्युत्थानं हि नूनमद्वितीयं साधनम्।

संस्कृतभाषा हि चिरादेव समानरूपेण समाश्रिता परिपुष्टा च

विभिन्नसंप्रदायैः। प्रायेण सर्वेषामपि भारतीयसंप्रदायानां धार्मिकवाङ्मयस्याधाररूपा देववाणी।

ततश्च निर्विवादं तत्तद्विभिन्नसंप्रदायेष्वन्तर्वर्त्तिनीमेकसूत्रतामादधाना सांप्रदायिकसामनस्यसंस्थापनस्य मुख्यतमं साधनं देववाणी।

( ख ) विभिन्नप्रान्तीयभाषागतसंघर्षेणाप्येका दुरूहा समस्या सांप्रतमस्माकं राष्ट्रस्य।

अस्याः कठिनसमस्यायाः समाधानमपि संस्कृतभाषायाः समाश्रयेणैव सुतरां संपादयितुं शक्यते।

सर्वासामेव भारतीयार्यभाषाणां संस्कृतं जननी। अन्यासामपि नैकविधपोषणकरणाद् हेतोर्धात्रीव सा वर्तते।

ततश्च न केवलं विभिन्नप्रान्तेषु परस्परं सामनस्यसंस्थापनार्थमेव, किन्तु तत्तत्प्रान्तीयभाषाणां सम्यगध्ययनार्थं पोषणार्थं चापि देववाणी एवास्माकं शरणम्।

(ग) सामान्येन भारतीयसंस्कृतेरन्तरभिप्रायस्य आविष्करणार्थमपि संस्कृतस्याभ्युत्थानमपेक्षितम्।

नितान्तमतिप्राचीना सांस्कृतिकी परम्परा भारतस्य। तस्य किमपि नूतनं निर्माणं तां सांस्कृतिकीं परम्परामाश्रित्यैव भवितुमर्हति।

किञ्च, भारतीयसंस्कृतिर्हि नूनं स्वरूपत एव सकललोककल्याणसाधनक्षमा। सा वै भारतस्य जगतः कृतेऽमरसंदेशः।

ततश्च भारतीयसंस्कृतेर्यद् हार्दं तस्याविष्करणं नामास्माकं प्रथमं कर्तव्यम् । तच्च तस्या दीर्घपरम्पराया अध्ययनेनैव साध्यम् । तच्च प्रथमतः संस्कृतस्य समुत्थानमपेक्षते ।

संस्कृतं वाव भारतीयसंस्कृतेः शरीरमधिष्ठानं वा ।

(घ) अभिनवभारतस्य निर्माणेऽद्वितीयमनिवार्यं च साधनं तदीया शिक्षापद्धतिरिति सर्वेषां सम्मतम् ।

भारते सांप्रतं प्रचलितायाः शिक्षापद्धतेर्ये महान्तो दोषास्ते प्रतिदिनमस्मद्राष्ट्रनायकैस्तत्तन्मञ्चेभ्य उद्घोष्यन्ते । तेषां प्रतीकारार्थमयमेवाभ्युपायो यद् भारतीयसंस्कृतेराधारेण तस्याः परिष्कारो नाम । भारतीयसंस्कृतिर्हि स्वभावत एव श्रम-तपः-संयम-सौम्यत्व-भ्रातृभावना-गुरुसपर्यानुशासनप्रभृतिपवित्रादर्शानां प्रतिपादिका सांप्रतिकशिक्षापद्धतेर्दोषाणां प्रतीकारस्य परमोऽभ्युपायः ।

संस्कृतं वाव भारतीयसंस्कृतेः शरीरमधिष्ठानं वेति पूर्वमवोचाम । ततश्च सांप्रतिकशिक्षापद्धतेः परिष्कारार्थमपि संस्कृतस्य समुत्थानं सुतरां साहाय्यकृत् ।

## संस्कृतशिक्षापद्धतेः परिष्कारः

तदेवं नैकदृष्ट्या अभिनवभारतस्य निर्माणार्थं जगतः कल्याणार्थं च सुतरामपेक्षिताया देववाण्याः सांप्रतिकशिक्षापद्धतेः परिष्कारस्य दिक्प्रकारयोर्निर्धारणमेवात्र नः प्रधानमुद्देश्यम् ।

परं देववाण्या अतिप्राचीनायाः परम्पराया अनुसन्धानमन्तरेण,

न हि तस्याः सांप्रतं प्रचलितायाः शिक्षापद्धतेः स्वभावोऽवगन्तु शक्यते, न चापि तस्यां सांप्रतिकीनामवस्थानामावश्यकतानां चानुरूप्येण चिकीर्ष्यमाणस्य परिष्कारस्य दिक्प्रकारौ निर्धारयितुं शक्येते।

ततश्च तस्या ऐतिहासिकस्य वृत्तस्य परम्परायाश्च किंचित् सिंहावलोकनं सर्वथापेक्ष्यत इति तदेव प्रथममुपक्रम्यतेऽस्माभिः।

( २ )

## ऐतिहासिकं सिंहावलोकनम्

देवतायाः खलु ऐतिहासिकस्य वृत्तस्य कालत्रयेण विभागः कर्तुं शक्यते—प्रारम्भकालः, विस्तारकालः, तथा संकोचस्य ह्रासस्य वा काल इति।

### प्रथमः कालः

सामान्यदृष्ट्या वैदिकेन वाङ्मयेन सामकालिक एवैष कालः।

प्रायेणास्मिन्नेव काले भारतीयसंस्कृतेरार्यसभ्यतायाश्च प्रथमो विकासः प्रस्फोटनं च जातम्। अस्माकं सामाजिकधर्माणां जीवनस्य मर्यादानामादर्शानां च स्थापनाया अयमेव कालः।

भारतीयसंस्कृतेर्जीवनस्रोतसां श्रुतीनामेष एव कालः। संस्कृतस्य देवभाषात्वमेतत्कालकृतमेव।[१]

---

१—तु० "मन्त्रः कल्पो ब्राह्मणं चतुर्थी व्यावहारिकीति याज्ञिकाः।" "तस्माद् ब्राह्मणा उभयीं वाचं वदन्ति या च देवानां या च मनुष्याणाम्" (निरुक्ते १३ ९)।

## द्वितीयः कालः

आरम्भकालादनन्तरं देववाण्या अतिमहतो विस्तरस्य कालोऽयं द्वितीयः कस्य नाम नाश्चर्यस्य विषयः ।

भारतीयसंस्कृतेः समन्वयात्मकस्वरूपप्रतिपादनस्य पुराण-रामायणमहाभारतादेर्विस्तृतस्य वाङ्मयस्य, जगद्विस्मयकराणां पाणिन्यादिमुनिरचितसूत्राणाम्, भासकालिदासादिनिर्मितस्य हृदयहारिणो गद्यपद्यात्मकस्य काव्यस्य, यावज्जीवनव्यापारमनु पुरुषार्थचतुष्टयप्रतिपादिकानां वार्त्तादण्डनीत्यादिविद्यानाम्, तत्तत्कलासाहित्यस्य च विकासोऽस्मिन्नेव काले समभवत्।

तत्तद्विषयेषु आकरग्रन्थानां रचनायाः, तत्तद्रूपेण परम्परागताया भारतीयसंस्कृतेः समन्वयस्य, तस्या बौद्धधर्मादिरूपेण देशदेशान्तरेषु विस्तारस्य चाप्ययमेव कालः ।

**किं बहुना, राष्ट्रस्य जीवनस्य च सर्वेषामप्यङ्गानामानुकूल्येन देववाण्या विभिन्नविभागेषु सुमहतो वाङ्मयस्य सृष्टिरस्मिन्नेव कालेऽजायत ।**

**प्रायेण स्वोपज्ञविचारविचारकाणामेवैष कालो भारतस्येतिहासे ।**

बौद्धादिधर्माणामपेक्षया वै स्वर्णयुगमेतद् भारतीयेतिहासस्य !

सर्वमप्येतत् चेतश्चमत्कारि वृत्तं देववाण्यास्तत्काले सर्वतो दिशं स्वाराज्यभावनामनुभवतो भारतस्य सर्वथा स्वाभाविकम् ।

## तृतीयः कालः

भारतस्येतिहासे प्रायेण राजनीतिकदास्यस्यायं कालः । अस्मिन् हि काले जातीयजीवने सर्वविधस्य संकोचस्य ह्रासस्य संकीर्णतायाश्च साम्राज्यं सर्वतो दिशमवर्तत ।

जनताया राष्ट्रस्य च जीवनेन संबद्धानां वार्तादण्डनीतिशिल्पशास्त्रादिनैकविद्याविभागानां विलोपः संकोचो वा, सांप्रदायिकः शास्त्रीयो विवादश्च नूनमेतस्य कालस्य प्रदानम् ।

नैवात्र कश्चिदाश्चर्यस्यावसरः।

स्वराज्यभानावस्तंगते राष्ट्रियप्रतिभाकमलानां वै संकोचः स्वाभाविको भवति ।

नूनमेतदन्धकारयुगं भारतीयसंस्कृतेर्देववाण्या वाङ्मयस्य च।

( ३ )

## वर्तमानपरिस्थितेरीक्षणम्

येयं खलु वर्तमानकाले भारतवर्षे देववाण्याः प्रचलिता शिक्षापद्धतिः, आपाततः सा द्वौ पक्षाववगाहते । प्रथमं तावत्संस्कृतपाठशालादिषु तत्तत्संस्कृतपरीक्षापाठ्यक्रमानुसारेण प्रचलिता परिपाटी । द्वितीया या आधुनिकस्कूलकालेजादिषु प्रचलिता ।

## तत्र द्वितीयपद्धतेर्विषये

न खलु बहु वक्तव्यमस्माकम्। स्कूलकालेजादिषु अद्य यावद् इंग्लिशभाषायाः प्राधान्येन, 'ग्रामं गच्छंस्तृणं स्पृशति' इति न्यायानुसारं, सर्वथा गौणस्थानमेव संस्कृतस्य। नहि देववाण्याः प्रौढपाण्डित्यं, न चापि दुरूहप्राचीनग्रन्थानां विशेषज्ञता पारम्परिकशास्त्रीयपद्धतेरानुकूल्यं वा केनाप्यभिलष्यते तां परिपाटीमनुसरता। सत्यम्, एम० ए० परीक्षानन्तरं वैज्ञानिकविवेचनापद्धत्यनुसारेण उत्तराध्ययनस्य अनुसन्धानस्य चानुकूल्यं व्यवस्था च यत्र कुत्रचित् समुपलभ्यते तस्यां परिपाट्याम्। नूनं तत् तस्याः परमं वैशिष्ट्यम्। परन्तु विरला एव केचिदध्ययनस्य तां कोटिमाटीकन्ते। तेऽपि प्रायेण प्राचीनपरिपाटीमनु अधीयाना एव भवन्ति।

उपरिनिर्दिष्टकारणैरस्याः पद्धतेर्विषये केवलमेतावदेवास्माकं वक्तव्यं यत् सांप्रतं स्वतन्त्रे भारते इंग्लिशभाषायाः प्राधान्ये प्रायेण विलोपोन्मुखे तस्यामपि संस्कृताध्ययनपद्धतौ अपेक्षितस्य समुत्कर्षस्य साधिकारविशेषज्ञतादृष्टेश्च आनयनार्थं परिष्कारः सद्य एवापेक्ष्यते।

तस्यामवस्थायाम्, अधःप्रतिपादिताः प्राचीनपद्धतेः परिष्कारा अपि क्रियन्ते चेत्, प्रायेण उभयोरपि उक्तपद्धत्योरेकविधत्वमेव क्रमशः संपत्स्यत इत्यस्माकं विश्वासः। सर्वथा चैतत्समुचितम्।

**कस्मिन्नपि स्वतंत्रे प्रगत्युन्मुखे जागरूके च देशे शिक्षापद्धतौ नैकविधता नैव चिराय स्थातुं शक्नोति।**

सत्यप्येवं, सर्वसाधारणजनतायां संस्कृतं प्रत्यनुरागस्य विवृद्धौ द्वितीयपद्धतेरपि विद्यते काचिदुपयोगितेति नैव विस्मरणीयम्। एतद्दृष्ट्यैव तां प्रति बहुमानोऽस्माकम्। परमेतद्दृष्ट्यापि संस्कृतस्य सरलीकरणस्य तत्पठनपाठनशैल्यां रोचकताया आकर्षणस्य च संपादनस्य महत्यावश्यकता। तदत्र विशेषज्ञैरुपायाश्चिन्तनीयाः। अत्र विषयेऽधस्तादपि विचारयिष्यामः।

## पारम्परिकसंस्कृतशिक्षापद्धतिः

स्पष्टमेतद् यद् वास्तविकाध्ययनदृष्ट्या खलु पारम्परिकसंस्कृताध्ययनपद्धतेरेवाप्रतिमं महत्त्वम्। अतस्तामाश्रित्यैवास्माभिरधस्ताद् विशेषतो विचारः क्रियते।

प्रधाने हि कृतो यत्नः फलवान् भवतीत्येष वै न्यायः।

## तस्याः स्वरूपं गुणदोषपरीक्षणं च

देववाण्या वर्तमानकाले पाठशालादिषु प्रचलिता शिक्षापद्धतिर्नैव एकान्ततो नवीना, न चाप्यतिप्राचीनेत्यत्र विषये विदुषां नैव विवादः। वस्तुतस्तु उपरिनिर्दिष्टतृतीयकालस्यान्धकारयुगे प्रचलिता पाठ्यपद्धतिरेव प्रायेण स्वेन रूपेणानुवर्त्तमाना, अंशमात्रेण रूपान्तरं प्रापिता वा, बृटिशशासनकालेऽपि नूतनपरीक्षाणां कृते प्रवर्त्तितासीत्।

एवं च सति राजनीतिकदास्ययुगस्य दुष्प्रभावेण प्रभाविता सा नूनं तत्कृतदोषैर्विहीना भवेदिति नैव संभवति। तथा चानुपदमेव प्रदर्श्यतेऽस्माभिः।

जगतः, विशेषतो भारतवर्षस्य, सांप्रतिक्याः परिस्थितेरावश्यकतानामानुगुण्येन, संस्कृतज्ञानां वास्तविकीं समुन्नतिं प्रगतिं च पुरस्कृत्य, नूतनसंस्कृतशिक्षापद्धतेर्निर्धारणं वर्तमानसंस्कृतशिक्षापद्धतेः सामान्येन गुणदोषविवेचनपुरस्सरमेव कर्तुं शक्यत इति तदेव क्रियतेऽस्माभिः।

## तत्र गुणपक्ष एव तावद्विचार्यते

कस्यैतत् तिरोहितं यदस्माकं सुदीर्घे राजनीतिकपारतन्त्र्यकाले सर्वतः प्रतिकूलासु परिस्थितिषु कथंचित् यत्किंचित् संस्कृतपरम्परायाः संरक्षणमासीत् तत्खलु समस्तेऽपि भुवने कस्यापि वाङ्मयस्येतिहासेऽदृष्टचरम्।

तस्मिन् हि कठिनातिकठिने समये तपस्यां श्रद्धां देशभक्तिमेकान्तनिष्ठां विशेषतश्च देववाण्यां प्रत्यनन्यप्रेमभावनां समाश्रितैर्भारतीयविद्वद्भिर्बाहुल्येन प्राचीनानेकदुरूहग्रन्थार्णवावारपारीणान् टीकोपटीकाप्लवान् विधाय कथमपि प्रौढपाण्डित्यपरम्परा संरक्षिता।

सैव प्रौढपाण्डित्यपरम्परा, प्रतिपाद्यविषयाणां दृष्ट्यातिसंकुचितापि, भारतीयविभिन्नप्रान्तेषु प्रचलितसंस्कृतपरीक्षाप्रणाल्याः साहाय्येन कथंचिदद्यापि प्रचलति।

ततश्च संस्कृतपठनपाठनपरम्परायाः कथंचित्संरक्षणम्, देववाण्यास्तृतीयकाले निर्मितटीकोपटीकागतप्रौढपाण्डित्यपरम्परायाः कथंचिन्निर्वाहश्च प्रचलितपाठ्यपद्धतेर्महनीयो महान् गुणः।

किञ्च, अद्यापि दिष्ट्या संस्कृतमासेतुहिमालयम् आपूर्वापर-समुद्रं च भारते परस्परव्यवहारसाधनं वर्तते। अद्यापि परःसहस्राश्छात्राः प्रतिवर्षं संस्कृतपरीक्षाणां कृते प्रयत्नपरा दृश्यन्ते। तदेतत्सर्वं देववाण्याः कृते वर्तमानपरीक्षाणामुपकारमेवोद्घोषयति।

सत्यप्येतस्मिन् महति गुणे, नैकेषां दोषाणां त्रुटीनां च हेतोर्वर्तमाना संस्कृतशिक्षापद्धतिर्नूनं सद्य एव परिष्कारमर्हति।

## ते दोषास्त्रुटयश्च समासेनैवाधो निर्दिश्यन्ते

(१) भारतेतिहासस्य स्वतन्त्रतायाः स्वर्णयुगे निर्मितानामाकर-ग्रन्थानामार्षग्रन्थानामन्येषां च प्रमेयपदार्थबहुलग्रन्थरत्नानां प्रायेणोपेक्षा।

अत एव कति नामाद्यत्वे महान्तोऽपि विद्वांसोऽतिविस्तृतेन वैदिकेन वाङ्मयेन, अर्थशास्त्र-निरुक्त-महाभाष्य-वाक्यपदीयाद्यनेक-ग्रन्थरत्नैश्च सम्यक् परिचिता दृश्यन्ते ?

(२) व्यापकपाण्डित्यस्य स्थाने मध्यकाले पुष्टिं गतायाः शास्त्रार्थशैल्या आधारेण एकदेशिपाण्डित्य एव प्रायेण पक्षपातः।

पदवाक्यप्रमाणानां पारगा नैकशास्त्राभिज्ञाः पारोवर्यविदो विद्वांसोऽद्यत्वे केवलं नामशेषतां गता इत्यत्रैतदेव प्रधानं कारणम्।

गणरत्नमहोदधिकारो वर्धमानोऽष्टौ व्याकरणानि सम्यगभ्यस्य स्वग्रन्थं निर्मितवानिति को नामाद्यत्वे श्रद्धास्यति ?

उक्तप्रवृत्तिमूलक एव हन्त ! सषडङ्गवेदाध्ययनप्रवृत्तेश्चिर-कालादेव विलोपः प्रवृत्ते।

(३) विवेचनाबुद्धेरनुदयः, वस्तुतत्त्वज्ञानस्योपेक्षा च ।

कस्यैतत्तिरोहितं यदद्यत्वे हि संस्कृतशिक्षापद्धतेरयमेको महान् दोषो यच्छात्रेषु कस्मिन्नपि विषये, विवेचनाबुद्धेस्तु का कथा, स्वाभाविकविशिष्टजिज्ञासाबुद्धेरप्यनुदय एव ।

अवैज्ञानिकी शिक्षणपद्धतिः, प्रतिपाद्यविषयमनवबुद्ध्यैवातिमात्रं ग्रन्थानां कण्ठस्थीकरणपरिपाटी च ( अद्यत्वे प्रायेण परीक्षार्थिनां सहचरी ) नूनमत्र मुख्यं कारणम् ।

संस्कृतविद्वत्सु अनुसन्धानप्रवृत्तेरवरोधस्याप्येतदेव कारणं बहुत्वेन ।

(४) सामान्यव्यवहारोपयोगिनां गणितभूगोलेतिहासराजशास्त्रपौरशास्त्रलोकभाषादिविषयाणां ज्ञानस्योपेक्षा ।

(५) जनताया जीवनेन लोकस्य राष्ट्रस्य च प्रगत्या संबद्धानां वार्तादण्डनीत्यादिविषयाणां पाठ्यक्रमेऽसन्निवेशः ।

(६) समष्ट्यात्मकव्यापकसांस्कृतिकदृष्टेरभावेन सांप्रदायिकसंकीर्णभावनायाः तत्तज्जातिगतसंकीर्णभावनायाश्च वातावरणम्, भारतीयसंस्कृतेः समन्वयात्मकबुद्धेरभावो वा ।

(७) स्वाध्याय (स्वयमध्ययन) प्रवृत्तेरनुद्बोधनम् ।

चिराय लुप्तेषु अद्यानुसंधानेन प्राकाश्यमुपगतेषु अर्थशास्त्रसदृशेष्वपि ग्रन्थेषु बाहुल्येन दृश्यमानं विदुषां लोकविदितमाश्चर्यकारि अनौत्सुक्यमेतस्याः प्रवृत्तेरेव निदर्शनम् ।

एतैरेवंजातीयैरन्यैश्च विद्याया ज्ञानस्य च प्रगतेर्विरोधिभिर्दोषैर्युक्ता बाहुल्येन सांप्रतिकी संस्कृतशिक्षापद्धतिस्तत्तद्विद्यालयेष्विति को नाम न स्वीकरिष्यति ?

अस्माकं संस्कृतज्ञानामसन्तोषप्रदाया वर्तमानायाः परिस्थितेर्नूनं सैव कारणम् ।

( ४ )

## संस्कृतज्ञानां सांप्रतिकी स्थितिः कर्तव्यं च

आसीत्सोऽपि समयो भारते यदा खलु जीवनयात्रायाः प्रत्येकविभागे देववाण्या एवाप्रतिहतं साम्राज्यं सुस्थितमवर्त्तत ।

सैनापत्यं च राज्यं च दण्डनेतृत्वमेव च ।
सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥
(मनु० १२।१००)

इत्यादिप्रमाणैरयमर्थः स्पष्टं प्रतीयते ।

परं हन्त ! कालवशात्सर्वं तद्विपर्यस्तम् ।

सांप्रतिकजगति जीवनस्य यात्रायां राष्ट्रस्य वा प्रगतौ या खलु देववाण्याः संस्कृतज्ञानां वा स्थितिः कस्य सा न विदिता । नहि देववाण्याः कश्चिदुपयोगः सामान्यलोकव्यवहारे, नापि काचिद् विशेषापेक्षा संस्कृतज्ञानां राष्ट्रस्य विभिन्नविभागेषु । ततश्च उपेक्षिता इव सांप्रतिकजगति, कथं कथमपि स्वजीवननिर्वाहं कुर्वाणाः संस्कृतज्ञाः कथन्नु कंचिदपि सन्तोषमनुभवितुमर्हन्ति ? नात्र वैमत्यं यत्संस्कृतज्ञाः सांप्रतं नूनमात्मनोऽवमाननारोगेणाक्रान्ता इव,

किंकर्तव्यविमूढा इव, केवलं साधारणातिसाधारणपदानां प्राप्तयेयमेव प्रयत्नपरा दृश्यन्ते। संस्कृतज्ञानेन सह लौकिकोन्नतेः कश्चित् प्रातिस्विको विरोधः, अत एव लौकिकोन्नतिदृष्ट्या संस्कृतज्ञानोपार्जनं कश्चिदपराध इतीव तेषामान्तरो विश्वासः प्रतीयते !

'संस्कृतज्ञाः सन्तोऽपि वयम्' इत्यस्य स्थाने 'संस्कृतज्ञत्वकारणादेव वयम्' राष्ट्रस्य तत्तद्विभागेषु न केवलं कार्यकर्तार एव, किन्तु अध्यक्षा अपि, संचालका अपि, नेतारोऽपि, मन्त्रिणोऽपि भवितुमर्हाः, इत्येष विचारस्तु तेषां मनःसु प्रायेण स्थानमेव न लभते।

एवं विचार एवात्र विषये संस्कृतज्ञानां स्थितेः पठनपाठनपद्धतेर्मनोवृत्तेश्च स्वरूपं नः समक्षं साक्षादुपस्थापयितुमलम्।

नूनमखिलमेतद् वृत्तं संस्कृतज्ञानां लोकप्रगतेर्लोकावस्थितेश्चापरिज्ञानमूलकम् ।

तत्रैतस्यामवस्थायां संस्कृतज्ञानां यत्कर्तव्यं तत्सुतरां स्पष्टम्। सर्वतः प्रथमं तैः, सांप्रतिकशिक्षादीक्षितैः समानमेव, राष्ट्रस्य सर्वतो दिशं जायमानायां प्रगतौ सहयोगदानस्य सर्वेषूत्कृष्टविभागेषु प्रवेशस्य च योग्यता संपादनीया।

संस्कृतज्ञा असामयिकाः, अत एव विश्वविद्यालयीयशिक्षितैः समानं न सर्वत्र समानं प्रवेशं वा लब्धुं योग्या इत्येषोऽपवादस्तैः समूलघातं हन्तव्यः।

तदेतत्सर्वं कथमिव संपादयितुं शक्यत इत्यत्र विषये नैव विद्यते कस्याश्चिद् द्वैधा प्रतिपत्तेरवकाशः। नूनं देववाण्याः शिक्षापद्धतेः प्रगत्युन्मुखः परिष्कार एव तस्याभ्युपाय इत्यत्र नैव कस्यापि सन्देहस्य विवादस्य वावसरो विद्यते।

तस्यैव सर्वथापेक्षितस्य परिष्कारस्य मौलिकाः सिद्धान्ताः, **लक्षशः संस्कृतच्छात्राणां शतशश्चाध्यापकानां विद्यालयानां च स्वकीयस्यानुभवस्याधारेण,** अधः संक्षेपेणैव प्रतिपाद्यन्तेऽस्माभिः।

## ( ५ )

## संस्कृतशिक्षापद्धतेः परिष्कारस्य मौलिकाः सिद्धान्ताः

(१) सामान्यव्यवहारोपयोगिनां गणितभूगोलेतिहाससामान्यविज्ञानादिविषयाणां ज्ञानम्।

तादृशं सामान्यज्ञानं हि, न केवलं छात्राणां यथायथं मनोविकासार्थमेव, न केवलमद्यत्वे सर्वविधाया ज्ञानविज्ञानयोः समुन्नतेराधाररूपत्वेन लोकप्रगतेरवबोधनार्थमेव, किन्तु स्वकीयजीवनयात्रायाः सौकर्यार्थमप्यावश्यकम्।

(२) प्रौढपाण्डित्यस्य संरक्षणेन सहैव विवेचनाशक्तेरप्युपबृंहणम्।

तत्तच्छास्त्रेषु परम्पराप्राप्तं प्रौढपाण्डित्यं नूनमस्माकं गर्वस्य गौरवस्य च विषयः। अत एव तस्य संरक्षणमस्माकं प्रथमं कर्तव्यम्।

परन्तु तदेव केवलं सांप्रतिकसमस्यानां समाधानाय नैव पर्याप्तम्। अर्थशास्त्रेतिहासराजनीतिप्रभृतिविषयेष्वपि, नूतनेष्व-नूतनेषु च, तादृशमेव, ततोऽप्यधिकं वा, प्रौढपाण्डित्यमद्यत्वेऽपेक्ष्यते।

**अत्रेदमप्यवधेयं यत्प्रौढपाण्डित्यं हि प्राधान्येन विवेचनाबुद्धिमपेक्षते। तां विना हि तत् प्रायेण आहोपुरुषिकारूपे प्रौढिवादे, वस्तुतत्त्वपरीक्षणप्रवृत्तिविरोधिन्यामत्यन्तं शब्द-प्रमाणपरतायाम्, सर्वज्ञानोन्नतिविरोधिन्यां विचारसंकीर्णतायामेव वा पर्यवस्यति।**

ततश्च प्रौढपाण्डित्यं वास्तविकीं पुष्टिं फलेग्रहितां[1] चाश्नुवीतेति संस्कृतशिक्षापद्धतौ सर्वज्ञानसमृद्धेर्जननीरूपाया विवेचना-शक्तेरुपबृंहणास्याप्यतीवावश्यकता।

## (३) अनुसन्धानप्रवृत्तेरुद्बोधनम्।

नैतदविदितं विदुषां यत्सांप्रतिकजगति येयमाश्चर्यमयी चेतश्चमत्कारिणी समुन्नतिरभितो दृश्यते सा खलु ज्ञानविज्ञानयोर्विभिन्न-विभागेषु निरन्तरमभियोगभाजां विदुषामनुसन्धानस्यैव फलम्।

---

१. फलेग्रहितां साफल्यम्।

अत एवानुसन्धानप्रवृत्तेः प्रोत्साहनार्थं सर्वेपून्नतेपु राष्ट्रेषु प्रतिवर्षमधिकाधिको धनव्ययः क्रियमाणः श्रूयते।

संस्कृतवाङ्मयेऽपि तदपेक्ष्यते सुतराम्।

परं खेदावहमेतद् यत्प्राचीनपरिपाटीमाश्रित्य संस्कृतपठनपाठनपरम्पराया निर्वाहकाः संस्कृतज्ञा विद्वांसः, स्वकीयविषयायां विशेषज्ञाः सन्तोऽपि, अद्य यावदस्मिन्ननुसंधानकार्ये न केवलं प्रायेणोदासीना एव, किन्तु बाहुल्येनापरिचिता अपि एतस्य प्रक्रियया मौलिकसिद्धान्तैश्च।

ततश्च संस्कृतस्य नूतनशिक्षापद्धतावनुसन्धानप्रवृत्तेरुद्बोधनमपि मुख्यं स्थानं लब्धुमर्हति।

## (४) विद्यायास्तत्तद्विषयेषु नवीनोन्नतेरात्मसात्करणम्।

भारतस्य दास्यकाले सर्वाप्यस्माकं प्रगतिरवरुद्धासीत्। संस्कृतवाङ्मयमप्यस्याः प्रवृत्तेर्नापवादः। गणितज्यौतिषादिविषयेषु या पुनः सांप्रतिकी समुन्नतिः सा केन न श्रुता भवेत्। एतादृशी एव परिस्थितिरितिहासराजशास्त्रभाषाविज्ञानादिविषयाणामप्यत्वे।

ततश्चैतादृशेषु विषयेषु नवीनोन्नत्या संस्कृतज्ञा अपि परिचिता भवेयुरिति क्रियतामेव यत्नः।

को नु आत्मनो हितमाकाङ्क्षन् विद्यायाः समुन्नतावनुदारो भवितुमर्हति?

## (५) समष्ट्यात्मकभारतीयसंस्कृतेर्भावना।

अयमेवार्थः 'सांप्रदायिकासहिष्णुताया निराकरणम्' अथवा 'सांप्रदायिकसमभावना' इत्यादिप्रकारैरपि वर्णयितुं शक्यते।

सैषा भावनास्माकं राष्ट्रस्येव, संस्कृतविद्यास्थानानां कृतेऽपि अतितरां मौलिकीमपरिहार्यां चावश्यकतां बिभर्त्ति। तद्विषये कीदृशोऽपि संकोचो न केवलमात्मप्रवञ्चनैव, किन्तु राष्ट्रभ्रंशकरो महानपराधोऽपि।

## (६) तत्तज्जात्यनपेक्षिणी यावद्भारतीया दृष्टिः।

उपरिष्टात्प्रतिपादितेन सिद्धान्तेन प्रायेण गतार्थमप्येतत् किञ्चित्प्रपञ्चार्थमेवोक्तं मन्तव्यम्।

सांप्रदायिकसंकोच इव तत्तज्जातिगतः संकोचोऽपि देववाण्याः समुन्नतेरत्यन्तं बाधक इति कस्य तिरोहितम्। सोऽयं सत्यं न केवलं देववाण्या एव, किन्तु भारतीयराष्ट्रस्यापि मूले कुठाराघातः।

सुप्रसिद्धेषु 'ऑक्सफ़ोर्ड' विश्वविद्यालयादिषु पृथिव्याः कस्यापि देशस्य कोऽपि च्छात्रः सस्वागतं प्रवेशमाप्तुमर्हति। विशेषतोऽत्रैव तेषामान्ताराष्ट्रिकं महत्त्वम्।

ततोऽस्माकं संस्कृतविद्यालयेषु, राजकीयेष्वराजकीयेषु वा, कीदृशोऽपि सांप्रदायिकस्तत्तज्जातिगतो वा संकोच उपलभ्यमानो महान्तं क्लेशमात्मलज्जां चास्माकं जनयति।

## त एते मौलिकाः सिद्धान्ता अस्मन्मते सांप्रतिकस्य कस्यापि संस्कृतशिक्षापद्धतेः परिष्कारस्य।

त एव सिद्धान्ताः पञ्चसूत्र्या एवं निर्देष्टुं शक्यन्ते—

(१) प्रौढपाण्डित्यपरम्परायाः संरक्षणम्।

(२) विद्यायास्तत्तद्विषयेषु नवीनोन्नतेरात्मसात्करणम् ।

(३) अनुसन्धानेन विलुप्तप्राचीनशास्त्रादीनां समुद्धारो ज्ञानस्य नूतनः समुत्कर्षश्च ।

(४) सांप्रदायिकसमभावना ।

(५) तत्तज्जातिमूलकं कंचित्संकोचं विनैव यावद्भारतीयः प्रचारः प्रसारश्च ।

एतान्येव संस्कृज्ञानां कृते **'पञ्च शीलानि'** इति वर्णयितुं शक्यन्ते ।

किं वहुना, योगे यमनियमादीनाम्, वेदान्ते शमदमादीनाम्, प्रासादस्य निर्माणे मूलभित्तेः, जीवने च ब्रह्मचर्याश्रमस्य यथापेक्षा, तथैव संस्कृतशिक्षायाः परिष्कारस्य साफल्यार्थमेत आधाराः अपेक्षिताः ।

( ६ )

## आवश्यकाः प्रस्तावाः

प्रचलितसंस्कृतशिक्षापद्धतेरैतिहासिकी भूमिका, स्वरूपम्, संस्कृतज्ञानां सांप्रतिक्य आवश्यकताः, तस्यां पद्धतावपेक्षितस्य परिष्कारस्य मौलिकाः सिद्धान्ताश्च उपरिष्टात् स्पष्टीकृता अस्माभिः ।

अथातस्तत्सर्वं मनसि निधाय भारते भूयोऽपि संस्कृताभ्युत्थानस्य केचिन्नितरामावश्यकाः प्रस्तावा अत्रभवतां विदुषां पूर्वोक्तस्यायोगस्य भारतीयाधिशासनस्य च विमर्शार्थमुपस्थाप्यन्ते ।

तत्र प्रथमं पदमवगाहते

## १—आदर्शसंस्कृतमहाविद्यालयस्य स्थापना

प्रायेण प्रदर्शितमुपरिष्टादस्माभिर्यन्मध्यकालीनपरम्परामनुसरन्ती अद्यत्वे प्रचलिता संस्कृतपठनपाठनपद्धतिरतीव संकुचिता, न केवलं पाठ्यविषयाणां दृष्ट्यैव, किन्तु तदनुसारं शिक्षितानां जीविकाक्षेत्रस्यापि दृष्ट्या।

तत्स्थाने उभयदृष्ट्यापि नूतनसंस्कृतशिक्षापद्धतेः स्वरूपमतिविस्तृतं भवेदिति सुतरां स्पष्टम्। तदनुसारं शिक्षितानां जीविकाक्षेत्राणि यथासंभवं साम्प्रतिकविश्वविद्यालयेषु शिक्षितानां जीविकाक्षेत्रैः समानानि भवेयुरित्येतदपि अर्थादापद्यते।

स्पष्टमेतद् यत्पूर्वोक्ताः सर्वा दृष्टीः पुरस्कृत्य संस्कृतशिक्षायाः समुचिता व्यवस्था तत्तद्राज्येषु विद्यमानाभिः संस्थाभिर्नैव कर्तुं पार्यते। स्वकीयविभिन्नपरम्परावशादन्यथा वा तासां कार्यस्य शक्तेः क्षेत्रस्य च संकुचितत्वावस्थितिर्नूनं स्वाभाविकी। ततश्च वास्तविकदृष्ट्या तादृशी व्यवस्था भारतीयेनाधिशासनेनैव केन्द्रे आदर्शसंस्कृतमहाविद्यालयस्य स्थापनया कर्तुं शक्यते।

अवश्यमेव तेन महाविद्यालयेन तत्तद्राज्यान्तर्गतानां संस्कृतविद्यालयानां कृते आदर्शस्य, विदेशीयानां विदुषां च कृते आकर्षणस्य, स्थानेन भवितव्यम्।

**संस्कृतसाहित्यसम्मेलनमेतद् अस्मिन् सुमहति कार्ये सर्वविधं सहयोगं दातुं सर्वदैव सन्नद्धमित्यस्माकं विशेषतोऽत्र विनिवेदनम्।**

## आदर्शमहाविद्यालयस्य रूपरेखा

तस्यादर्शसंस्कृतमहाविद्यालयस्य रूपरेखाविषय एतावदेव कथनमिह पर्याप्तं यत्तस्य तात्कालिकदैर्घकालिककार्यक्रमावधोनिर्दिष्टप्रकारेण भवेताम्—

### तात्कालिकः कार्यक्रमः

(१) अध्ययनाध्यापनविभागः—

(क) प्रथमपरीक्षामध्यमपरीक्षात्मको विद्यालयविभागः

(ख) शास्त्र्याचार्यपरीक्षात्मको महाविद्यालयविभागः।

(२) पुस्तकालयः संग्रहालयश्च ।

(३) अनुसन्धानविभागः—

(क) उत्तराध्ययनविभागः,

(ख) प्रकाशनविभागः—

(अ) अनुसन्धानपत्रिका ( त्रैमासिकी )

(इ) प्राचीनग्रन्थमाला,

(उ) नूतनग्रन्थमाला ।

(४) संस्कृतपरीक्षाविभागः

### दैर्घकालिकः कार्यक्रमः

दैर्घकालिकः कार्यक्रमस्तु सामान्येन चतुर्विधो भवेत् । तथा हि—

(१) शिक्षणपद्धतिविभागः,

(२) पत्रसंपादनकलाविभागः,

(३) वैदेशिकभाषासंस्कृतिविभागः,

(४) प्रतियोगितापरीक्षाविभागः ।

सामान्येन विभागानामेतेषामुपयोगिताया आवश्यकतायाश्च विषये नेह विशेषतो वक्तव्यमपेक्ष्यते । पूर्वोक्तानां सिद्धान्तानां व्याख्ययैव तत्प्रायेण गतार्थमिति मन्तव्यम् ।

तथापि एतावद्वक्तव्यं यत्—

(क) शास्त्रिपरीक्षाया लक्ष्यम्—जगत्प्रसिद्धोत्कृष्टविश्वविद्यालयानां बी० ए० परीक्षोत्तीर्णस्नातकानामिव सर्वपरिस्थितीरभिपद्यमाणाया योग्यताया व्यक्तित्वस्य च ( तेजसो वर्चसश्चेति वैदिकभाषायाम् ) प्रभाववद् विकासो भवेत् ।

(ख) आचार्यपरीक्षाया मानम्—तत्तद्विषयेषु एम० ए० परीक्षावदेव भवेत् ।

(ग) शिक्षापद्धतेर्विकासक्रमेण शास्त्रिण आचार्याश्च प्रतियोगितापरीक्षास्वपि प्रवेशयोग्या भवेयुरित्यपि अस्माकमभीप्सितम् । तच्चोपायैः सर्वथा साध्यमिति नो दृढो विश्वासः ।

( घ ) कस्यापि साङ्गोपाङ्गस्य शिक्षाक्रमस्य पूर्णतायै अनुसंधानविभागस्यानिवार्यरूपेणावश्यकता भवतीति नैव विदुषां तिरोहितम् ।

शिक्षाया उत्कृष्टं समुचितं च वातावरणमनुसन्धान-विभागमन्तरेण नैव संभवति। संस्कृतपठनपाठनपद्धतेर्वातावरणं सर्वथा प्रगतिशीलमुदारोदात्तभावनाभिरभिव्याप्तं च भवेदित्यावश्यक एवैष विभागः।

उत्तराध्ययनविभागे हि 'पीएच० डी०' परीक्षादिवद् वाचस्पत्यादिपरीक्षार्थं छात्रा अनुसन्धानादिकार्यं कर्तुमर्हन्ति।

( ङ ) दैर्घकालिककार्यक्रमसंबन्धिविभागानां विषय एतावदेव वक्तव्यमस्ति यन्नूतनसंस्कृतशिक्षापद्धतेः पूर्णतः साफल्यं तैर्विभागैर्विना नैव संभवति।

संक्षेपेणैतावदेव वक्तुं शक्यते यत्संस्कृतज्ञानां दृष्टिर्विशदा भवेत्, तेषामुपयोगिताया जीविकायाश्च क्षेत्रं देशे विदेशेषु च सुविस्तीर्णं विशेषतः संमानास्पदं च भवेदित्येतदर्थमेव विभागानामेतेषामावश्यकता नूनं क्रमशो भविष्यति।

उक्तमहाविद्यालयस्य विस्तृता योजना यथावसरं भूयोऽधिशासनस्य संस्कृतायोगस्य वा पुर उपस्थाप्येत इत्यत्रैतावतैवालम्।

## २—केन्द्रीयं संस्कृतशिक्षापटलम्

नाविदितमेतद् भवतां यत्तत्द्राज्येषु प्रचलितासु संस्कृतपरीक्षासु परस्परं प्रायेण कीदृशोऽपि संबन्धो न विद्यतेऽद्य यावत्। नहि तासां मानानि समानानि, न चापि तासु पारस्परिकी मान्यता दृश्यते। अतश्च परीक्षार्थिनां कीदृशं कष्टबाहुल्यं निरर्थकः परिश्रमश्च भवत

इति कस्याविदितम्। एवमन्येऽपि तत्संबन्धिनः प्रश्नाः सन्ति येषामनिर्णयो नानाविधानामव्यवस्थानां प्रायेण कारणम्।

अत उक्तदोषाणां परिहारार्थम्, विशेषतस्तु संस्कृतपरीक्षासु मानदृष्ट्या समानतायाः, परस्परं मान्यतायाः समन्वयस्य च स्थापनार्थम्, तासु सर्वस्या अपि संकुचितदृष्टेरनुदारभावनानां च क्रमशोऽपनयनार्थम्, समस्तभारतीयदृष्ट्या संस्कृताभ्युत्थानस्य कृते प्रयतनार्थं च एकस्य केन्द्रीयसंस्कृतशिक्षापटलस्य स्थापनं नितरामावश्यकम्।

## २—विशालः संस्कृतपुस्तकालयः

कालप्रभावादन्यथा वा नष्टेष्वपि परःशतेषु ग्रन्थरत्नेषु, अद्यापि हस्तलिखितपुस्तकरूपेण यत्र तत्र सहस्रशो ग्रन्था उपलभ्यन्ते। तेषु बहवोऽद्याप्यमुद्रिताः। अन्यैरपि कारणैस्ते महत्त्वशालिनो भवितुमर्हन्ति। नियतं ते संग्रहणीया रक्षणीयाश्च सप्रयत्नमधिशासनेन।

किञ्च, येऽपि तादृशग्रन्थानां संग्रहालया यत्र तत्र राज्येषु विद्यन्ते तेषामपि प्रथमं तु सूच्यो नोपलभ्यन्ते, लभ्यन्तेऽपि चेत्, प्रायेण ता नैव सर्वमान्यसिद्धान्तानामाधारेणोपनिबद्धाः। नापि सर्वत्र भारते समाना एव सिद्धान्तास्तासामुपनिबन्धनस्य।

अन्यच्च, पुस्तकालयेषु विद्यमाना अपि ते ग्रन्था विदुषां कृते प्रायेण सुलभा न भवन्ति।

ततश्च सर्वासामेतादृशीनां त्रुटीनां प्रतीकारायैतावश्यकमेतद् यत्केन्द्रीयाधिशासनेन हस्तलिखितग्रन्थानां मुद्रितपुस्तकानां च

विशालसंग्रहरूपेण महानेकः संस्कृतपुस्तकालयः स्थापनीयोऽचिरेण देहलीनगरे।

## ४—अर्थसाहाय्यं प्रोत्साहप्रदानं च

संस्कृतशिक्षायाः संवन्धे संस्कृतज्ञानां संस्कृतविद्यालयादीनां चार्थकार्श्यस्यातिकठिना समस्येति को न जानाति। एतस्याः समस्यायाः संघर्षेणैव तेषां सर्वे मनोरथा आदर्शाश्च चूर्णीभावमापन्ना निराशावायौ विलीयन्ते। ततश्च संस्कृतस्य समुत्थानेऽतीव प्रमुखता अस्य प्रश्नस्य। तस्य च समाधानमद्यत्वेऽधिशासनसाहाय्यमन्तरा न संभवति।

संस्कृतस्याभ्युत्थाने सर्वतो दिशमर्थसाहाय्यस्यावश्यकता। तथापि अधोनिर्दिष्टविषयेषु विशेषतस्तदपेक्ष्यते—

(१) अध्यापकानां वेतनादि,

(२) विद्यालयानां स्थानानि,

(३) छात्रावासाः,

(४) पुस्तकालयाः,

(५) क्रीडाभूमयो व्यायामशालाश्च,

(६) भविष्णूनां छात्राणां कृते वृत्तिः,

इत्यादि········इत्यादि········

एवमेव संस्कृतविद्भिः संपादितस्य साहित्यिककार्यस्य कृते पुरस्कारादिप्रदानेन प्रोत्साहनमप्यतीवावश्यकम्।

तदेतत्सर्वं सामान्यतस्तत्तद्राज्यैः, विशेषश्च भारतीयाधिशासनेनैव कर्तुं पार्यते।

**संस्कृतायोगस्य विशेषतोऽवधानमत्र विषय आवश्यकम्।**

## ५—संस्कृतप्रसारसमितेः स्थापना

पूर्वनिर्दिष्टरूपरेखानुसारेण आदर्शसंस्कृतमहाविद्यालयस्य स्थापना नूनं संस्कृतस्य पुनरभ्युत्थानार्थमेकं महदाभ्युदयिकमैतिहासिकं चानुष्ठानं भविष्यतीति नो विश्वासः। क्रमेण तमेव पन्थानमन्याः संस्कृतसंस्था ध्रुवमनुगमिष्यन्ति। छात्राणामधिकाधिका संख्या च संस्कृताध्ययनार्थं समुत्सुका भविष्यति।

परमत्र विषये साधारणजनतायाः संस्कृतं प्रति आकर्षणस्यानुरागस्य च वृद्ध्यर्थं विद्यते किंचिन्महत्कर्तव्यं संस्कृज्ञानाम्। तच्चैतत्—

**संस्कृतभाषाया अध्ययने लेखने च यथा सारल्यमुपजायते, यथा च व्याकरणस्य नात्यधिकमपेक्षा भवति तथा सद्यः प्रयत्नो विधीयतामिति।**

सर्वथैवाभूतपूर्वं नूतनं वा एतत्प्रतिपादनमिति नैवात्र शङ्का कार्या।

अन्यभाषास्विव संस्कृतेऽपि व्याकरणदृष्ट्या, विशेषतः प्रयुक्ताप्रयुक्तशब्दराशिदृष्ट्या, शैलीदृष्ट्या च कालक्रमेण जायमानानि परिवर्तनानि कस्य नाम भाषातत्त्वविदो दृष्टिपथं नायान्ति। आस्तां तावद्वैदिकभाषाया वार्ता। पाणिनिमुनिकालादारभ्यैव संस्कृते कियती परिवृत्तिर्दृश्यते ? उदाहरणार्थम्—

महता प्रयत्नेन पाणिनिमुनिना ग्रन्थीकृतस्य लकारार्थप्रकरणस्य, लौकिकस्वरप्रकरणस्य च चिरादेव विद्यते नैव कश्चिदपि प्रायोगिक उपयोगः।

नैकेऽपाणिनीयास्ताद्धिता अन्ये च प्रयोगाः प्रायेण दृष्टिपथमायान्ति प्रामाणिकेष्वपि ग्रन्थेषु। 'कालीन' शब्दोऽपाणिनीयोऽपि योगसूत्रव्यासभाष्ये प्रयुक्तो दृश्यते। 'अधीन' शब्दस्य स्वतन्त्रत्वेनापि प्रयोगोऽभ्यनुज्ञायतेऽमरसिंहेन। छप्रत्ययस्य ठगादीनां चापाणिनीयाः प्रयोगा बहुलमुपलभ्यन्ते।

तिङन्तप्रयोगाणां स्थाने निष्ठाप्रयोगस्य चिराय क्रमशः प्रवर्धमाना शैली कस्याविदिता ?

किञ्च, विद्यते नूतनापि समस्या संस्कृतज्ञानां पुरस्तात्। नैकेषां नूतनातिनूतनविचाराणां कृते नूतनशब्दानां निर्माणमद्यत्व आवश्यकम्। आस्तां राष्ट्रभाषाया वार्ता। संस्कृतभाषाया अप्यभिनवविकासार्थमेतदावश्यकम्।

कादम्बर्यादीनामलंकारबहुला समासबहुला दुरूहा शैलीजनतायां संस्कृतस्य प्रसारार्थं नोपयुज्यते। न चाप्यस्मत्संस्कृतेः प्रधानग्रन्थेषु महाभारतादिषु सा शैली समाद्रियते।

ततश्चास्मिन् संबन्धे सामयिक्याः परिस्थितेरावश्यकतायाश्चानुगुण्येन संस्कृतभाषायाः सर्वतो दिशं प्रगतिः प्रसारश्च भवेतामित्युद्देश्येन विशेषज्ञानां विदुषां सद्यः समितिरेका संस्थापनीया भारतीयाधिशासनेनेत्यस्माकं साग्रहं सनिर्बन्धं च प्रस्तावः।

## ६—संस्कृतविश्वविद्यालयस्य प्रश्नः

प्रसङ्गेऽस्मिन् संस्कृतविश्वविद्यालयानां स्थापनायाः प्रश्नस्य विषयेऽपि कश्चिद्विचार आवश्यकः प्रतीयते।

नात्र सन्देहो यत् कस्यापि संस्कृतविश्वविद्यालयस्य स्थापनाया वार्तापि श्रूयमाणा संस्कृतज्ञानामस्माकं कञ्चिदवर्णनीयमन्तस्तोषं जनयति। तच्चैतत्सर्वथा स्वाभाविकमभिनन्दनीयं च।

कदाचिद् बहूनामेतदवगतं न भवेद् यत् सर्वतः प्रथममस्माभिरेवैष प्रस्ताव उपस्थापित आसीदुत्तरप्रदेशस्याधिकारिणां पुरः। प्रस्तावेन तेन प्रभावितैस्तैरधिकारिभिर्वर्षमेकं यावद् विशेषाधिकारिरूपेण नियुक्तैश्चास्माभिः सुप्रसिद्धस्य वाराणसेयराजकीयसंस्कृतमहाविद्यालयस्य संस्कृतविश्वविद्यालयरूपत्वापादनविषये योजनाप्येका संपूर्णा प्रस्तुतासीत् तेषां पुरस्ताद्। अचिरेण सा विश्वविद्यालयरूपेण परिणता भवेदित्याशास्यते।

तदेवमान्तरः संबन्धोऽस्माकं संस्कृतविश्वविद्यालस्य योजनया प्रस्तावेन च।

सत्यप्येवम्, संस्कृतज्ञानां वास्तविकहितदृष्ट्यैव, प्रश्नस्यास्य विषये गम्भीरचिन्तनस्यावश्यकता विद्यत इति प्रतीयते। तदत्र प्राप्तावसर एव कश्चिद् विचार उपस्थाप्यतेऽत्रभवतां संस्कृतायोगस्य भारतीयाधिशासनस्य च विमर्शार्थम्।

प्रश्नद्वयमत्र तावद् विचारणीयम्—

प्रथमम्, किं विशुद्धसंस्कृतविश्वविद्यालये तादृशमतिशयेनोदारं सर्वविधज्ञानविज्ञानप्रगतिसमुन्मुखं च वातावरणं भवितुमर्हति यादृशं वस्तुतो विश्वविद्यालयार्थमपेक्ष्यते ? तादृशे हि वातावरणे कस्यापि विश्वविद्यालयस्य महत्त्वं सन्निविष्टं भवतीति मन्यन्ते विद्वांसः।

द्वितीयप्रश्नस्ततोऽप्यधिकमावश्यकः। स चायम्—

भारतीयेतिहासस्य मध्ययुगात्परम्परया प्राप्तानां नानाविधसंकोचभावनानामद्यापि प्राधान्यं विद्यते संस्कृतविद्यालयेषु, राजकीयेष्वराजकीयेषु च, इति पूर्वमवोचाम। अत एव लोकप्रसिद्धं प्रगतिपराङ्मुखं मध्यकालीनं वातावरणं तत्र दृश्यते प्रायेण।

ततश्च स्वाभाविक एष प्रश्नः। किं विशुद्धसंस्कृतविश्वविद्यालयो वास्तविकदृष्ट्या संस्कृतज्ञानां हितावहो भवितुमर्हति ? अर्हति चेत्, कथम् ? कैश्चोपायैः ?

**अद्यत्वे प्रगत्युन्मुखताया उदारबुद्धेश्च सर्वतः प्रथममपेक्षा संस्कृतज्ञेषु, न केवलं राष्ट्रस्य कल्याणार्थमेव, किन्तु तेषामेव सर्वक्षेत्रेषु समुन्नत्यर्थमपि।**

ज्ञानस्य सीमाया बन्धनं ज्ञानस्य विकासश्चेति विप्रतिषिद्धम्।

सूर्यप्रकाशावरोधः पादपानामिव, विद्याप्रकाशावरोधो बुद्धीनां हितावहो न भवति।

देवानाम् 'आजिधावनम्' श्रुतिषु श्रूयते। वस्तुतो मानवजीवनमेवेदमाजिधावनम्। तत्र हि आजिगीषुभिरसंकीर्णं सर्वतो विस्तृतं क्षेत्रमपेक्ष्यते।

तादृश एव विश्वविद्यालयः संस्कृतज्ञानां भवेदित्यस्माक-मतितरामभीष्टम्।

स्पष्टमेतद् यदतीव विशिष्टं महत्त्वं विद्यतेऽत्र विषये समुचितनिर्धारणस्य। ततश्च विशेषत आवश्यकमेतद् यत्संस्कृतायोगः सर्वमपि एतद्विषयकं वृत्तमुपलभ्य सम्यक् परीक्ष्य च स्वकीयं निश्चितं मतमस्यावश्यकस्य प्रश्नस्य विषय उपस्थापयेदिति।

## उपसंहारः

तदेवं संस्कृतस्य संस्कृतज्ञानां च समुन्नतेरादर्शं पुरस्कृत्य विशेषतो भारतीयेनाधिशासनेन नियुक्तस्य संस्कृतायोगस्य विमर्शार्थमभिनवसंस्कृतशिक्षापद्धतेर् दिक्प्रकारौ प्रदर्शितावस्माभिः। तद्विषयकाः केचिदावश्यकाः प्रस्तावाश्च निर्दिष्टाः।

अस्मिन्नवसरे एतदावश्यकं यदेका समितिः संस्कृतसाहित्य-संमेलनस्य स्थापनीया या यथावसरमुपरिनिर्दिष्टविषयेषु संस्कृत-साहित्यसंमेलनस्य निश्चितं मतं संस्कृतायोगस्य शिक्षामन्त्रालयस्य वा पुर उपस्थापयेत्। यत्र यावच्च तेषु विषयेषु संमेलनस्य कर्तव्यं भवेत् तत् तस्य कार्यकारिण्याः समितेः समक्षमुपस्थापयेत्।

उपसंहारे केवलमेतावदेव वक्तव्यं यत्संस्कृतानुरागिभिश्चिराय सोत्कण्ठमुदीक्षितः कालोऽयं समुपस्थितः संस्कृतशिक्षायाः समुत्थानस्य।

सोऽयं शुभावसरो नैवोपेक्षणीयः।

चिराय प्रसुप्तमस्माभिः। परं नायं निद्रातन्द्र्योः कालः।

ततश्च "यो जागार तमृचः कामयन्ते" (ऋग्०५।४४।१४), "उत्तिष्ठत जागृत प्राप्य वरान् निबोधत" (कठोप० १।४।१४) इति श्रुत्यनुसारं लोकस्य कालस्य च प्रगतिम्, अभिनवभारतस्य चावश्यकता अनुरुध्य स्वतन्त्रभारतस्याधिशासनस्य साहाय्येन देववाण्याः समुन्नतौ तत्परैर्भाव्यमस्माभिः।

किं बहुना,

संस्कृतेर्भारतीयायाः समुपासनतत्परः।
देववाण्याः समुत्कर्षे रत आ शैशवात्सदा॥
तत्त्वचिन्तापरः सोऽयं 'ज्योतिराश्रम'-संस्थितः।
देववाणीजुषां मार्गमुन्नतेः समदर्शयत्॥
विद्वांसो निर्मलप्रज्ञा लोककल्याणसेतवः।
प्रीयन्तां साधवस्तेन, तेभ्यो नित्यं नमो नमः॥

इति शम्

( पृ० २७९ )



आर० टी० एच्० ग्रिफ़िथ,

प्रिंसिपल, गवर्नमेंट संस्कृत कालेज, बनारस, १८६१–१८७८

संयुक्तप्रान्तीय-

# संस्कृतच्छात्रसंमेलनस्य

श्रीमथुरापुर्यां

द्वितीयाधिवेशने

सभाध्यक्षस्य

ग्रन्थकर्तुः

# अभिभाषणम्

(१९-२०।८।१९३९ ई०)

# गन्तव्यं शिखरं महत्

जीवनेऽस्मिन् मनुष्येण स्वाभीष्टशिखरं महत् ।
गन्तव्यं विद्यते, कृत्वा सर्वा बाधा अधस्पदम् ॥१॥

येयं भगवती शक्तिर् लोकान् संव्याप्य तिष्ठति ।
सिद्धिरूपेण तां नित्यमाश्रयेत् शिखरंगमो ॥२॥

तस्या एव प्रभावेण महिम्ना च महीयते ।
प्रत्यूहराक्षसान् हत्वा मानवोऽत्र न संशयः ॥३॥

सिंहारूढा त्रिनेत्रा च धनुर्बाणधरा शुभा ।
सुप्रसन्ना महाविद्या या, तां देवीं नमाम्यहम् ॥४॥

ऋषभं मा समानानां सपत्नानां भयङ्करम् ।
हन्तारं कुरु शत्रूणां देवि ! दारिद्र्यनाशिनि ॥५॥[१]

(ग्रन्थकर्तुः 'जीवनज्योतिर्'–नामकग्रन्थात्)

---

१. पद्यानामेषां व्याख्या ग्रन्थकर्तुः रश्मिमालायां द्रष्टव्या ।

# देववाण्या अवनतिरस्माकं कर्तव्यं च

मान्या विद्वद्वर्याः प्रियच्छात्रगणाश्च,

महतः प्रमोदस्यायमवसरो यदद्य सर्वेऽपि वयं नानाप्रदेशेभ्यः समागत्य अस्माकं माननीयाया विश्ववन्द्याया देववाण्याः समुन्नतिं कामयमाना आनन्दकन्दस्य नन्दनन्दनस्य भगवतः श्रीकृष्णस्य जन्मभूम्यां पुण्यपुर्यां मथुरायामिह संसदि समवेताः स्मः।

एषा हि खलु देववाणी शैवशाक्तवैष्णवजैनबौद्धादिनानासंप्रदायेषु विभक्तानां विभिन्नमतिजुषाम् आपाततः परस्परविरुद्धत्वेन प्रतीयमानानामपि, तेषु तेषु संप्रदायेषु तेषु तेषु मतेषु च

एको रसः करुण एव निमित्तभेदाद्
भिन्नः पृथक् पृथगिवाश्रयते विवर्तान्।
आवर्तबुद्बुदतरङ्गमयान् विकारान्
अम्भो यथा सलिलमेव हि तत्समस्तम्॥

( भवभूतेः )

इत्याद्यनुरूपमेकसूत्ररूपेण ओतप्रोतया एकयैव व्यापिन्या भारतीयमौलिकसंस्कृत्या परस्परं सम्बद्धानां सर्वेषामप्यस्माकं भारतीयसंस्कृत्यभिमानिनाम् अतीव माननीया।

**संस्कृतभाषा हि भारतीयार्यधर्म इव सर्वेषामप्यस्माकमार्यधर्मावलम्बिनां वरिष्ठः शेवधिर्गर्वस्य च विषयः।**

एको हि आर्यधर्मवृत्तोऽसंख्यशाखाप्रशाखारूपेणातिविस्तृतः,

सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।

(यजु० ३१।१)

इत्यादिश्रुतिभिर्गीयमानविराट्पुरुष इव, नानारूपैः पल्लवितः पुष्पितः फलितश्च साम्प्रतं समन्ताद्भारतभूमिमलंकरोति। एतद्दृष्ट्वा हि सोऽपि "एकोऽश्वत्थः सनातनः[१]" इत्येवं वर्णयितुं शक्यते। शैववैष्णवप्रभृतयः सर्वेऽपि भारतीयधर्मास्तस्यैव शाखाप्रशाखारूपाः। **भारतीयसंस्कृती**त्यपरनामा एक एव जीवनरसस्तान् सर्वानाप्याययति परिपोषयति च, तेषां सर्वेषामन्यधर्मेभ्यः किञ्चिदनिर्वचनीयं वैशिष्ट्यं च संपादयति। तस्य खलु भारतीयसंस्कृतीत्यपरनामधेयस्य भारतीयजीवनायामृतकल्पस्य जीवनरसस्य, सर्वकामदुघा दोग्ध्रीव, इयमस्माकं मातृरूपा देववाणी। अत एव तस्याः परिपोषणेनैव भारतीसंस्कृतेः परिपुष्टिस्तदनुयायिनां सर्वेषामार्यधर्मावलम्बिनामस्माकं सर्वाङ्गीणा समुन्नतिश्च संभवति।

कस्यैतदविदितं यत्प्रायः सर्वेषामप्यार्यधर्मावलम्बिनां धार्मिकं साहित्यं प्राचुर्येण देववाण्यामेव विद्यते। प्रायेण सर्वेषामपि आर्यधर्माणामनुयायिभिराजीवनं तपांसि तपद्भिराचार्यैः संग्रथितानि

---

१. कठोपनिषदि २।३।१।

ग्रन्थरत्नानि देववाण्याः साहित्यसमृद्धिं सम्पादयन्ति। प्रायेण सर्वासामेव भारतीयभाषाणामुद्गमस्थानभूता चैषा देववाणी। एतद्द्वारैव विभिन्नदेशेषु लैटिन, ग्रीक, इंग्लिश, जर्मन, फ्रेंच—इत्यादिरूपैरुपलभ्यमानया आर्यभाषया अस्माकं संबन्धो भुवि सर्वत्र विश्रुतः। अस्यामेव सभ्यजगतः प्राचीनतमं साहित्यं समुपलभ्यते। तदेतादृशैरनन्यसाधारणैर्गुणगणैरुपलक्षिता इयमस्माकं देववाणी कस्य नाम नाभिवन्दनीया भवेत्।

## देववाण्याः प्राचीनकाले समुन्नतिः

आसीत्स समयो यदा खलु साभ्युदयसीमामनुभवन्ती अभ्युन्नतिशिखरे संस्थिता सर्वत्रापि स्वप्रभावमहिम्ना सर्वेषां समादरभाजनं बभूव, नानादेशेषु च विस्तृता भारतवर्षस्य यशः समन्तात्पृथिव्यां प्रसारयति स्म।

( १ )

**कस्याविदितं यन्न केवलं भारतवर्ष एव, किन्तु भारतेतरदेशदेशान्तरेष्वपि, तस्याः प्रचार आसीत् प्राचीनकाले।**

केनेतिहासविदा न श्रुतो भवेत्सुदूरवर्त्तिनि 'एशिया माइनर' प्रदेशेऽपि परःसहस्रवर्षेभ्यः प्रागपि 'बोगाज़कोई' (Boghaskoi) स्थाने समुपलब्धप्राचीनलेखेपूल्लिखितैः 'इन्द्र', 'वरुण', 'मित्र' इत्यादिभिर्वैदिकदेवतावाचिशब्दैः स्पष्टमनुमीयमानस्तस्याः प्रचारः।

एशियामध्यप्रदेशेषु इण्डोचाइनाप्रभृतिदेशेषु महासमुद्रान्तः-संस्थितेषु सुदूरवर्त्तिषु **'बालि'** प्रभृतिद्वीपेषु च अद्यत्वेऽपि समुपलभ्यमानैः प्राचीनैर्भारतीयैः संस्कृतग्रन्थरत्नैर्देवालयखण्डैः संस्कृतशिलालेखैर्वापि तस्या एव प्रचारातिशयस्तेषु तेषु स्थानेषूद्घोष्यते। भारते विलुप्तानां परःशतानां ग्रन्थरत्नानाम् अद्याप्यनुवादरूपेण चीनतिब्बतादिदेशेष्ववस्थितिरपि देववाण्या एव प्राक्कालिकं भुवि विश्रुतं यशः प्रख्यापयति। किं बहुना, "शवतिर्गतिकर्मा कम्बोजेष्वेव भाषितो भवति। विकार एवैनमार्या भाषन्ते शव इति", "महान् हि शब्दस्य प्रयोगविषयः। सप्तद्वीपा वसुमती त्रयो लोकाः......।"[१] महाभाष्यादिग्रन्थेषूपलभ्यमानैरेतादृशैः प्रमाणैरपि तस्याः प्राक्कालिकः प्रायेण सार्वदेशिकः प्रचारातिशय एव स्पष्टमनूद्यते।

भारतवर्षे तु प्राचीनकाले तस्या अत्युत्कृष्टप्रभावस्य प्रचारातिशयस्य च विषये किमु नाम वक्तव्यम्? आबालवृद्धम् आराजरङ्कम् आपामरप्राज्ञं च तस्याः सार्वजनीनप्रचारविषये नहि कस्यापि सन्देहलेशस्यावकाशः। साम्प्रतिकहिन्दीप्रभृतिभाषायामिव प्राचीनकाले "अन्वध्यायं भाषायाम्" (निरुक्ते), "भाषायां सदवसश्रुवः" (अष्टाध्याय्याम् ३।२।१०८), "प्रथमायाश्च द्विवचने भाषायाम्" (अष्टाध्याय्याम् ७।२।८८), "सख्यशिश्वीति भाषायाम्" (अष्टा० ४।१।६२) इत्यादिप्रमाणैर्**भाषात्वेन** व्यवहार एव तस्याः सार्वजनीनं प्रचारं द्योतयति। "प्रत्यभिवादेऽशूद्रे" इति पाणिनिसूत्रेऽ-

---

१. महाभाष्ये पस्पशाह्निकमत्र द्रष्टव्यम्।

शूद्रमहणेन, नाटकेषु संस्कृतभाषाभाषिभिः संस्कृतज्ञपात्रैः सहासंस्कृतभाषिणामपि नीचपात्राणां वार्तालापेन, "उदहारि भगिनि या त्वं कुम्भं हरसि शिरसानद्वाहं साचीनमभिधावन्तमद्राक्षीरिति" ( महाभाष्ये १।१।५८ ) इत्यादिप्रमाणैश्च तस्याः प्रचारो न केवलं शिक्षितेष्वेव किन्तु प्राकृतजनेष्वपि अविहतगतिरासीदिति स्पष्टमेवोद्घोष्यते ।

वैदिकेषु ऋषिषु त्रसदस्युप्रभृतीनां राजन्यानां वसुकर्णादि-वैश्यानां विश्ववाराप्रभृतीनां स्त्रीणामुपलब्धिः, उपनिषत्सु राज्ञां ब्राह्मणेभ्यो ब्रह्मज्ञानस्योपदेष्टृत्वेन प्रसिद्धिः[१], महाभारते भीष्मपितामहादेर्नीतिशास्त्रप्रवक्तृत्वेन वर्णनमित्यादि सर्वमपि तस्याः प्रचारस्य व्यापकत्वमेवानुमापयति ।

( २ )

**तस्मिन् हि प्राचीने प्राचीनतमे च काले जीवनयात्रायाः प्रत्येकविभागे देववाण्या एवाप्रतिहतं साम्राज्यं सुस्थितमासीत् ।**

सैनापत्यं च राज्यं च दण्डनेतृत्वमेव च ।
सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥

( मनु० १२।१०० )

---

१. उदाहरणार्थं छान्दोग्योपनिषदि ५।३।७ बृहदारण्यकोपनिषदि च ६।२।८ अत्र द्रष्टव्यम् ।

दशावरा वा परिषद् यं धर्मं परिकल्पयेत् ।
त्र्यवरा वापि वृत्तस्था तं धर्मं न विचालयेत् ॥
त्रैविद्यो हैतुकस्तर्की नैरुक्तो धर्मपाठकः ।
त्रयश्चाश्रमिणः पूर्वे परिषत् स्याद्दशावरा ॥
ऋग्वेदविद्यजुर्विच्च सामवेदविदेव च ।
त्र्यवरा परिषज्ज्ञेया धर्मसंशयनिर्णये ॥

(मनु० १२।११०-११२)

इत्यादिप्रमाणैरयमेवार्थः स्पष्टीक्रियते ।

छान्दोग्योपनिषदादिगतैः "ऋग्वेदं भगवोऽध्येमि यजुर्वेदं सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यं राशिं दैवं निधिं वाकोवाक्यमेकायनं देवविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्यां सर्पदेवजनविद्यामेतद् भगवोऽध्येमि" (छान्दोग्योपनिषद् ७।१।२) इत्यादिप्रमाणैः, शुक्रनीत्यादौ—

आन्वीक्षिकी त्रयी वार्त्ता दण्डनीतिश्च शाश्वती ।
विद्याश्चतस्र एवैताः.......................
वर्णाः सर्वाश्रमाश्चैव विद्यास्वासु प्रतिष्ठिताः ।

इत्येवं सर्वेषां वर्णानामाश्रमाणां च कृते तत्तदुपयोगितामाकलय्य चतसृणां विद्यानां प्रतिपादनेन,

यद्यत्स्याद्वाचिकं सम्यक् कर्म विद्याभिसंज्ञकम् ।
शक्तो मूकोऽपि यत्कर्तुं कलासंज्ञं तु तत्स्मृतम् ॥

इत्येवं लक्षितानां द्वात्रिंशतो विद्यानां चतुःषष्टेः कलानां च भेदानुपक्रम्य विभिन्नप्रस्थानैस्तत्तद्वेदसंबद्धैर्धनुर्वेदायुर्वेदार्थवेदादिभिः सह

संबन्धविधया विभज्य तत्तत्कलानां प्रदर्शनेन च, न केवलं प्राचीनकाले देववाण्या वाङ्मयस्य तत्तद्विद्यानां कलानां च भेदेनातिविस्तृतत्वम्, किन्तु सर्वस्यापि लोकव्यवहारस्य जीवनयात्रायाश्च कार्यनिर्वहणक्षमत्वम् अखिलपुरुषार्थसाधनोपयोगित्वं च सुस्पष्टं प्रतीयते ।

तदेवं प्राचीनकाले न केवलं भारतवर्ष एव किन्तु भारताद् बहिरपि विभिन्नदेशेषु प्रचारातिशयमुपभुञ्जाना सर्वासामपि जीवनयात्रानिर्वाहिकाणां विद्यानामाश्रयीभूता अखिलपुरुषार्थसाधनोपयोगिविस्तृतवाङ्मयेन च समेता समुन्नतिशिखरमधिष्ठिता आसीदेषास्माकं देववाणी ।

## देववाण्या अद्यत्वेऽवनतिः

परं हा हन्त ! सैव देववाणी अद्यत्वे सर्वथा संकुचितगात्रा जीर्णा शीर्णा च दृश्यते । चिरादेव स्वकीयप्राचीनोत्कृष्टपदाद् भ्रष्टा सा शनैः शनैर्वर्तमानामधोगतिमनुप्राप्ता । साम्प्रतिकजगति जीवनयात्रायां या तस्याः संस्कृतज्ञानां वा अवस्थितिः कस्य खलु न सा खेदावहा भवेत् ।

नहि तस्याः पुरातनसमय इव सामान्यजनतायां प्रचारः, उपयोगो वा सामान्यलोकव्यवहारे । नहि जीवनयात्रायां राष्ट्रस्य वा विभिन्नविभागेषु संस्कृतज्ञानस्य काचिद्विशेषापेक्षा । विलुप्तप्रायमेव तस्या नानाविधविद्यानामाश्रयीभूतमनल्पमनवधि च प्राचीनं वाङ्मयम् ।

नहि संस्कृतज्ञानां प्राचीनकाल इव सर्वथा सुखेनैव जीवननिर्वाहः । नापि जनतायाः पुरोयायित्वं नेतृत्वं वा । न चापि

तेषां विशिष्टविधया किञ्चिदपि स्थानं राज्यव्यवस्थापिकासु सभासु। आस्तां पुनर्दूरे तेषां पुरातनं लोकनायकत्वं, राष्ट्रकर्णधारत्वं, सेनापतित्वं, प्रधानामात्यत्वं, सान्धिविग्रहिकत्वं, प्राड्विवाकत्वं, कुलपतित्वं, पृथिव्यां सर्वेषां मानवानां सदाचारोपदेष्टृत्वं, नाना-विधानां विद्यानामुपज्ञातृत्वं, सम्राजां पुरोहितत्वं, दूरवर्त्तिदेशान्तरेषु महासमुद्रान्तर्वर्तिद्वीपपरम्परासु च भारतीयसभ्यताया भारतीय-सदाचारस्य भारतीयसाहित्यस्य भारतीयपौराणिकगाथानां भारती-यानां नदीनां नगराणां च नाम्नां संस्थापकत्वम्।

परमेतादृशैः पुरावृत्तोद्गारैरलम्! पर्याप्तमेतावद्वर्णनं तस्या वर्तमानामसाधारणीमवनतिमस्माकं हृद्गतां कर्तुम्।

## देववाण्या अवनतेः कारणानि

कानि पुनर्देववाण्या अवनतेः कारणानि? प्रायेणैष विचार एतादृशस्थलेषु बहुभिरुपस्थाप्यते यद्राजशक्तेः स्वसंस्कृतेः पोषिकाया अभाव एवास्माकं देववाण्या वा उत्तरोत्तरमभिवर्धमानाया अवनतेः कारणमिति। "राजा कालस्य कारणम्" इत्यादिवचनान्यप्यत्र विषये प्रमाणीक्रियन्ते। परं वस्तुतो विचारणायां तु कार्यकारण-भावस्य वैपरीत्यमेवात्र नः प्रतिभाति।

कस्यापि देशस्य राजशक्ती राजनीतिसंबन्धिव्यवस्था वा न स्वयमकारणत एव समुत्पद्यते। वस्तुतः सापि तत्तद्देशवासिनां शिष्टानां शिक्षितानां वा जननायकानां जनतायाः प्रतिनिधिरूपाणां पुरोयायिनां पुरोहितानां वा प्रजाः प्रति स्वकर्त्तव्यस्य पालना-पालनमूलिकैव।

एवञ्च तत्तत्काले संदृश्यमाना भारते या राजनीतिसंबन्धिनी दुरवस्था नैवास्माकं दुरवस्थायाः कारणम्, प्रत्युत वयमेव स्वकर्तव्यपालनाद्विमुखा जनतायाः पुरोयायिपदाद् भ्रष्टास्तस्याः कारणतामुपगताः। एतादृशमेव तत्तद्विषयककार्यकारणभावे मतिवैपरीत्यमन्येष्वपि विषयेषु प्रायेणास्माकमुपदृश्यते। तदाधारेणैव च जनताया वास्तविकलाभालाभविचारमुपेक्ष्य तास्ता दृष्टीः प्रजासु प्रचारयन्तो वस्तुतः स्वात्मवञ्चनामेव बहवो जनाः कुर्वन्ति।

## लोकप्रगतेर्लोकावस्थितेश्चोपेक्षा

ततश्च नहि राजशक्तेर्हानिः संस्कृतभाषाया अवनतेर्मूलकारणम्, किन्तु यन्मूलकारणं तत्कृतैव राजशक्तेर्हानिरपि। तच्च लोकप्रगतेः, *लोकव्यवहाराद्, लोकावस्थितेश्च संस्कृतज्ञानां विराग उपरतिः,* तेषामुपेक्षा च।

**लोकप्रगतिर्हि नदीव सततमगामिनी न जातु एकावस्थायामेव संतिष्ठते। ऋतूनामिव तस्या अपि आनुरूप्येण वर्तनं जीवनस्य सफलजीवनयात्राया वा प्रथमं लक्षणम्। लोकप्रगतिमनुरुध्यैव प्रवर्तमानास्तत्तद्देशनिवासिन्यो जातयो जगति स्वयशः समन्तात् प्रसारयन्ति। अन्यास्तु कालकवलतामापद्यन्ते।**

वस्तुतो लोकप्रगतिमूलिकैव तत्तद्युगादिकल्पना, युगरूपानुसारतश्च धर्माणां भेद इति वै शास्त्रविदां मतम्। तथा हि—

अन्ये कृतयुगे धर्मास्त्रेतायां द्वापरे युगे।
अन्ये कलियुगे नृणां युगरूपानुसारतः॥
युगेष्वावर्तमानेषु धर्मोऽप्यावर्तते पुनः।
धर्मेष्वावर्तमानेषु लोकोऽप्यावर्तते पुनः॥
श्रुतिश्च शौचमाचारः प्रतिकालं विभिद्यते।
नानाधर्माः प्रवर्तन्ते मानवानां युगे युगे॥

इत्येवं तासु तासु स्मृतिषु स्मर्यते।

सर्वेष्वपि देशेषु सर्वेष्वपि च कालेषु सर्वेऽपि कर्ममार्गाः, सर्वमेव कर्मकाण्डं च लोकप्रगतिमनुरुध्यैव वस्तुतः प्रजाहितदृष्ट्यैव च प्रचारितं सत् साफल्यं लभते।

लोक एव याथार्थ्येन।

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः।
ऊरू तदस्य यद्वैश्यः पद्भ्याᳬ शूद्रो अजायत॥
(यजु० ३१।११)

इत्येवं गीयमानस्य भगवतो विराट् पुरुषस्य प्रत्यक्षमूर्त्तिरिव सर्वेषामेव मार्गाणां धर्माणां कर्मणां वा सत्यत्वासत्यत्वयोरुपयोगित्वानुपयोगित्वयोर्वा परीक्षणाय तत्त्वनिकषग्रावेव वर्तते। अमुमेवार्थं प्रख्यापयन्ती "विशि राजा प्रतिष्ठितः" (यजु० २०।६) इत्येषा श्रुतिर्गीयते। अयमेवार्थः "स्त्रीभ्यः सर्ववर्णेभ्यश्च धर्मशेषान् प्रतीयात्" (आ० धर्म० २।११।२६।१५) इत्यापस्तम्बधर्मसूत्रवचनेन पुष्टिं समश्नुते।

एतदेव रहस्यं यत्कालक्रमेण केऽपि धर्मा विलुप्ता जायन्ते, परम्परागताः प्राचीनशास्त्रेषु समुद्गीयमानाः कर्मपथाः खिलीभवन्ति। अन्ये च नूतनास्तेषां स्थानमधितिष्ठन्ति। एतदेव कारणं प्राचीन-नवीनसंस्कृत्योस्तिरोभावाविर्भावयोः।

तामेतां लोकप्रगतिमनुरुध्यैव लोकावस्थितिञ्चावेद्य लोकव्यव-हारविदो विद्वांसः प्रजाहितदृष्ट्यैव कर्मसु प्रवर्तमानाः सर्वेषां समा-दरभाजो जायन्ते। तत्तत्कार्येषु पुरोयायिनः पुरोहिता (पुरोऽग्रे हिताः स्थापिताः) मार्गप्रदर्शका एव मनुष्येषु नायकत्वपदवीं नेतृत्वपदवीं वासादयन्ति। चक्षुषा-मिव नेतॄणां शिक्षितानां शिष्टानां वा एतत्कार्यं यत्खलु मार्गप्रदर्शनं जनतायाः। एतन्मूलकमेव खलु नयनयोर्नयन-त्वम्। पशुषु पुनरन्यथैवैतत्। तेषां प्राजिता हि पश्चादेति दण्डसाहाय्येनैव च तानग्रे यापयति। अत एव प्राचीनकाले ऋषयो धर्मसंकटेषु प्रजोपप्लवेषु चोपस्थितेषु संभूय विचार्य च लोका-वस्थानुसारत एव कर्तव्यमार्गनिर्धारणं कुर्वन्ति स्म। लोकावस्थाया उपेक्षयैव पुनः प्रवर्तमानाः पश्चाद्दृष्टयो जनाः शोकमा-पद्यन्ते।

ततश्चास्माकं देववाण्याः संस्कृतज्ञानां वा विदुषां चिरादेव क्रमशो ह्रासमुपगच्छन्त्या अवस्थाया वास्तविकं मूलकारणं लोक-

प्रगतेर्लोकावस्थितेश्च अथवा प्रजायाः सामान्यजीवनस्योपेक्षेव, ततस्तेषां पार्थक्यं च। लोकस्य लोकयात्रायाश्च प्रात्यहिकीनामावश्यकतानामुपेक्षयैवास्माकं जीवनोपयोगिनीनां विद्यानां कलानां च नानाविधानां तिरोभावः समजनि। लोकप्रगतेरुपेक्षयेन सर्वैरुपेक्षिता इव शनैः शनैः संस्कृतज्ञा दृश्यन्ते। जनताया नेतृत्वं च शनैः शनैस्तेषां हस्तात्प्रस्खलितमिव प्रतिभाति।

स्वाभ्युदयकाले पुनर्देववाण्या वाङ्मयस्य जीवनयात्राया विभिन्नविभागानामानुरूप्येणैव नैके विभागा विभिन्नाः शाखाश्चावर्तन्त। सभ्यसमाजस्य आवश्यकतानुसारमेव तास्ता विद्याः कलाश्च समुद्दिश्य संस्कृतवाङ्मयं तदा प्रवृत्तमासीत्। आसीच्च समाजस्य राष्ट्रस्य वा सर्वेष्वप्यङ्गेषु समाना कल्याणबुद्धिः प्राचीनानामाचार्याणां शिष्टानां जनतायाः पुरोयायिनाम्। अत एव च तत्र तत्र पुराणादिषु—

पठन्द्विजो वागृषभत्वमीयात्
स्यात्क्षत्रियो भूमिपतित्वमीयात्।
वणिग्जनः पण्यफलत्वमीयाज्
जनश्च शूद्रोऽपि महत्त्वमीयात्॥
(वाल्मीकिरामायणे १।१।१००)

पठन्विप्रो वेदवित्स्यात्क्षत्रियः पृथिवीपतिः।
ऋद्धिं प्राप्नोति वैश्यश्च शूद्रश्चारोग्यमृच्छति॥
(अग्निपुराणे ३८३।२३)

इत्येवं राष्ट्रस्य सर्वेष्वप्यङ्गेषु अङ्गाङ्गिभावरूपो घनिष्टः संबन्धोऽत एव चैकस्यापि दुरवस्थयोपेक्षया वा सर्वेषामपि हानिर्नियतेति

च सिद्धान्तानुरूपं सर्वेषामप्यङ्गानां कल्याणकामना श्रूयते। अत एव च प्रजाया विभिन्नानामङ्गानामावश्यकतानुरूपम् "आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्च शाश्वती" इत्येवं विद्यानां चातुर्विध्यमाम्नायते।

"चतुर्भिश्च प्रकारैर्विद्योपयुक्ता भवति। आगमकालेन स्वाध्यायकालेन प्रवचनकालेन व्यवहारकालेनेति" (महाभाष्ये), "आचार्यः सर्वचेष्टासु लोक एव हि धीमतः", "कृत्स्नो हि लोको बुद्धिमतामाचार्यः। शत्रुश्चाबुद्धिमताम्" (चरके), "बुद्धिहीना विनश्यन्ति यथा ते मूर्खपण्डिताः"(पञ्चतन्त्रे) इत्याद्यभियुक्तोक्तिभिः, महाभाष्यादिप्राचीनग्रन्थेषु पदे पदे "तद्यथा लोके" इत्येवं लोकव्यवहारस्य समादरेण, सांख्यादिषु नानाविधलौकिकदृष्टान्तसाहाय्येन च शास्त्रार्थप्रतिपादनेन प्राचीनानां विदुषां दृष्टौ लोकबुद्धेर्लोकप्रगतेर्व्यवहारज्ञानस्य च महत्त्वमेव स्पष्टीक्रियते।

प्राधान्येन सामान्यजनताया: शिक्षणार्थं विनिर्मितेषु सर्वेषां माननीयेषु विभिन्नपुराणेषु राजशास्त्रस्य, भुवनकोशस्य, महाद्वीपादेः, वास्तुलक्षणस्य, रत्नादिपरीक्षायाः, वृक्षायुर्वेदस्य, नैकेषां राजवंशानाम्, अश्वचिकित्सायाः, गजचिकित्सायाः, अन्येषां चैवंविधानां लोकोपयोगिविषयाणां सप्रपञ्चं वर्णनादिकमपि 'लोकसंग्रहमेवापि संपश्यन्कर्तुमर्हसि' (भगवद्गीतायाम् ३।२०) इति भगवदाज्ञानुरूपं न केवलं प्राचीनाचार्याणां लोकसंग्रहचेष्टाया लोककल्याणबुद्धेश्चैव निदर्शकं, किन्तु तेषां स्वयमपि लोकोपयोगिविद्यासु परमप्रावीण्यस्य व्यापकं, स्पष्टतः प्रतीयते।

परमद्यत्वे संस्कृतज्ञा भीता इव समुद्विग्ना इव दूरतः परित्यजन्ति व्यवहारोपयोगिनीनां लोकप्रगतेश्च परिचायिकानां भूगोलेतिहास-गणितराजशास्त्रादिविद्यानामध्ययनम्। हन्त एतादृक्प्रवृत्तिमूलिकैव संस्कृतभाषायाः संस्कृतज्ञानां च जीवनयात्रासंबन्धिषु विभिन्न-व्यापारेषु राष्ट्रस्य तत्तदावश्यकविभागेषु चानिशं संवर्द्धमानानु-पयोगिता।

तदेवं प्रपञ्चितमस्माभिरस्मन्मतानुसारेण देववाण्या अवनते-र्मूलकारणम्। अन्यानि कारणानि वस्तुतोऽस्यैव मूलकार-णस्य व्याख्यारूपाणि। तथापि वैशद्यार्थं तान्यपि कानिचिदग्रे प्रतिपाद्यन्ते।

## भारतीयमौलिकसंस्कृतेरपरिज्ञानं सांप्रदायिक्यसहिष्णुता च

आपाततः परस्परं विरुद्धत्वेन प्रतीयमानेष्वपि शैवशाक्तवैष्णव-जैनबौद्धप्रभृतिषु नानासंप्रदायेषु एकसूत्ररूपेण व्याप्ताया भारतीय-मौलिकसंस्कृत्याः संक्षेपेण स्वरूपमुपवर्णितमेव पुरस्तादस्माभिः। तस्या एतस्याः संस्कृतेरपरिज्ञानमननुभवश्चापि एकतमत् कारणं देववाण्याः सांप्रतिक्या अवनतेः। एतदपरिज्ञानमूलकमेव संस्कृत-ज्ञेषु तद्द्वारा साधारणजनेषु च समुपलभ्यमानं परस्परासहिष्णुत्वं परस्परं कलहश्च दृश्यते।

भारतवर्षं हि खलु सांप्रदायिकासहिष्णुताया जन्मभूमिरिवाद्यत्वे प्रतीयते। आर्यधर्मावलम्बिष्वपि पुनरतितरामुपलभ्यमाना सा कदर्थ-

यति देशहितैषिणां चेतांसि। 'वयमास्तिका यूयं नास्तिकाः', 'वयं वैदिका यूयमवैदिकाः', 'अस्माकं सम्प्रदायः प्राचीनतमो युष्माकं पुनर्नवीनः किञ्चित्कालादेव प्रचलितः' इत्येवं परस्परमधिक्षिपन्तः साम्प्रदायिकाः केन न श्रुता भवेयुः। तत्तत्संप्रदायनामोल्लेखपूर्वकं तत्तत्सिद्धान्तखण्डनप्रवृत्तानां ग्रन्थानां नामसु 'मुखभङ्गः', 'कर्णमर्दनम्', 'मुखचपेटिका' इत्यादिपदविन्यासोऽपि तादृश्या एवासहिष्णुताया लज्जास्पदं निदर्शनम्।

वर्तमाने काले तेषु तेषु समुन्नतदेशेषु तत्तदनुदारसाम्प्रदायिकभावनासु प्रतिदिनमुपक्षीयमाणासु, 'इंग्लिश' 'अमेरिकन' प्रभृतिरूपेण तत्तद्देशीयमौलिकसंस्कृतिभावनासु पुष्टिं नीयमानासु, तद्द्वारा च तत्तज्जातिषु संघशक्तिसम्पादनपुरःसरं स्वस्वोत्कर्षसाधनतत्परास्वपि, एष जातिभ्रंशकरोऽसहिष्णुताया भावोऽस्मासु कस्य नाम देशहितैषिण आर्यधर्माभिमानिनो मनस्तापं न तनुते।

इतिहासविदामतिरोहितं यत्कालक्रमेण तत्तदवस्थावश्यकतानुरूपं प्राकृतिकनियमानुसारेण नूतना नूतनाः सम्प्रदायाः सर्वेषु देशेषु प्रवर्तन्ते। परम्परागतमर्यादाया विरोधित्वभावना तेषु किञ्चित्कालपर्यन्तमेव जनताया जायते। किञ्चित्कालातिपाते पुनस्तेषां तस्यामेव मर्यादायामन्तर्भावः समावेशश्च प्रायः सर्वत्र क्रियते। ततश्च साम्प्रदायिकी असहिष्णुता सर्वथा अविचारमूला। अत एव तत्त्वविदो विचारशीला विद्वांसः "परोक्षप्रिया हि देवाः प्रत्यक्षद्विषः" "ये तत्र ब्राह्मणाः सम्मर्शिनो युक्ता आयुक्ता अलूक्षा धर्मकामाः स्युः, यथा ते तत्र वर्तेरन् तथा तत्र वर्तेथाः" (तैत्तिरीयोपनिषदि

१।११।४ ) इति श्रुत्यादेशमनुसरन्तस्तेषु तेषु सम्प्रदायेषु व्यापिन्या एकस्या भारतीयसंस्कृत्या भावनयैव भावितचित्ता उदारहृदयाः परस्परं सहिष्णुताभावस्यैव प्रचारं कुर्वन्ति ।

ईश्वरानीश्वरवाद-वेदपौरुषेयत्वापौरुषेयत्ववाद-वाममार्ग-दक्षिणमार्गादिभेदेन नानारूपायाः शैवशाक्तवैष्णवादिसंप्रदायबहुलायाः सांख्यवेदान्तजैनबौद्धप्रभृतिनैकदर्शनपद्धतीरनुसरन्त्या भारतीयार्यजातेर्वाचकस्य 'हिन्दुजातिः' इति पदस्य व्यवहारः सर्वैरप्यस्माभिः प्रतिदिनं क्रियते। सर्वेऽपि तस्या अन्यधर्मानुवर्तिभ्यो विवेकं पार्थक्यं च कर्तुमनायासेनैव क्षमाः। परं विद्वांसोऽपि तस्याः कस्मिन्नेकस्मिन्नेव लक्षणेऽन्तर्भावप्रदर्शने स्खलितपदा दृश्यन्ते। भारतीयसंस्कृतिरेव, वेदान्तिनां मायेव, स्वयमनिर्वचनीयापि सती व्यवहारतः प्रत्यक्षं सर्वैरनुभूयमाना तस्या एकमात्रं लक्षणम्। सैषा संस्कृतिर्हि राजनीतिसंघ इव वस्तुतो भारतीयानां संप्रदायानां संघः। स्वसंप्रदायेऽनुरागः परसंप्रदायेषु च समादरबुद्धिरित्येव खलु तस्या मुख्यो नियमः। न चात्र कश्चिद्विरोधः। नहि स्वमातापित्रोरनुरागातिशयः स्वप्रतिवेशिनो मातापितरौ प्रति समादरबुद्ध्या कदाचिद्विरुध्यते।

## वस्तुतत्त्वज्ञानस्योपेक्षा

कस्याविदितमेतद् यदद्यत्वे जगति येयमभूतपूर्वा नानाविधा समुन्नतिर्दृश्यते, नानारूपा आविष्काराश्चानवरतं क्रियमाणाः सर्वानाश्चर्यचकितान् कुर्वन्ति, विविधविद्यासंबन्धिविज्ञानानां च यः समुत्कर्षो दृष्टिपथमायाति; तस्य सर्वस्य मूलकारणं तत्त्वज्ञान-

दृष्ट्या तत्तत्प्रमेयाणां वास्तविकी जिज्ञासा, "मूढः परप्रत्ययनेय-बुद्धिः" इत्यभियुक्तोक्त्यनुसारं परम्परागतानां तत्तद्विषयकविश्वासानां स्वयमनुभवेन प्रायोगिकपरीक्षापुरःसरं विनिर्णयस्य च प्रवृत्ति-रेव विद्यते।

सैषा प्रवृत्तिः सुतरामासीदस्मद्देशेऽपि प्राचीनाचार्येषु। स्वानुभवेन प्रयोगपूर्वकं च वस्तुस्वरूपविनिर्णयप्रवृत्तिकारणादेव प्राभवंस्ते नानाविधपदार्थविषयकपरिज्ञानपूर्णानि भारतीयनदी-देशनगरग्रामकूपारण्यप्रभृतिभूगोलेतिहासादिविशिष्टज्ञानपुरःसरं कौटिल्यार्थशास्त्रपाणिनीयाष्टाध्यायीसदृशान्यसाधारणानि लोक-विदितानि ग्रन्थरत्नानि निर्मातुम्। वैशेषिके, आयुर्वेदे, ज्यौतिषे, गणिते, अन्येषु चैवंविधेषु प्रायोगिकपरीक्षणसापेक्षेषु शास्त्रेषु स्वानुभवेन वस्तुतत्त्वपरीक्षणपुरःसरं या तैः समुन्नतिः संपादितासीद् अद्यापि सास्माकं भारतीयानां गर्वस्यास्पदम्।

"परीक्ष्यकारिणो हि कुशला भवन्ति", "नापरीक्षितमभिनिविशेत्", "सम्यक्प्रयोगनिमित्ता हि सर्वकर्मणां सिद्धिरिष्टा। व्यापच्चासम्यक्प्रयोगनिमित्ता" (इत्यादि चरके), "आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्यार्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा। साक्षात्करणमर्थस्याप्तिस्तया प्रवर्तत इत्याप्तः। ऋष्यार्यम्लेच्छानां समानं लक्षणम्। तथा च सर्वेषां व्यवहाराः प्रवर्तन्ते" (इति न्यायसूत्र-वात्स्यायनभाष्ये शब्दलक्षणप्रकरणे), "मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन् को न ऋषिर्भविष्यतीति। तेभ्य एतं तर्कमृषिं

प्रायच्छन्" (इति निरुक्ते) सर्वाणि चैतानि प्रमाणानि तमेव पूर्वोक्तमर्थं द्रढयन्ति। किं बहुना, धर्मविषयेऽपि तेषामासीदियं धारणा यत्—

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना।
यस्तर्केणानुसंधत्ते स धर्मं वेद नेतरः॥

(मनुस्मृतौ १२।१०६)

किञ्च—

अपि पौरुषमादेयं शास्त्रं चेद् युक्तिबोधकम्।
अन्यत्त्वार्षमपि त्याज्यं भाव्यं न्याय्यैकसेविना॥
युक्तियुक्तमुपादेयं वचनं बालकादपि।
अन्यत्तृणमिव त्याज्यमप्युक्तं पद्मजन्मना॥

(योगवासिष्ठे २।१८।२–३)

वस्तुतः शब्दप्रमाणस्य प्रामाण्यमनुभवपूर्वकपरीक्षासहकृतमेवेति पूर्वनिर्दिष्टवात्स्यायनवचनेन "अनुभवेन वस्तुतत्त्वस्य कात्स्न्र्येन याथार्थ्यज्ञानवानाप्तः" इत्याप्तलक्षणेन च प्रतीयते।

परं चिरकालादेवैषा स्वयमनुभवेन वस्तुतत्त्वपरीक्षणमुखी प्रवृत्तिस्तिरोहितेव संस्कृतज्ञेषु इति प्रतीयते। अद्यत्वे तु तस्याः प्रतिकूला प्रवृत्तिरेव चरमां सीमां यातेति कस्याविदितं भवेत्। भवतु नामावश्यमाश्रयणीया शब्दैकप्रमाणपरता श्रुत्यादिविहितेषु पारलौकिकेष्वदृष्टेषु विषयेषु। परन्त्वनुभवगम्येषु प्रायोगिकपरीक्षणसहेषु लौकिकेषु विषयेषु तु सा सर्वथैवाक्षम्या।

वर्तमानकाले संस्कृतपठनपाठनपद्धतेरयमेको महान् दोषो यत्प्रथमं तु च्छात्रेषु कस्मिन्नपि विषये स्वाभाविकविशिष्टजिज्ञासाबुद्धेरनुदय एव। उदयेऽपि अभ्यस्यमानग्रन्थप्रमाणबलादेव, 'शेषं कोपेन पूरयेद्' इत्युक्त्यनुसारं वा सबलात्कारं, तस्या उपशमः क्रियते। अभ्यस्यमानग्रन्थोक्ताः पदार्थास्तत्तद्ग्रन्थेषु यथा प्रतिपादितास्तथैव वस्तुतत्त्वज्ञाननिरपेक्षया ग्राह्यन्ते।

व्याकरणे उदाहरणरूपेणान्यथा वा समागतानां शब्दानां केऽर्थाः, काव्यादिषूपवर्णितानां तत्तत्पदार्थानां वस्तुतो लोके किं स्वरूपम्, पुराणेतिहासादिषु वर्णितानां पर्वतानां देशानां नद्यादीनां च वस्तुतः कुत्र स्थितिः कानि च तन्नामानि इदानीन्तने भारतेऽन्येषु वा देशेषु, ज्यौतिषे वा सविस्तरमुपवर्णितानां नक्षत्राणां वस्तुतः खगोले कुत्र कीदृशी स्थितिरित्येवंविधानां जिज्ञासानामनुदय एवाद्यत्वे संस्कृतज्ञेषु। उदयेऽपि कति नाम ताः समाधातुं प्रयत्नपरा दृश्यन्ते?

दर्शनशास्त्रेषु अंशतोऽनूदितान् दर्शनान्तरपदार्थान् यथाकथंचित्पठित्वैव सन्तुष्टा नहि चेष्टन्ते केऽपि प्रायेण वस्तुतस्तत्तद्दर्शनान्तरपदार्थैस्तान् संवादयितुम्।

सैषातिमात्रं शब्दप्रमाणपरता अस्थाने प्रयुक्ता नूनं देववाण्या अवनतावेकतमद् मुख्यं कारणम्। एषैवास्माकं विचारसंकीर्णताया नूतनविज्ञानानां संग्रहेऽनुदारतायाश्चापि मुख्यं कारणम्। "श्रद्दधानः शुभां विद्यामाददीतावरादपि। अन्त्यादपि परं धर्मम्" ( मनुस्मृतौ

२।२३८) इति वचने सत्यपि, भारतीयज्यौतिषे यवनाचार्याणां, प्रासाद-निर्माणविद्यायां च मयासुरादीनां प्रभावे स्पष्टेऽपि एषास्माकमनुदारता सर्वथैव गर्हणीया। उपरिनिर्दिष्टप्रवृत्तिवशादेव संस्कृतज्ञा अस्मिन्स-मुन्नतिमुखे काले असामयिका गण्यन्ते।

प्रायेण उपरिनिर्दिष्टकारणव्रातवशादेव शनैःशनैश्चिरायावनति-मुखी देववाणी सांप्रतिकीं खेदावहां दशां वहति। एतन्मूलक एव देववाण्याः स्वाभ्युदयकाले विनिर्मितेषु प्राचीनग्रन्थेषु नूतनग्रन्थेषु च महान् प्रभेदः। केन खलु विदुषा न स्वीक्रियेत प्रायेण प्रत्येकं साहित्यविभागे प्राचीननवीनग्रन्थयोर्भेदः।

अयमेव खलु प्राचीनाचार्यग्रन्थेषु नवीनग्रन्थेषु च परस्परं महान् भेदो यत्प्राचीनाचार्या लोकप्रवृत्तिं लोकप्रगतिं वस्तुतत्त्वं चावगत्य प्रजा-कल्याणकामनयैव प्रेरिताः स्वग्रन्थान् प्रणयन्ति स्म। महाभाष्यादिषु पदे पदे लोकव्यवहारचर्चा, चरकादिषु प्रयोगपूर्वकं वस्तुतत्त्वपरी-क्षणाय प्रोद्बोधनम्, भूतदयामुद्दिश्यैव ग्रन्थरचनायां प्रवृत्तिश्चात्र स्पष्टं प्रमाणम्। तथा च वात्स्यायनभाष्ये "किं पुनराप्तानां प्रामा-ण्यम्? साक्षात्कृतधर्मता भूतदया यथाभूतार्थचिख्यापयिषेति। आप्ताः खलु साक्षात्कृतधर्माण इदं हातव्यमिदमस्य हानिहेतुरिदम-स्याधिगन्तव्यमिदमस्याधिगमहेतुरिति भूतान्यनुकम्पन्ते।" (न्याय-भाष्ये २।१।६८) इति।

नूतनग्रन्थकारेषु तु पुनः प्रायेण तद्विपरीतैव प्रवृत्तिः। आप्त-लक्षणस्य वस्तुतत्त्वानुभवमूलकत्वमुपेक्ष्य प्राधान्येन शब्दप्रमाण-

तत्परत्वम्, वास्तविकीं प्रजाहितप्रवृत्तिमनादृत्य अहमहमिकाभावेन अज्ञानां विवेकरहितानां लक्ष्मीपतीनां राजादीनां परितोषपूर्वकं यथाकथंचित् स्वविपक्षानधःकृत्य स्वार्थसाधनम् इत्येव प्रायेण नूतनग्रन्थप्रणयनपरिपाट्या रहस्यं वृत्तञ्च ।

तान्येतानि देववाण्याः संस्कृतज्ञानां चावनतेः संक्षेपेणास्मन्मतेन कतिचित् कारणानि । देववाण्याः संस्कृतज्ञानां च तीव्रः समुन्नत्यभिलाप एव नः प्रेरयति अत्र विषय आत्मपरीक्षणाय । आत्मपरीक्षणं हि नाम मिथ्याभिनिवेशरहितेन निश्छद्मना च मनसा विहितं समुन्नतेः प्रथमं साधनमिति समामनन्ति सन्तः ।

## अस्माकं कर्तव्यम्

परं प्रसन्नताया विषयो यत्पुनरपि देववाण्यास्तद्द्वारा च भारतीयसंस्कृतेरभ्युत्थानाय सप्रयत्ना वयम् । उदयाचलमारूढो भगवान् ज्ञानभास्वान् भुवनमाभासयितुं प्रवृत्तः । अविद्यातमिस्रापगमे सर्वेपि मोहनिद्रामुन्मुच्य स्वसमुन्नत्यै चेष्टापरा इतस्ततो दृश्यन्ते । एषा संसदपि तस्या एव प्रत्यक्षं प्रमाणम् । प्रतिवर्षं परःसहस्राणां छात्राणां संस्कृतपरीक्षासु प्रवेशः, परःशतानां पाठशालानां च यत्र तत्र स्थापना—सर्वमेतदाशावहम् । संस्कृतच्छात्रेषु तु एतादृशो नूतन एव जागरः परमसन्तोषावहः ।

वस्तुतो न हि कथञ्चिदप्यस्माकं निराशाया अवसरः । अद्यत्वेऽपि संस्कृतच्छात्रेषु संस्कृतविद्वत्सु च अन्यत्र अश्रुतचरा नैके

विशिष्टा गुणा दृश्यन्ते। तपस्या, कष्टसहिष्णुता, गुरुशिष्यभावः, "अस्मिन्नार्यावर्ते निवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद् विद्यायाः पारंगतास्तत्रभवन्तः शिष्टाः" (महाभाष्ये ६।३।१०६) इत्यादर्शानुसारमनन्यभावेन निष्कामभावनया च विद्यायाः पाठनम्, वस्तुतोऽकृत्रिमः स्वदेशप्रेमा, भारतीयसंस्कृतेरभिमानः, स्वधर्मपरायणता, कर्मनिष्ठता, आस्तिक्यबुद्धिः, देवभक्तिः, शुचिता, भारतीयशीलसदाचारानुवर्त्तित्वम्, विशेषतश्च देववाणीं प्रत्यनन्यप्रेमभावना—सत्सु एतादृशेषु अद्यत्वेऽपि अन्येषु सभ्यताभिमानिदेशेष्वपि प्रायेणादृश्यमानेषु गुणेषु निश्चितं देववाण्या भविष्याभ्युदयविषये न हि कयाप्यनास्थया भवितव्यम्।

नूनं स समयः पुरस्तात्समुपस्थित इव दृश्यते यदा संस्कृतभाषा भूयोऽपि सर्वेषामादरास्पदमुन्नतिशिखरारूढा च भविष्यति। सांप्रतिकी खल्ववस्थितिः सर्वथा अस्वाभाविकी। अन्यदेशेषु यथा स्वदेशसंबन्धिप्राचीनोत्कृष्टभाषाणां समादारः संदृश्यते, तथैवास्मद्देशेऽपि अस्मिन्नभ्युत्थानयुगे देववाण्याः समुत्कर्षेण समादरेण च नूनं भाव्यम्। सत्यं संस्कृतज्ञा असामयिकत्वेन आधुनिकशिक्षितानां दृष्ट्या न तथा समादरार्हा मन्यन्ते यथा तैर्भवितव्यम्। वस्तुतस्तु आधुनिकशिक्षादीक्षितसमाजस्य संस्कृतज्ञसमाजस्य च शिक्षिताशिक्षितत्वदृष्ट्या नहि कश्चिन्मौलिको भेदः। आधुनिकशिक्षिता जानन्तोऽपि साम्प्रतिकीमवस्थितिमितिहासं राजनीतिं च

प्राचीनभारतीयसंस्कृतिज्ञानापेक्षया अज्ञा एव। तच्चैतदन्यथा संस्कृतज्ञेषु। तेऽपि भारतीयप्राचीनसंस्कृत्या परिचिता अपि साम्प्रतिकावस्थाज्ञानापेक्षयैव अज्ञाः। ततश्चाधुनिकशिक्षितैः सह समानेऽपि तेषां दोषे संस्कृतज्ञानामयमेव गुरुतरो दोषो यत्तेऽसामयिकाः। नास्त्यत्र संदेहलवोऽपि यत्समयोपयोगिज्ञानोपार्जनेन संस्कृतोत्कृष्टपाण्डित्यस्य प्राचीनमर्यादायाः संरक्षणेन संपोषणेन च पूर्वमेव पूर्णरूपेण भारतीयभावनाभावितास्ते वस्तुतः समुत्कृष्टपदं लप्स्यन्ते। एतादृशगुणगणालंकृताः संस्कृतज्ञा एव वस्तुतो भारतीयजनताया नेतृत्वधुरं वोढुमर्हाः।

तदेतद्यथा नातिचिरेण संपद्यते तथैवास्माभिः सर्वैः सर्वथा प्रयतनीयम्। सर्वेषां छात्राणामध्यापकानामन्येषां च भारतीयसंस्कृत्यनुरागिणां सहयोगेनैवैतत्संभाव्यते। छात्रैश्च विशेषतः प्रयतितव्यम्। कस्यापि देशस्य भविष्यं युवस्वेव तिष्ठति। यूनामेवोद्योगेन कर्तव्यपरायणतया आशावादितया सोत्साहेन कर्मणा च ते ते देशाः समुन्नताः स्वयशःपताका जगति प्रसारयितुं प्राभवन् प्रभवन्ति च। तेषामेव यूनामस्मद्देशेऽपि विशेषत एतत्कर्तव्यं यत्ते पूर्वोक्तानां दोषाणां परिमार्जनं विधाय शुद्धाचरणेन ब्रह्मचर्येण श्रद्धया गुरुभक्त्या देशप्रेम्णा च नानाशास्त्राण्यधीयाना देशप्रगतिं जगतोऽवस्थितिञ्चावगच्छन्तो भारतीयसंस्कृत्या आदर्शान् ऐक्यभावनां च लोकेषु संस्थापयन्तः परस्परं सौहार्देन, जन्मप्रभृति मरणपर्यन्तं भारतीयानामभ्युदयनिःश्रेयससाधनतत्पराः सततं

स्वसाहित्यसरोरसामृतेन तानाप्याययन्त्याः सर्वथा मङ्गलमय्या भारतीयानां मातृकल्पाया देववाण्याः समुद्धाराय बद्धपरिकरा भवेयुरिति ।

दैन्यभावस्य च परित्यागो विशेषतो विधेयः । दैन्यभाव आशावादिता च नैकत्रावस्थानं सहेते । आशावादिता हि अस्माकमार्यधर्मावलम्बिनां मुख्य आदर्शः । दैन्यं चानार्यजुष्टोऽस्वर्ग्योऽकीर्त्तिकरश्च गुणः ।

वेदमन्त्रेषु हि यत्र कुत्रापि दृश्यते आशावादिता दैन्यराहित्यं चैव श्रेष्ठ आदर्शः प्रतीयते । अस्माकमधःपतनावस्थाकाले दास्यकाले च निर्मिताद् 'असारः संसारः, सर्वथैव हेयः, कारागारसदृशो बन्धस्थानम्, जीवनं दुःखमयम्'

अभ्रमध्ये च पश्यन्ति चञ्चलां विद्युतां गतिम् ।
क्षणं दृष्ट्वा च नश्यन्ति तथा संसारिणो जनाः ॥
यथा हि कूपमध्ये च घटमाला भ्रमन्ति च ।
गमागमौ हि पश्यामि तद्वत्संसारिणो जनाः ॥
जले च बुद्बुदो यद्वत्तद्वत्संसारिणो जनाः ।

इत्यादिनिराशाजनकभावपोषकसिद्धान्तैर्व्याप्तात् संस्कृतसाहित्याद् विपरीतमेव नो वैदिकं साहित्यम् । तत्र हि ।

विश्वदानीं सुमनसः स्याम पश्येम नु सूर्य्यमुच्चरन्तम् ।
( ऋग्० ६।५२।५ )

अस्मे धेहि श्रवो बृहद् द्युम्नं सहस्रसातमम् ।
इन्द्र ता रथिनीरिषः ॥ ( ऋग्० १।९।८ )
इन्द्र त्वोतास आ वयं वज्रं घना ददीमहि ।
जयेम सं युधि स्पृधः । ( ऋग्० १।८।३ )
अदीनाः स्याम शरदः शतं भूयश्च शरदः शतात् ।
( यजु० ३६।२४ )
भद्रं जीवन्तो जरणामशीमहि । ( ऋग्० १०।३७।६ )
पश्येम शरदः शतम् । जीवेम शरदः शतम् ।
बुध्येम शरदः शतम् । रोहेम शरदः शतम् ।
पूषेम शरदः शतम् । भवेम शरदः . शतम ।
भूयेम शरदः शतम् । भूयसीः शरदः शतात् ॥
( अथर्व० १९।६७।१-८)

इत्यादिरूपाभिः प्रार्थनाभिराशावादितैव जातिदृष्ट्या व्यक्तिदृष्ट्या च जीवनस्य मुख्य आदर्शः, अभ्युदयस्य निःश्रेयसस्य च प्रथमं कारणमिति स्पष्टं प्रतीयते।

एतद्दृष्ट्या हि जगदेतत्सुन्दरोपवनसदृशं विधात्रा करुणापरवशेनास्माकमभ्युदयाय ईश्वरप्रदत्तशक्तीनां च पूर्णरूपेण परिपुष्ट्यै परिपुष्टिक्रमेण चामृतत्वपदप्राप्त्यै एव सृष्टम, अत एव च न सर्वथा हेयत्वेन विभावनीयम् ।

वयं हि भारतीयाः

ते सम्मता जनपदेषु धनानि तेषां
तेषां यशांसि न च सीदति धर्मवर्गः ।
धन्यास्त एव निभृतात्मजभृत्यदारा
येषां सदाभ्युदयदा भवती प्रसन्ना ॥

दुर्गे स्मृता हरसि भीतिमशेषजन्तोः
स्वस्थैः स्मृता मतिमतीव शुभां ददासि ।
दारिद्र्यदुःखभयहारिणि का त्वदन्या
सर्वोपकारकरणाय सदार्द्रचित्ता ॥

इत्येवं सततं स्तूयमानाया भगवत्या महाशक्त्याः समुपासकाः 'तुष्टिरस्तु, पुष्टिरस्तु' इत्येवमहर्निशं प्रार्थयमानाश्च कथमिव निराशाया दैन्यभावस्य च पात्रं भवितुमर्हामः ।

ततश्च धृत्युत्साहसमन्वितैः 'स्वदेशभविष्यस्य वयमेव निर्मातारः' इत्येवं दृढं विश्वसद्भिः, लोकप्रगतिमवगच्छद्भिः, किञ्चित्कालादेव नानादेशैर्या अभूतपूर्वा समुन्नतिरासादिता तां पश्यद्भिः, 'वयमपि भारतीयमहापुरुषसन्ताना भारतीयसंस्कृत्यभिमानिनो भारतस्य भूयोऽभ्युत्थानं करिष्यामः, भारतीयजनताया निरभिमानबुद्ध्या सेवां कृत्वा तस्यां परस्परं स्नेहभावं च वर्धयन्तो वास्तविकं पुरोयायिपदमवाप्स्यामः' इति दृढं निश्चित्य सर्वाभ्युदयनिःश्रेयससाधनभूताया देववाण्याः समुन्नत्यै समुत्थातव्यमस्माभिः ।

पार्थना च विधेया,

ओं सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै ।
तेजस्वि नावधीतमस्तु मा विद्विषावहै ॥
सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे संजानाना उपासते ॥
समानी व आकूतिः समाना हृदयानि वः ।
समानमस्तु वो मनो यथा वः सुसहासति ॥
(ऋग्० १०।१९१।२,४)

॥ इति शम् ॥



वृन्दावनस्थ-

गुरुकुल-विश्वविद्यालयस्य

३९ तम महोत्सवे

ग्रन्थकर्तुः

# दीक्षान्त-भाषणम्

( २७। १२। १९४२ ई० )

# व्रतमात्मविशुद्धये

"अग्ने व्रतपते व्रतं चरिष्यामि।...
इदमहमनृतात् सत्यमुपैमि ॥"

(यजु० १।५)

उत्तरोत्तरमुत्कर्षं जीवने लब्धुमुत्सुकः।
प्रतिजाने चरिष्यामि व्रतमात्मविशुद्धये ॥१॥

व्रतानां पालनेनैव तद् गूढमात्मदर्शनम्।
जायते यमिनां नूनमात्मविश्वासकारणम् ॥२॥

ऋषिभिर्मुनिभिश्चैव लोकानां मार्गदर्शकैः।
सेवितो विततः पन्था एष नैवात्र संशयः ॥३॥

विश्वस्य विविधं कार्यं कुर्वन्तोऽत्र निरन्तरम्।
व्रतानां पालनेनैव देवा अमृतभोजिनः ॥४॥

व्रतेन प्राप्यते दीक्षा दक्षिणा दीक्षयाप्यते।
तया च प्राप्यते श्रद्धा श्रद्धया सत्यमाप्यते ॥५॥

(ग्रन्थकर्तुः रश्मिमालायाः)

# कृधी न ऊर्ध्वाञ्चरथाय जीवसे

( ऋग्० १ । ३६ । १४ )

## आर्यधर्मस्य संदेशः

प्रधानमहोदया देव्यः सज्जनाश्च !

नूनमिदं सौभाग्यं यत्पावनेऽस्मिन्समारम्भे स्नातकानभिलक्ष्य दीक्षान्तभाषणं विधातुमामन्त्रितोऽहम् अत्रभवतां समक्षमद्य समुपस्थितोऽस्मि ।

कार्याधिक्यवशादवकाशराहित्येऽपि संस्थयैतया सह स्वकीयप्राचीनसंबन्धेन स्नेहपरवशो मित्राणामनुरोधेन प्रेरितश्चैव अहमेतत्कार्यभारवहनाय समुद्यतोऽभवम् ।

प्रियाः स्नातकाः,

अद्वितीयः खल्वयमवसरो भवतां जीवने । जीवनस्य प्रथमकाले दीर्घायुष्यस्य, बलस्य, वर्चसस्तेजसश्च प्राप्तयर्थम् "अग्ने व्रतपते व्रतं चरिष्यामि" ( यजु० १।५ ) इत्यादिमन्त्रैर्गृहीतस्य व्रतस्य खलु समाप्तावद्य भवन्तः "तं धीरासः कवय उन्नयन्ति स्वाध्यो

मनसा देवयन्तः[1]" ( ऋग्० ३।८।४ ) इत्याद्यनुसारं गुरूणामाशीर्वचोभिः सहैव गुरुकुलात् समावर्तनाय समुद्यता दृश्यन्ते। गुरुकुलं वै तपस्यायाः, संयमस्य, भ्रातृभावस्य, अकृत्रिमस्नेहस्य च स्थानम्। तत्रैव वसन्तो भवन्त आर्यदीक्षया दीक्षिता अभवन्। ततश्च नूतने जगति प्रवेशानन्तरं भवतां कर्तव्यमेतद् यत्तस्यैवार्यधर्मस्य संदेशेन, न केवलं शब्दैः, किन्त्वाचरणद्वारापि, भारतीयसमाजेऽभिनवजीवनस्य संचारो यथा निष्पद्यते तथैव प्रयतितव्यमिति।

परमेष नूतनः संसारः, तं संसारमपेक्ष्य यस्मिन् खलु एतावत्कालपर्यन्तमुषितं भवद्भिः, सुतरां विशालो विसंष्ठुलो विषमः कण्टकाकीर्णश्च। जीवनयात्रायां कठिनपरीक्षायाः स्थानं हि स भविष्यति। अवबुध्यतां तावद् यदस्य नूतनजीवनस्य साफल्यमुपयोगश्च तस्य महत आर्यधर्मस्य सिद्धान्तानामादर्शानां चाद्य-यावद्गृहीतायाः शिक्षाया व्यावहारिकरूपेण चरितार्थतायामेव विद्यते।

तत्र आशावाद एवास्य नूतनजीवनस्य प्रथमः संदेशः।

## आशावादो निराशावादश्च

कस्यैतदविदितं यदाशावाद एवार्यधर्मस्य वैदिकधर्मस्य वा मौलिकः सिद्धान्तः। ओतप्रोतं हि वैदिकं वाङ्मयमाशावादस्य सिद्धान्तेन।

---

१. धीरासः प्राज्ञाः। कवयः क्रान्तदर्शिनो विद्वांसः। स्वाध्यः सुष्ठु सर्वतो ध्यानयुक्ताः। देवयन्तो देवान् कामयमानाः।

कृधी न ऊर्ध्वाञ्चरथाय जीवसे ।

( ऋग्० १।३६।१४ )

अर्थात्, भगवन्! विधेहि नः समुन्नतान् जीवनयात्रायाम् ।

भद्रं जीवन्तो जरणामशीमहि ।

( ऋग्० १०।३७।६ )

अर्थात्, कल्याणमयं जीवनमतियापयन्तो वयं वृद्धावस्थामाप्नुयाम ।

विश्वदानीं सुमनसः स्याम पश्येम नु सूर्यमुच्चरन्तम् ।

( ऋग्० ६।५२।५ )

अर्थात्, सर्वदैव प्रसन्नचेतसः सन्तो वयमुद्यन्तं सूर्यं पश्येम ।

पश्येम शरदः शतम् । जीवेम शरदः शतम् ।
बुध्येम शरदः शतम् । रोहेम शरदः शतम् ।
पूषेम शरदः शतम् । भवेम शरदः शतम् ।
भूयेम शरदः शतम् । भूयसीः शरदः शतात् ॥

( अथर्व० १९।६७।१-८ )

अर्थात्, शतं वर्षाणि ततोऽपि चाधिकं कालं यावद् वयं पश्येम, जीवनयात्रां कुर्वीमहि, ज्ञानं संपादयेमहि, उत्तरोत्तरामुन्नतिमाप्नुयाम, पुष्टिं समृद्धिमैश्वर्यं चाधिगच्छेम ।

मनुष्यजीवने विद्युत्संचारमिव नूतनां स्फूर्तिमुत्पादयद्भिरेतादृशैः प्राणसंजीवनैर्वचनामृतैरापूर्णमिव वै नो वैदिकं वाङ्मयम् ।

ईश्वरप्रदत्तशक्तीनां परस्परं सामञ्जस्येन विकासः, तद्द्वारा च जीवनस्य सर्वाङ्गीणा सम्पूर्णता मानवस्य प्रथमं कर्तव्यमित्येष वै वैदिकः सिद्धान्तः। भगवता विश्वबन्धुना सृष्टं हि एतद् जगदस्माकं सर्वाङ्गीणायाः समुन्नतेः साधकमेव, न तु बाधकम्। अत एवार्यजनस्य दृष्ट्या जीवनमेतत् प्रार्थनाया विषयः, न पुनर्ग्लानेः। एषा चोदात्तभावना नूनं प्रकृतिनियमानुकूलं जीवनं यापयतो निष्पापस्य स्वच्छहृदयस्य च जनस्यैव संभवति।

एतद्विपरीतमेव तु वृत्तं तस्य समाजस्य यस्मिन् प्रवेशाय समुद्यता भवन्तः साम्प्रतम्। नैकशताब्दीतोऽन्धकारस्यावनतेश्च गर्ते पतितोऽयमस्माकं समाजः खलु निराशावादसिद्धान्तैः परिप्लुतः। तेषां सिद्धान्तानामपसिद्धान्तानां वा अनुसारेण हि संसारोऽयमसारः, सर्वथैव हेयः, स्वप्न इव, पान्थशालेव वा विद्यते। तत्र वै अस्माकं स्थितिर्नद्यां निमज्जतो मनुजस्येव। मन्यतामीश्वरेण स संसारः केवलं कारागारस्थानीयत्वेनास्मत्कृते विनिर्मितः।

एतादृशैरेव निराशामयसिद्धान्तैर्भारतीयसमाजश्चिराय निष्प्राणो निःसत्त्वो निस्तेजस्कश्च संवृत्तः। उपरिनिर्दिष्टसिद्धान्तैः प्रभावितानामेव जनानां नूनं रौरवादिनरकाणां कल्पना। "मूर्खः कामी खलश्चाहम्" (="मैं मूरख खल कामी"), तथा "संसारसागरस्येयं पारं गच्छति नौर्यथा" ( =नैया मेरी पार लगाओ) एतादृश्यो दैन्यभावनयोपेताः प्रार्थनास्तस्या एव विचारधारायाः प्रतीकम्।

आर्यधर्मस्य प्रथमोऽयं संदेशो भवतु यद्वयमेतं प्राणघातकं नैराश्यवादं समूलघातं निहत्य वैदिकोदात्तभावनाभिरस्मत्समाजमापूरयेम । किञ्च,

ममाग्ने वर्चो विहवेष्वस्तु वयं त्वेन्धानास्तन्वं पुषेम ।
मह्यं नमन्तां प्रदिशश्चतस्रस्त्वयाध्यक्षेण पृतना जयेम ॥[१]

( ऋग्० १०।१२८।१ )

अधः सपत्ना मे पदोरिमे सर्वे अभिष्ठिताः ।

( ऋग्० १०।१६६।२ )

इत्याद्यनुसारं, न केवलं समाजस्य यूनामेव, किन्तु प्रत्येकं जनस्य समक्षमादर्शमेतं स्थापयेम यत् 'स्वकीयोन्नतिविरोधिनीनामखिलानां शक्तीनां प्रवृत्तीनां च निरासायैव वयं जन्म गृहीतवन्तः, यस्यामपि दिशि अस्माकमुद्योगस्य गतिस्तस्यामेव नूनं विजयलक्ष्मीरस्माननुपैष्यति । वयं खलु अमृतस्य ज्योतीरूपस्य परमात्मनः पुत्राः, अत एव स्वीयं जीवनं प्रकाशमयं कुर्वाणा वयमन्येषामपि जीवनं प्रकाशमयं विधास्यामः' इति ।

## प्रगतिवादो रूढिवादश्च

भारतीयसमाजस्य सर्वाङ्गीणायाः समुन्नतेः पूर्णविकासस्य च नितरां बाधिका प्रवृत्तिस्तस्य रूढिवाद एव । तस्योत्पत्तेः पुष्टेश्च कारणानि तान्येव येभ्यः खलु निराशावादस्य जन्मासीत् । अव-

१. विहवेषु संग्रामेषु । इन्धानाः समिन्द्धिर्दीपयन्तः । पृतनाः शत्रुसेनाः ।

रुद्धोन्नतिविकासमार्गो हि जनः समाजो वा स्वभावत एव नैराश्यवादेन आत्मन्यविश्वासेन च ग्रस्तो जायते। पादमात्रप्रचलन एव कदाचिन्मम गर्ते कूपे वा पतनं संभवतीति भयाद्भीतोऽन्ध इव स स्वस्थान एव स्थितिं वरं मन्यमानः पदात्पदमपि प्रगतिं नैव करोति, रूढिवादस्य ग्राहेण वा ग्रस्तो जायते।

तद्विपरीतम्, यस्य जनस्य समाजस्य वा समन्नमुन्नतेर्मार्गा अनवरुद्धाः प्रशस्ताश्च भवन्ति, आशावादस्य च प्रकाशो विद्यते, अत एव च य आत्मविश्वासेन समुपेतः, नूनं स्वभावत एव स प्रगतिशीलो दृश्यते। कोऽपि चक्षुष्मान् प्रकाशस्य विद्यमानतायामात्मविश्वासेन वै कुत्रापि स्वेच्छया गन्तुमर्हति।

अत एव यथैव प्रगतिवादः प्रकाशस्य आशामयस्य विश्वासमयस्य च जीवनस्य लक्षणम्, तथैव खलु रूढिवादोऽन्धकारस्य नैराश्योपेतस्य आत्मविश्वासरहितस्य जीवनस्य च प्रतीकम्। शब्दान्तरेषु, यथैव खलु रूढिवादः समाजस्य, पृथ्व्या उदरे शिलीभूतानां वृक्षादीनामिव, निश्चेष्टाया जीवनरहितायाश्च स्थितेः प्रख्यापकः, तथैव प्रगतिवादो जीवनक्रियया सम्पन्नस्य सचेष्टस्य च प्राणिनः स्थितेः परिचायकः।

अयमेव रूढिवादो भारतीयसमाजस्यात्यन्तं महती समस्या। पादयोर्बद्धं निगडमिव एष समाजस्य नानारूपैः प्रगतिमवरुणद्धि। एतस्य हि दुष्प्रभावः, नितरां सूक्ष्मेणादृश्येन च प्रकारेण, भयानका

राजयक्ष्मकीटाणुवः शरीर इव, अस्माकं समाजे प्रविष्टस्तं जीर्णं शीर्णं च विधातुं सद्यस्तत्परो विद्यते।

अस्य खलु प्रवृत्तिर्जीवनस्य विभिन्नक्षेत्रेषु दृश्यते।

तथा हि **शब्दानामर्थविषये** तावदयमेव रूढिवादस्तेषामन्त-स्तलप्रवेशेऽस्माकं बाधकः, प्रायेण च मानसिकस्य पाषण्डस्य च्छद्म-नश्च पोषको जायते। अयमेव मनुष्याणां हीनस्वार्थैर्निम्नप्रवृत्तिभिश्च प्रेरितानां कार्याणां वास्तविकं स्वरूपमाच्छाद्य जनताया: प्रतारणार्थे आवरणायते। भक्तिः, तपः, दानम्, दया, यज्ञः, स्वर्गः, वर्णाः, श्रद्धा इत्यादिशब्दानां प्रयोगविषयको योऽयं लोके विप्लवस्तस्य मूलकारणमेष शब्दगतो रूढिवाद एव।

**भगवद्गीतायां** यज्ञतपोदानादिविषये यत्खलु सात्त्विकराज-सतामसभेदप्रदर्शनं तदपि अस्यैव रूढिवादस्य निराकरणाय प्रयत्नः।

प्रायेण जनैरनवगतमहत्त्वायाः श्रीस्वामिदयानन्दाचार्यैर्निर्मिताया **आर्योद्देश्यरत्नमालाया** अपि वस्तुतोऽस्यैव शब्दगतरूढिवादस्य निरास एव प्रयोजनम्।

पूर्वोक्तस्य रूढिवादमूलकस्य मानसिकपाषण्डस्य च्छद्मनो वा कारणादेव नैके उद्भटा अपि विद्वांसः, भारतीयेतिहासस्य विभिन्न-कालेषु, प्राचीनग्रन्थान् स्वसिद्धान्तानुकूल्येनैव व्याख्यातुं सप्रयत्ना दृश्यन्ते। नूतनयुगेऽपि विद्यत एव सा प्रवृत्तिरस्मद्देशे। एतदेव कारणं यद्भारतवर्षे विभिन्नकालेषु समाजस्य परिष्कार (सुधार) प्रगत्योरु-

द्देश्येन महापुरुषैः प्रचालितान्यान्दोलनानि संप्रदायाश्च स्वप्रधान-लक्ष्याच्च्युतानि रूढिवादस्य कच्छे पतितानि विनाशमगच्छन्। नैतत्तिरोहितं प्राचीनस्य सामयिकस्य वा इतिहासस्यानुरागिणाम्।

रूढिवादिनामेष स्वभावो यत्ते, परोपजीविनो वृक्षा वृक्षान्तराणीव, प्रगतिशीलान्यान्दोलनानि कथमप्यात्मसात्कृत्वा निष्प्राणतां निःसत्त्वतां चापादयन्ति। एतदर्थं च ते समाजे समादृतानां शब्दानां भावनानां च रूपेण परम्परया समागतानां रूढीनामेवोपयोगं पूर्णत्वेनादृश्यविधयैव विदधति।

रूढिवादस्य पूर्वोक्ताभ्योऽदृश्याभ्यो घातकप्रवृत्तिभ्य आत्मनः समाजस्य च रक्षणार्थम् ऐकान्तिकसत्यनिष्ठाया आत्मपरीक्षणस्य अमूढबुद्धेश्च सततं प्रयोगस्य महत्यावश्यकता। मनस्यन्यत्क्रियायां चान्यदित्येतद्द्वयं येषामस्ति त एव वञ्चका 'द्वयाविनः'[1] इत्येवं वेदे गर्हणीयत्वेन प्रोक्ताः।

"मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन् को न ऋषिर्भविष्यतीति। तेभ्य एतं तर्कमृषिं प्रायच्छन्" (निरुक्तपरिशिष्टे) इत्यत्र प्रतिपादितस्य 'तर्क एव ऋषिः' इत्येतस्य सिद्धान्तस्य वै उपयोगो न तावत्परसिद्धान्तानां खण्डनाय विधेयो यावदात्मन एव परीक्षणाय। आत्मपरीक्षणं हि नाम मनुष्यस्य प्रथमं समुन्नतेर्मूलम्।

---

१. तु० "त्वं तस्य द्वयाविनः" (ऋग्० १।४२।४)। द्वयमस्यास्तीति द्वयावी द्वयवादी वञ्चक इति यावत्।

ऐकान्तिकी शब्दप्रमाणपरता वा, परम्परागता "अन्धेनैव नीयमाना यथान्धाः" इत्येवंरूपा अन्धभक्तिरेव वा रूढिवादः। अत एव स सर्वतः प्रथमं बुद्धेर्जडताया लक्षणम्।

तद्वैपरीत्येन, वेदेषु पुनः "भद्रादभि श्रेयः प्रेहि" (तैत्तिरीय-संहितायाम् १।२।३।३) (अर्थात, हे भगवन्, प्रापयतु भवान् नः उत्कृष्टादुत्कृष्टतरं पदम्), "कृधी न ऊर्ध्वाञ्चरथाय जीवसे" (ऋग्० १।३६।१४) (अर्थात्, भगवन्, विधेहि नः उन्नतान् प्रगतिशीलांश्च जीवनयात्रायाम्) इत्यादिमन्त्रैः प्रगतिवादस्यैव गुणगानं क्रियते। वेदेष्वसकृद् गीयमान आशावादोऽपि वस्तुतः प्रगतिवादस्यैव रूपान्तरम्। स च जीवनस्य मुख्यं लक्षणम्।

नूतने जीवने प्रवेशानन्तरमेतत्तावद्भवतु भवतां प्रथमं कर्तव्यं यत्तर्कस्यैव ऋषेः साहाय्येन तात्त्विकदृष्ट्या आत्मपरीक्षणं विधाय विचारणीयं—किं स्वयं वयमेव रूढिवादेन ग्रस्ताः स्वकीयायाः शिक्षाया दीक्षायाश्च प्रवञ्चनापरा न भवाम इति।

एवं खल्वाशावादस्य प्रगतिवादस्य चाधारेण, आर्यधर्मस्यादर्शाननुसरद्भिर्भवद्भिरभिनवसमाजस्य निर्माणे सर्वदैव प्रयत्नपरैर्भवितव्यम्। सनातनः सार्वभौमश्च वैदिको धर्म इति वै मतमस्माकम्। परं तस्यैव समाजस्य, येनास्माकं घनिष्ठः संब-

न्धः, वैदिकधर्मस्यादर्शानामाधारेणाभिनवनिर्माणमन्तरेण कथमिव तस्य धर्मस्य सार्वभौमता साधयितुं शक्यतेऽस्माभिः। **स्वगृह एवोत्करबहुले कथमिव वयं परान् शुचितां स्वच्छतां वा उपदेष्टुं शक्नुमः।**

अतीतस्यैव चिराय गीतगानपरा वयमभूम। समयोऽयं भविष्यस्य गीतानां गानस्य। **वास्तविकदृष्ट्या आदर्शो भविष्य एव तिष्ठति, नैवातीते।** संभवति यदतीतस्य गीतगानेनास्माकं जीवनस्य मन्दायां गतौ किमपि परिवर्तनं न भवेत्। परं भविष्यस्य गीतगानमस्मदीयं जीवनं स्फूर्तिमयं करिष्यतीति नात्र संदेहः।

**"परिमितं वै भूतम्....अपरिमितं भव्यम्"** (ऐ० ब्रा० ४। ६) (भव्यं भविष्यमित्यर्थः) कथनमेतत्सुतरां सत्यमेव।

वस्तुतस्तु **अतीतस्य महत्त्वं तावदेव यावत्तदस्माकं भविष्यस्य निर्माणे साहाय्यकृत्।** श्रेयःप्रेयोमार्गयो रहस्यमस्मिन्नेव सिद्धान्ते निहितम्। यथा प्रेयोमार्गस्य संबन्धोऽस्माकं जीवनस्यातीतकालसंबन्धिनीभिर्भावनाभिर्भवति, तथैव श्रेयोमार्गस्य संबन्ध आदर्शैः सह विद्यते। वास्तविकोन्नते रहस्यं तु उभयोरपि समन्वये सामञ्जस्ये च तिष्ठति।

## मानवतायाः संमानो गौरवं च

आर्यधर्मो वैदिकधर्मो वा वस्तुतः सनातनः सार्वभौमश्च मानवधर्म इति वै अस्माकं सिद्धान्तः। अत एव विभिन्नकालीनै-

स्वस्वदेशभवैश्च संप्रदायैर्मतैर्वा साकं नैव एकस्यामेव तुलायां स्थापयितुं शक्यते। विश्वास एवोऽस्माकं न केवलं भावनामूलक एव, किन्तु पुष्टकारणोपेतैवास्याधारः। परं सनातनसार्वभौममानवधर्मस्य वैशेषिकं स्वरूपमेतदेव संभवति यत्तस्मिन् मानवताया उत्कृष्टपदं प्रति संमानस्य गौरवस्य च, तथा तां मानवतां प्रति विशुद्धन्यायसत्ययोर्व्यवहारस्यापि, स्थानं भवेत्। अस्माकं प्राचीनवाङ्मये एतदेव तथ्यम् **'आनृशंस्यम्'** इति पदेनाभिव्यज्यते। परं खेदस्यायमवसरो यत् मानवतां प्रति सम्मानगौरवभावनाभिः सहैव एतत्पदस्य प्रयोगोऽप्यस्मत्समाजेऽद्यत्वे प्रायेण विनष्टः।

"यथेमां वाचं कल्याणीमावदानि जनेभ्यः।
ब्रह्मराजन्याभ्याꣳ शूद्राय चार्याय च.............."
(यजु० २६।२)

सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम्।
(ऋग्० १०।१६१।२),

समानो मन्त्रः समितिः समानी
समानं मनः सह चित्तमेषाम्।
(ऋग्० १०।१६१।३)

एतादृशीनामुदात्तभावनानां स्थानमद्यत्वे तत्तज्जातिगतानां तत्तद्वर्गगतानां च स्वार्थानां परम्परागतेन पारस्परिकसंघर्षेण गृहीतमिव दृश्यते। संघर्षस्यास्य दुष्प्रभावेण जीर्णः शीर्णश्च भारतीयसमाजः पूर्वापेक्षयाप्यनितरां विशक्त इव दृश्यते। धर्मस्यापदेशेन निजस्वार्थसाधनतत्परतया अस्माकं वैदिकधर्माभिमानी समाजो

मानवतां प्रति संमानगौरवयोर्महतो लक्ष्याद्विमुखीभूत इव संजातः। अत एव प्रायेणास्माकं कथनव्यवहारयोः परस्परं सामञ्जस्यं न विद्यते। आर्यधर्मस्य दीक्षया दीक्षितानां भवतां स्नातकानामेतत्कर्तव्यं भवतु यत्समाजादेनां विसंवादिनीं प्रवृत्तिमपसार्य तस्य नूतनं निर्माणमेतादृशं विधेयं यत्तत्र प्रत्येकं जनः स्वकीयानामीश्वरप्रदत्तशक्तीनां पूर्णविकासस्यावसरं लभते, समुचितस्यात्मसंमानस्य रक्षां च विधातुं पार्यते। एवं सत्येव समाजस्य प्रत्येकं जन आत्मनस्तस्याङ्गत्वभावनायां गर्वमनुभवितुम्, समाजस्य सबलतां संपादयितुं च शक्नोति।

पूर्वोक्तसिद्धान्तस्य निश्छलभावेन स्वीकृतिमन्तरेण, आत्मनो मिथ्यागौरवभावनयोपेता वयं, दलितसमाजस्य शिरसि केवलं मिथ्याश्वासनस्य हस्तं धारयित्वा, अथवा तस्य कर्णेषु ओंकारेण रहितानां सहितानां वा मन्त्राणामुच्चारणेन, एवं च दलितोद्धारकार्यमप्यात्मनो गौरवस्यैव साधनतामापाद्य, नैव तस्य समाजस्योद्धारं कर्तुं, न वा तमात्मसात्कर्तुं प्रभवामः; काममेतत्तस्य रोषाय भवेत्। दलितसमाजस्यात्मसात्करणेऽस्माकमसफलताया एतदेव मुख्यं कारणम्।

परं ध्रुवं सत्यमेतद् यत्पूर्वोक्तसिद्धान्तस्य सर्वात्मना स्वीकारेण विना आर्यधर्मस्य सार्वभौमतायाः स्वकीयसमाजस्य हितसम्पादनस्य च वार्ता केवलमेकोऽनर्गलः प्रलाप एव। **ईश्वरस्य शाश्वतनियमानां व्यतिक्रमेऽपि कुशलकामः केवलमात्मनः प्रतारणामेव करोति।**

## प्रियस्नातकाः,

सत्यसनातनार्यधर्मस्य प्राणप्रदस्य सन्देशस्य उपरिप्रदर्शितान् मौलिकान् सिद्धान्तान् मनसा वाचा कर्मणा च सर्वथा सत्यभावेनाङ्गीकारमन्तरेण, तद्द्वारेण च भारतीयसमाजस्य नूतननिर्माणं विना, तस्य धर्मस्य प्रकाशमानं स्वरूपं जगतः समक्षमाविष्कर्तुं नैव शक्नुमो वयम् । ततश्च एतेषां सिद्धान्तानामङ्गीकारस्य नूतना दृढतमा प्रतिज्ञास्माभिरेवं क्रियताम्—

ओं "ध्रुवा द्यौर्ध्रुवा पृथिवी ध्रुवं विश्वमिदं जगत् ।
ध्रुवासः पर्वता इमे" ध्रुवाः स्याम व्रते वयम् ॥

नूनमाशावादस्य वारिणा सिक्तः, प्रगतिवादस्य प्राणप्रदे प्रकाशे, आत्मसमीक्षणं सत्यनिष्ठा तथा मानवतायाः समादरः—एतैरुपकरणैः सुसेवित एव अभिनवभारतीयसमाजपादपस्याङ्कुरो दृढमूलतामवाप्य कालक्रमेण पुष्पितः फलितश्च भवितुं शक्नोति ।

## वैदिकसाहित्यस्य पुनरुद्धारः

पूर्वोक्तान् सिद्धान्तानादर्शांश्च समाजस्य जनतायाश्च हृदयंगमतामापादयितुं नूनं मुख्यतमं साधनं वैदिकसाहित्यस्य पुनरुद्धारः सामान्यजनतायां च तस्य प्रचार एव विद्यते । निराशावादस्यादर्शहीनतायाश्च परिस्थितौ (वातावरणे वा) हि निर्मितं नः साहित्यमस्मत्समाजस्याकर्मण्यताया उत्साहहीनताया म्लानमुखताया दीनतायाश्च कारणम् । आशावादस्य प्राणसंजीवनरसेनापूर्णं

वैदिकं साहित्यमेव ततोऽनार्यजुष्टाया अस्वर्ग्याया अकीर्त्तिकर्याश्चावस्थाया अस्मानुद्धर्त्तुमलम्।

परं वैदिकसाहित्यस्योद्धारो नहि वेदमहिम्नो गीतानां गानेनैव सेत्स्यति। तपस्विनः, त्यागिनः, प्रतिभाशालिनः, दृढनिष्ठाः, संशितव्रता विद्वांस एवैतत्कार्यं सम्पादयितुं समर्था भवितुमर्हन्ति। अस्यां दिश्यस्माकं प्रयत्नोऽगण्य एव सांप्रतं यावत्। ततः परम् आत्मप्रवञ्चनं किं भवेत्?

अस्माकमभीप्सितं त्वेतत्। यथा हि खलु संप्रति शिक्षितसमाजस्य वार्तालापेष्वपि पाश्चात्यशिक्षायाः प्रभावः प्रतिफलित इव दृश्यते, तथैव, ततोऽप्यधिकतरमेव वा, अस्माकं समाजः आबालवृद्धम् आपामरप्राज्ञम् आराजरङ्कं च प्राणसंजीवन्या वैदिकविचारधारया प्रभावितो भवेत्; तद्द्वारा च तस्य जीवने कस्याप्यदृष्टपूर्वस्य नूतनप्रकाशस्य, नूतनप्रेरणायाः, नूतनपरिस्पन्दनस्य च स्पष्टश्चमत्कारो दृष्टिगोचरतामापद्येत। अस्माकं गृहेषु ग्रामेष्वपि च गीयमानानि गीतानि तामेव विचारधारां प्रकटीकुर्युः। एतस्य महतः स्पृहणीयस्य लक्ष्यस्य सिद्धिः कथं संभवतीति खलु गम्भीरं विचारमपेक्षते।

अन्ते प्रार्थ्यते खल्वस्माभिरखिलविश्वभावनो भगवान् तदध्यात्मबलं यतो वयं सत्यतया दृढभावनया च वैदिकसिद्धान्तानामनुसरणे समर्था भवेम।

ओं मा प्रगाम पथो वयम्।

(ऋग्० १०।५७।१)

किरठल (मेरठ) स्थितस्य

आर्यमहाविद्यालयस्य

रजतजयन्ती-

महोत्सवावसरे

शिक्षासम्मेलनस्य

सभापतेर्

ग्रन्थकर्तुः

# अभिभाषणम्

( २५ । १२ । १९४४ ई० )

## शिक्षायाः स्वरूपम्

चारित्र्येण समं शिक्षा श्रमेण तपसा तथा ।
अनुशासनसंजुष्टा सा लक्ष्यं ब्रह्मचारिणः ॥१॥
सर्वेषामपि भूतानां मूर्धन्यं पदमास्थितम् ।
साधनं सर्वसिद्धीनां यत्तन्मानुष्यकं मतम् ॥२॥
आसुरीं वृत्तिमुत्सृज्य दैवं भावमुपाश्रितम् ।
यया संपद्यते शिक्षा सा लक्ष्यं ब्रह्मचारिणः ॥३॥
शिक्षा या केवलं स्वार्थबुद्धिं पुष्णाति सर्वथा ।
विषयेष्विन्द्रियारामप्रवृत्तिर्वर्धते यया ॥४॥
तां समूलं समुत्सार्य लोककल्याणकाम्यया ।
आत्मवत्तागुणोपेता सा शिक्षा ब्रह्मचारिणः ॥५॥
उत्तरोत्तरमुत्कर्षो जीवनस्य यया भवेत् ।
सदाचारसमृद्धेश्च सौरभं सुमनोहरम् ॥६॥
सर्वलोकसमाकर्षि देशव्यापि यया भवेत् ।
आशाप्रकाशसंयुक्ता सा शिक्षा ब्रह्मचारिणः ॥७॥

(ग्रन्थकर्तुरमृतमन्थनात्)

---

ॐ

सं पूषन् विदुषा नय यो अञ्जसानुशासति ।
य एवेदमिति ब्रवत् ॥[1] ( ऋग्० ६।५४।१ )

# शिक्षायामादर्शभावनाः

देव्यः सज्जनाश्च !

आर्यमहाविद्यालयस्यास्य 'रजतजयन्ती'महोत्सवावसरे शिक्षा-सम्मेलनस्य सभापतिपदाय निमन्त्रितोऽहं नूनं विद्यालयाधिकारिणः प्रति कृतज्ञतामनुभवामि । राजकीयकार्याधिक्येनावकाशाभावेऽपि तेषां स्नेहाग्रहयोरनुरोधेनैव कार्यभारमिममहमङ्गीकृतवान् ।

सदातन एव प्रश्नः शिक्षाविषयकः सर्वेषां सभ्यदेशानां पुरस्तात् । परमद्यत्वे संघर्षस्याशान्तेश्च वातावरणे चतुर्दिशं व्याप्ते, मनुष्यतया च पशुताया रूपे गृहीते सति सर्वत्रैव शिक्षाविषयिणी अन्तरवेक्षण-प्रवृत्तिर्विशेषतो जागरितेव दृश्यते । अतश्चास्माकमपि कर्तव्यत्वेन

---

१. हे पूषन् पोषक परमात्मन् ! तेन विदुषा नय अस्मान् संगमय योऽञ्जसा ऋजुमार्गेण अनुशासति उपदिशति । यश्च जीवनलक्ष्यमुद्दिश्य 'इदमेव' इत्येवं निश्चयेन ब्रवत् ब्रवीति । इत्येषा व्याख्या ।

समापतति यत्खलु स्वकीयायाः सांप्रतिकशिक्षायाः पद्धतेरादर्शस्य च विवेचनं नाम ।

## शिक्षायाः प्रधानमुद्देश्यम्

शिक्षायाः प्रधानमुद्देश्यं किमित्येष वै मुख्यः प्रश्नः शिक्षाविषये। नूनं तदेतादृशं भवेद् येन मनुष्यस्य प्रवृत्तिर्मनुष्यत्वाभिमुखी न तु पशुत्वाभिमुखी जायेत, यच्च मनुष्यस्य पशुभ्यः पृथक्कृतायाः साधनी-भूतानां दैवीनां सात्त्विकीनां च प्रवृत्तीनां प्रोत्साहनाय, न तु पाशवीनामासुरीणां च प्रवृत्तीनामुत्तेजनाय, स्यात्। नैतद् विशेषविवरणमपेक्षते यन्मनुष्यः खलु स्वभावत एव दैवीभिरासुरी-भिश्च प्रवृत्तिभिरुपेतो विद्यते। तथापि मनुष्यतायाः कृते आवश्यक-मेतद् यन्मनुष्यः स्वकीयनिम्नप्रवृत्तीनां दमने शक्तो भवेत् । इममेवार्थं भगवद्गीता एवमाह—

द्वौ भूतसर्गौ लोकेऽस्मिन् दैव आसुर एव च ।

(१६।६)

दैवी संपद्विमोक्षाय निबन्धायासुरी मता ।

(१६।५) इति ।

शिक्षाया उपर्युक्तस्य वास्तविकस्य उद्देश्यस्योपेक्षा वै साम्प्रतं संसारव्यापिनः संघर्षस्याशान्तेश्च मुख्यं कारणम्। कर्तव्या-कर्तव्यबुद्धेरपेक्षां विनैव, कथमपि स्वार्थसम्पादनस्य शक्तेर्जनमेव शिक्षाया उद्देश्यमित्येव प्रायेण लोको मन्यते। एतादृश्या भाव-नाया आधारेण गृहीता शिक्षा कामं धनबलयोः प्राप्तेः साधनं

भवतु; परन्तु नहि मनुष्यस्तद्द्वारा वास्तविकदृष्ट्या सामाजिकीं वैयक्तिकीं वा शान्तिमाप्तुं शक्नोति। तद्भावभावितो हि मनुष्यः सत्यस्य, आत्मसंयमस्य, स्वदेशस्य, स्वधर्मस्य, स्वजातेः; स्वसंस्कृतेश्च गौरवमयीर्भावना उपेक्ष्य परेषां चाटुकारितां प्रवञ्चनां चाप्यङ्गीकरोति। अत एव शिक्षाया मौलिकं लक्ष्यमस्मन्मत एतदेव यत्तद्द्वारा मनुष्ये स्वकीयजीवनस्यादर्शभावनायाः कर्तव्यबुद्धेर्वा उद्बोधनं भवेदिति।

"धियो यो नः प्रचोदयात्" (यजु० २२। ६),

"यां मेधां देवगणाः पितरश्चोपासते।

तया मामद्य मेधयाग्ने मेधाविनं कुरु स्वाहा॥"

(यजु० ३२। १४)

इत्यादिवैदिकमन्त्रेषु बुद्धिविषयिण्या प्रार्थनया सैवादर्शभावना कर्तव्याकर्तव्यबुद्धिरेव वा अभिप्रेयते।

तस्या एवादर्शभावनाया निदर्शनमस्माकम्

अग्ने नय सुपथा राये...युयोध्यस्मज्जुहुराणमेनः।

(यजु० ४०।१६)

(अर्थात्, भगवन्! वास्तविकैश्वर्यस्य प्राप्त्यै प्रेरय नः सत्यस्य मार्गेण गमनाय, आत्महानिकरं पापं चास्मत्तो दूरीकुरु),

विश्वानि देव सवितर्दुरितानि परा सुव। यद्भद्रं तन्न आ सुव॥

(यजु० ३०।३)

(अर्थात्, हे देव सवितः! अस्माकं पापान्यस्मत्तो दूरे गमय। यच्च कल्याणं तदस्मानागमय)

इत्यादिवैदिकप्रार्थनासु दृश्यते।

आदर्शभावनाया उद्बोधनं वै निखिलसात्त्विकप्रवृत्तिषु प्रगतिशीलनूतनतायाः समुत्पत्तेः कारणम्। आदर्शभावनायाः प्रकाशे हि मनुष्यस्वभावस्य निम्नप्रवृत्तीनां विद्यमानता नैव संभवति। शनैः शनैः स्वयमेव ता विलीनतामुपयान्ति। आदर्शहीनं हि जीवनमन्धकारे यात्रया समानं यस्यामवस्थायां मनुष्यः, प्रगतेस्तु का कथा, स्वजीवनस्यापि रक्षायामसमर्थो भवति।

आदर्शभावनैव, व्यक्तेः समाजस्य च दृष्ट्या, जीवने वैषम्यस्य घातकद्वन्द्वानां वा अभावस्य स्पृहणीयाया अवस्थायाः प्राप्तेः साधनम्। एतस्या एवावस्थाया नामान्तरं वर्णाश्रमव्यवस्थेति नः प्राचीनशास्त्रेषु प्रसिद्धम्। यथा हि खलु व्यक्तेः समाजस्य च पारस्परिकद्वन्द्वस्य समाधानं वर्णव्यवस्था, एवं वै मनुष्यस्य विभिन्नानां तात्कालिकीनामैन्द्रियिकाणां च प्रवृत्तीनां सामञ्जस्येन प्रगतिशीलतासंपादनमेव आश्रमव्यवस्था।

व्यक्तेः समाजस्य च, व्यक्तिगतविरुद्धप्रवृत्तीनां च परस्परं घातकद्वन्द्वं कस्याविदितं मनीषिणः। नूनं तस्य परस्परोन्नायकस्य जीवनप्रदसमन्वयस्य व्यवस्थायाश्च रूपेण परिवर्तनं महानादर्शः। तस्यैव महत आदर्शस्य प्राप्तेरात्मनि योग्यतासम्पादनं वास्तविकी

द्विजत्वप्राप्तिः । एतस्या एव द्विजत्वप्राप्तेरुद्देश्येन गुरुणोपनीता बालकाः प्राचीनकाले गुरुकुले निवासं चक्रुः ।

## शिक्षायां सामाजिकी दृष्टिः

अतश्च **समष्टिदृष्ट्या संपूर्णस्य समाजस्य जातेः राष्ट्रस्य वा हितभावनयैव शिक्षाया मौलिकेन लक्ष्येण भवितव्यम्** ।

शिक्षाद्वारा भावनायामेतस्यां प्रबुद्धायां लब्धभूमिकायां वा शिक्षितो जनः कस्यामप्यवस्थायां वर्तमानः—सोऽध्यापको वैद्यो विधि( =Law )जीवी व्यवसाये रतो वा भवतु, अन्यो वा कश्चित्—देशस्य समाजस्य जातेर्वा हितं न कदाचिदुपेक्षितुं प्रभवेत् ।

वैदिकविवाहसंस्कारे **'राष्ट्रभृद्'** आहुतिभिर्वधूवरयोरेव राष्ट्रहितभावना दृढीक्रियते । तासामाहुतीनामेष एवाभिप्रायो यत्ताभ्यां प्रतिज्ञातव्यं यत्तयोर्वैवाहिकजीवनस्य मुख्यं लक्ष्यं राष्ट्रहितस्य संपादनमेव भविष्यतीति ।

साम्प्रतिकभारते विभिन्नसामाजिकवैषम्यैः परम्परागतमिथ्यास्वार्थैरनुदारभावनाभिश्च अस्माकमार्यजातौ विशृङ्खलितायाम् , जगति सर्वत्रापमानभाक्त्वपि स्वसमाजे पुनः निःसारनीचोच्चदुर्भावनाभिरभिभूतेष्वस्मासु, राष्ट्रं समाजं च प्रति समष्टि-

रूपेण हितभावनाया उद्बोधनस्य महती आवश्यकतेति कस्य तिरोहितं विपश्चितः।

अतेऽस्माकं शिक्षासंस्थाभिः स्वकर्तव्यत्वेन सर्वतः प्रथममेतद्विचारणीयं यत्कथं नु भारतीयेषु नवयुवसु सम्पूर्णं समाजं जातिं राष्ट्रं च प्रति सत्या हितभावना उद्बोधयितुं शक्यते, कथं तेषु एकस्या भारतीयजातेर्गर्वः, यावद्भारतीयम् (भारतीयमात्रे) अकृत्रिमः प्रेमा च संपादयितुं शक्यते, कथं च परम्पराप्राप्तानाम् अनुदारभावनानां विनाशकारिप्रभावात्तेषां रक्षा संभवतीति।

समष्टिदृष्ट्या शिक्षाया महत आदर्शस्यावहेलनया, लघ्वतिलघुसमाजवर्गेष्वेव मिथ्याजातिबुद्धिमाधाय, तेषामेव हितसाधनं च प्रायेणात्मनो लक्ष्यत्वेन गृहीत्वा इयमस्माकं विश्वविजयिनी आर्यजातिः परःशतेभ्यो वर्षेभ्यः परेषां धिक्कारन्यक्कारयोः पात्रं सती घोरमपमानमसहिष्ट। तेषामेव कुसंस्काराणां विषमयी आत्मघातिनी प्रवृत्तिरद्यापि तां न मुञ्चति। तस्यैवैष प्रभावो यत्साम्प्रतिकशिक्षादीक्षिता अपि बहवः प्रायेण तस्मिन्नेव कर्दममये कच्छे पतिता इव दृश्यन्ते। एष एव विषमयः प्रभावो हिन्दुसमाजं जीर्णं शीर्णं च विदधाति। तस्य च दुष्परिणामः संपूर्णेनापि राष्ट्रेण सुतरामनुभूयते।

## शिक्षायां वैयक्तिकी दृष्टिः

व्यक्तिगतजीवनदृष्ट्यापि शिक्षाद्वारा आदर्शभावनाया उद्बोधनस्य सुतरामावश्यकता। व्यक्तिभिरेव समाजस्य निर्माणं

भवति । एकैकया इष्टकया हि महान्तः प्रासादा निर्मीयन्ते । अतः शिक्षायाः साक्षादुद्देश्यं तु व्यक्तिगतपरिष्कार एव । शब्दान्तरे, एतदेव 'चरित्रनिर्माणम्' इति व्यपदिश्यते ।

किं पुनश्चरित्रनिर्माणमिति चेत्, उच्यते—

मनुष्ये स्वजीवनस्यादर्शस्य पूर्णं परिज्ञानम्, तस्मिन्नादर्शे निष्ठाविश्वासयोः सद्भावः, किं च तस्यादर्शस्य प्राप्तावनुरक्तिः पालने दृढता चेत्येतदेव चरित्रनिर्माणमिति मन्तव्यम् ।

अस्माकमादर्शेषु कार्येषु च यद्येकवाक्यता सामञ्जस्यं च न विद्यते, अस्माकमुपदेशे आचारे च यदि विरोधो दृश्यते, यद्यल्पीयसाऽपि बाह्येनाभ्यन्तरेण वा प्रलोभनेन, आलस्येन, संकटेन वा स्वकीयादर्शेभ्यो विचलिता वयं भवामस्तर्हि अस्माकं शिक्षायाः किं मूल्यं कश्चोपयोगः ?

प्रायेण न विदितमेतद्भवेद् बहूनां यत्प्राचीने भारतीयवाङ्मये जीवात्मनोऽप्यर्थे 'इन्द्र'शब्दः प्रयुज्यत इति । तदर्थकादेव इन्द्रशब्दाद् 'इन्द्रिय' शब्दस्य व्युत्पत्तिः । तथा च पाणिनीयं सूत्रम् "इन्द्रियमिन्द्रलिङ्गमिन्द्रदृष्टमिन्द्रसृष्टमिन्द्रजुष्टमिन्द्रदत्तमिति वा" (५।२।९३) । एतस्यायमेवाभिप्रायो यत्स्वकीयबाह्याभ्यन्तरपरिस्थित्योर्विजय एव मानवस्य प्रथमं लक्ष्यमिति । परिस्थितीनां विजयस्य प्राप्त्यै प्रयत्न एव वास्तविकी तपस्या ।

"मह्यं नमन्तां प्रदिशश्चतस्रः" ( ऋग्० १०।१२८।१ ) "अहमिन्द्रो न परा जिग्ये" ( ऋग्० १० । ४८ । ५ ) इत्यादिश्रुतीनामप्येतदेव हार्दम् ।[१]

वैदिकविवाहसंस्कारे सामाजिकादर्शभावनायाः सद्भावविषय उपरिष्टादुक्तमस्माभिः । तथैव वैयक्तिकदृष्ट्यापि आदर्शभावनामभिलक्ष्यैव तस्मिन् संस्कारे 'जया'ख्या आहुतयो विधीयन्ते। स्वस्थशरीरेण विवेकबुद्ध्या च संपन्नस्य दृढव्रतस्य सत्यनिष्ठस्य च जनस्य समक्षं जीवनस्य सर्वविधा बाधा नतशिरस्का जायन्त इत्येतमेवार्थं वधूवरौ बोध्येते ताभिराहुतिभिः । स्पष्टमेव चायमर्थस्तत्र

प्रजापतिर्जयानिन्द्राय वृष्णे
प्रायच्छदुग्रः पृतनाजयेषु ।
तस्मै विशः समनमन्त सर्वाः
स उग्रः स इ हव्यो बभूव ॥

१. तदत्र द्रष्टव्यम्—

इन्द्रोऽहमिन्द्रकर्माहम् अरातीनां वधोऽस्म्यहम् ।
तेषां बाधास्तिरस्कृत्य पदं मूर्ध्नि दधाम्यहम् ॥१॥
ऐश्वर्याणि समग्राणि वर्त्तन्ते यानि कानिचित् ।
वर्तेऽधिदेवता तेषां भोक्ता चापि न संशयः ॥२॥
इन्द्रियेष्वस्ति या शक्तिर्याश्च तेषां प्रवृत्तयः ।
तासामहमधिष्ठाता स्रष्टा द्रष्टा च वस्तुतः ॥३॥

( जयान् = जयसाधकान् मन्त्रान् विजयान्वा। पृतनाजयेषु = विरोधिशक्तीनां जयनिमित्तेन । इन्द्राय वृष्णे = विजयशीलाय शक्तिसंपन्नाय जनाय । समनमन्त = संनता जायन्ते । प्रायच्छत् = प्रयच्छति । उ = च । हव्यः = स्तुत्यः । वभूव = भवति ) इत्यस्मिन् मन्त्रे प्रतिपाद्यते ।

सामाजिकजीवनं वस्तुतः समुन्नतं विधातुमस्माकं व्यक्तिगतजीवने पवित्रता, सत्यता, कर्तव्यपरायणता इत्यादिगुणानां सद्भावस्यात्यन्तमावश्यकता । सा चैपाद्यत्वेऽदृष्टचररूपेणातिमहती । अस्माकं सामाजिकजीवने तदाधारभूतानामेषामुदात्तगुणानां कियती आवश्यकता विद्यते, कियच्चोत्तरदायित्वं तद्विषयेऽस्माकं शिक्षितानामित्यन्तरवेक्षणेन सर्वैरप्यस्माभिरनुभवितुं शक्यते। एतादृशां गुणानां विषये हि ग्रामीणाया अशिक्षितायाश्च जनताया मार्गप्रदर्शनमस्माकं कर्तव्यमासीत् । तत्स्थाने तत्प्रतिकूलमेवोदाहरणमुपस्थाप्यतेऽस्माभिः । तदेतद् दौर्भाग्यमस्मद्देशस्य ।

शिक्षायां वैयक्तिकदृष्ट्या आदर्शभावनायाश्चरित्रनिर्माणस्य च याथातथ्येन लक्ष्यीकरणेन अस्माकं गृहायेव शिशूनां कृते शिक्षाम-

---

अत एवेन्द्रशब्देन व्युत्पत्तिः क्रियते बुधैः ।
इन्द्रियेत्यस्य शब्दस्य शब्दशास्त्रविशारदैः ॥४॥
( ग्रन्थकर्तुः रश्मिमालायाः )

न्दिराणां स्थानं ग्रहीतुं शक्नुवन्ति। तस्यामवस्थायां राष्ट्रस्य समक्षमुपस्थितस्य शिशुशिक्षालयानां 'मान्टेसरी' प्रभृतिपाठशालानां वा विषये आवश्यकस्य प्रश्नस्य प्रायेण बहुतिथं समाधानं स्वत एव संजायते। वास्तविकशिक्षामवाप्तवतोर्मातापित्रोः सम्पर्के गृहस्य पवित्रे वातावरणे वसतां शिशूनां कोमलहृदयेषु सच्चरित्रताया देशभक्तेश्च स्थायिन्याः शिक्षायाः सुखेनैव बीजारोपणं भवितुमर्हति। **"मातृमान् पितृमानाचार्यवान् पुरुषो वेद"** (अर्थात्, मनुष्यस्य वास्तविकी शिक्षा प्रशस्तेषु मातापित्रोराचार्ये चायत्ता भवति), **"पितुर्दशगुणं माता गौरवेणातिरिच्यते"** (अर्थात्, बालकस्य शिक्षायां पितुरपेक्षया मातुरत्युत्कृष्टं स्थानं वर्तते) एतेषां वैदिकादर्शानां सत्यता महत्ता च, शिक्षायां वैयक्तिकादर्शभावनायै चरित्रनिर्माणाय च समुचितस्थानस्य दानेन विना, नैवानुभवितुं शक्यतेऽस्माभिः।

अतश्च भवत्वस्माकं बालकानां कस्मिन्नपि विशिष्टविषये शिक्षा, परं शिक्षाया वास्तविक्याः सफलतायाः कृते सामान्यरूपेण आवश्यकमेतद् यत्तेषां शिक्षायां सामाजिकदृष्ट्या वैयक्तिकदृष्ट्या च उपरिनिर्दिष्टानामादर्शभावनानामुद्बोधनस्य समुचितेन स्थानेन भाव्यमिति। वस्तुतः शिक्षाया इयमेव मौलिकी भित्तिः।

## जनतायाः शिक्षायामाश्रमाणां स्थानम्

शिक्षाया दृष्टिकोणे पूर्वोक्तस्यापेक्षितपरिवर्तनस्य प्रश्नेन सहैव, जनतायां शिक्षायाः प्रसारस्यापि महान् प्रश्नो देशस्य सम्मुखे विद्यते।

कस्यैतदविदितं यदन्येषामुन्नतदेशानामपेक्षया भारतीयजनता शिक्षा-विषये नितरामनुन्नता। साम्प्रतं हि सा अविच्चिरकालादागतेन घोरेणाज्ञानेन अन्धविश्वासैश्च ग्रस्ता समन्ताद् दृश्यते। तस्याश्च नेतृत्वं तेषां स्वार्थिनां जनानां हस्ते वर्तते यैश्चिरादेव तस्याः श्रद्धालुताया अन्धभक्तेश्च प्रायेण दुरुपयोग एव कृतः। न तस्यामेकराष्ट्रियभावना, नापि जीवनप्रदानां धार्मिकविश्वासानामेकरूपता समुपलभ्यते। अत एव राष्ट्रस्य शक्तेः प्रवृद्धौ सहायतायाः स्थाने सा केवलं भाररूपेणैवावतिष्ठते। वास्तविकदृष्ट्या शिक्षायाः प्रसारेणैव एषा दुरवस्थापनेतुं शक्यते।

अत्र विषये आश्रमाणां प्राचीनप्रणाल्याः पुनःप्रवर्तनेन महत्साहाय्यमाप्तुं शक्यत इति नः प्रतिभाति। शिक्षाप्रसारस्य यानि साधनानि अद्य यावदस्माकं सम्मुखे वर्तन्ते, प्रथमं तु तान्यपर्याप्तान्येव जनतायां शिक्षाप्रसारणाय; द्वितीयम, यथोक्तमुपरिष्टात्, साम्प्रतिकशिक्षापद्धतौ पूर्वोक्ताया आदर्शभावनाया उद्बोधनस्य नहि तत्स्थानं यदभीष्टमावश्यकं वा विद्यते। अत एव प्राचीना या आश्रमप्रणाली सा जनतायां शिक्षायाः प्रसाराय न केवलं साहाय्यकारिण्येव, किन्त्वपरिहार्या अपीति प्रतीयते।

समुन्नतेषु देशेषु, यत्र शासनेन शिक्षायाः कृते कोटिकोटिधनस्य व्यय आवश्यकत्वेन मन्यते क्रियते च, नैकाः शासनेनासम्बद्धाः संस्था अपि जनतायाः शिक्षणकार्ये महान्तं सहयोगं कुर्वन्तीति न भवेत् तिरोहितं विदुषाम्।

अत्रेदमवधेयम्। उपर्युक्तदृष्ट्या हि शिक्षायाः प्रयोजनार्थं केवलं पठनस्य लेखनस्य अथवा साक्षरतायाः नैवापरिहार्यं स्थानम्। नूनं तदुपयोगिता विद्यते; परं तावदेव शिक्षायाः सर्वस्वं प्रधानरूपं वेति न स्वीक्रियतेऽस्माभिः। जनतायाः शिक्षायां मौखिक्याः प्रायोगिक्या अथवा प्रात्यक्षिक्याः पद्धतेरपि अतीव महत्त्वमिति प्रायेणोपेक्ष्यते शिक्षाविशेषज्ञैरपि। अत एव नैके विषयाः, य एतया पद्धत्या सरलतयैव शिक्षयितुं शक्यन्ते, पुस्तक-द्वारा पाठ्यमानाश्छात्राणां शिरःसु अनावश्यकं भारमारोपयन्ति। अर्थदृष्ट्यापि अतीव व्ययसाध्यमेतत्। अद्यत्वे निर्धना अल्पवय-स्काश्च छात्राः पुस्तकभारेणावनताः पाठशालायै गच्छन्तः कस्य विचारशीलस्य मनसि करुणां नोत्पादयन्ति।

इंग्लैण्डप्रभृतिदेशेषु उपर्युक्तपद्धतिविषयकसिद्धान्तमनुसृत्यैव महतां संग्रहालयानां प्रदर्शनागाराणां चोपयोगो जनताया मनोरञ्जनेन सहैव शिक्षणार्थमपि क्रियते। एतदर्थमेव तेषु स्थानेषु नैकेषां व्याख्यातॄणां नियुक्तिस्तत्रत्यवस्तूनां स्वरूपादेर्ज्ञानं साधारणजनताया भवेदित्यभिप्रायेण क्रियते। ते हि तत्र तत्र प्रकोष्ठे गत्वा विविध-वस्तूनां स्वरूपं जनतामवबोधयन्ति। ''रेडियो' ( आकाशवाणी )-'सिनेमा' ( चलच्चित्रप्रदर्शन ) संस्थयोरपि एतदुद्देश्येनैव महानुप-योगः सफलतापूर्वकं तत्र क्रियते।

अस्मद्देशेऽपि पण्डिताः साधवः संन्यासिनश्च कथावार्त्तो-पदेशप्रभृत्युपायैर्जनतायाः शिक्षणे महत् कार्यं चिरादेव कुर्वन्तः

कस्याविदिता: । सा पद्धतिरद्यत्वे विकृतैवेति अन्यदेतत् । उपर्युक्त-पद्धत्या साधारणजनताया: शिक्षार्थमेव पुराणानां निर्माणमासी-दित्यसकृच्छास्त्रेषु प्रतिपाद्यते ।

परं भारतस्य प्राचीनकाले देशे यत्र तत्र स्थिता ऋषीणां मुनीनां चाश्रमा महत्या सफलतया जनताया: शिक्षणे सहयोग ददति स्मेति प्रायेण न ज्ञायते लोकैः। तपस्यासंतोषात्मसंयम-परोपकारविद्योपार्जनादीनाम् उच्चपवित्रवातावरणस्य हेतोर्जन-तायाम् तानाश्रमान् प्रति अतीवाकर्षणं स्वाभाविकमेवासीत्। एवं राजभिः प्रजाभिश्च समादृतास्त आश्रमास्तस्मिन्काले जनताया: शिक्षणविषय उत्कृष्टविद्यालयानां स्थानीया अभूवन् ।

अस्मन्मते आर्यप्रतिनिधिसभा-सनातनधर्ममहासभासदृशीनां लोकशिक्षणरतानां संस्थानां साधूनां संन्यासिनां चैतत् कर्तव्यं यत्सामान्यजनताया: शिक्षणस्योद्देश्येन, तां शताब्दीनामज्ञा-नस्यान्धविश्वासानां च गर्तादुद्धतुम् , तस्यां धर्मानुरागस्य एक-राष्ट्रियताया श्च भावानामुत्पत्तये, प्रत्येकं मण्डले न्यूनाद् न्यूनमेकस्याश्रमस्य स्थापनायै कापि योजना प्रस्तुतीक्रियताम् । एवं च यावद्देशमाश्रमाणामेका परम्परा विस्तृता भवितुमर्हति ।

एतेषामाश्रमाणां च कार्यकर्तारः संचालका वा परोपकारैक-व्रता देशभक्ता धर्मात्मानस्तपस्विनो विद्वांसश्च वानप्रस्थाः संन्या-सिनो वा भवेयुः । तेषु जनताया आर्थिकीधार्मिक्याद्यावश्यकतानां परिज्ञानेन सहैव सेवाभावेन तस्या उत्थापनेऽनुरागोऽपि भवेत् ।

स्वस्थवृत्तस्य तथा "होमियोपैथी" सदृशसामान्यचिकित्सापद्धते-र्ज्ञानमप्यावश्यकम् । अन्ततः, स्वकीयसेवाभावेन, पवित्राचरणेन, निःस्वार्थजीवनेन च जनताया विश्वासभाजनतामवाप्तु योग्यतापि तेषु भवेत् । तेषां कर्तव्यमेतद् भवेद् यत्ते कथावार्ताभिरुपदेशैः संस्कारैरन्यैश्चैवंजातीयैरुपायैर्जनतां शिक्षयेयुः, तस्या अन्धविश्वासानपनयेयुः, सर्वथास्वस्थसुन्दरसंपन्नसदाचरणयुक्तजीवनयापनस्य विधिमुपदिशन्तस्तस्यामुदात्तवैदिकभावनाश्च उद्बोधयेयुः ।

स्पष्टमेतद् यदीदृशानां कार्यकर्तृणां पवित्रजीवनं सततसंपर्कश्च यथा जनताया मनांसि आवर्जयितुं तां प्रभावितां च कर्तुं प्रभवति, नैव तथा 'रेल' यान द्वारा यत्र तत्र भ्रमणपराणां वैतनिकानामुपदेशकानाम्—येषां वास्तविकजीवनेन जनता नितरामेवापरिचिता—उपदेशा भाषणानि वा प्रभवन्ति । अत एव कारणात्, एतादृशानामुपदेशकानां साहाय्येन जनतायां कासांचिदप्युच्चभावनानां प्रचारस्याद्यत्वे बहुधावलम्बितः प्रकारः प्रायेण निरर्थक एवेति नः प्रतिभाति ।

खेदस्यायं विषयो यद् देशस्य धर्मस्य चोद्धारे तत्पराभिरपि संस्थाभिर्जनताया एवं शिक्षणस्य सांप्रतं यावत् प्रायेणोपेक्षैव कृता । अत एव सामान्यजनतायां तासां प्रभावः प्रायेणाभावरूप एव । अत एव च भारतीयजनता अद्यापि शताब्दीनामज्ञानस्य अन्धविश्वासानां च गर्ते पतितैव दृश्यते ।

आशास्यते यत्तादृश्यः संस्था अस्य प्रश्नस्य विषये गम्भीरभावेन विचारं करिष्यन्ति, तथा अस्माकं वानप्रस्थाश्रमाः, साधू-

नामाश्रमाः, गुरुकुलानि, ऋषिकुलानि अन्याश्चैवंविधाः संस्थाः स्वस्थानानां समन्तान्निवसन्त्या सामान्यजनतया सह स्वसम्पर्कं संवर्धयितुम्, उपर्युक्तदृष्ट्या च तस्याः शिक्षणं स्वकार्यक्रमेण सह सम्मेलयितुं प्रयत्नपरा भविष्यन्ति।

## संस्कृतशिक्षाया महत्त्वं तस्याः पद्धतिश्च

शिक्षाविषयकविचारप्रसङ्गे, विशेषतश्च एतादृशस्य महाविद्यालयस्य रजतजयन्त्युत्सवावसरे यस्य मुख्यमुद्देश्यं संस्कृतशिक्षणमेव विद्यते, संस्कृतशिक्षाया विषयेऽपि कश्चिद्विचारो नूनमावश्यक एव।

नास्त्यत्र सन्देहो यत्संस्कृतभाषैवास्माकं धर्मस्य संस्कृतेश्च मूलस्रोतः। किञ्च,संसारस्य विभिन्नवाङ्मयेषु संस्कृतवाङ्मयस्याप्रतिमं स्थानम्। अतश्च वेदादिशास्त्राणां ज्ञानप्राप्तये एकमात्रसाधनस्य संस्कृतस्याध्ययनमस्माकं मुख्यं कर्तव्यम्। एवं सत्यपि, सत्यमेतद् यज्जीवनस्य सभ्यतायाश्च अन्यान्यावश्यकतानां दृष्ट्या अस्माभिस्तत्तद्भाषाणां साहाय्येन तेषामन्यविषयाणामप्यध्ययनं विधेयं येषां ज्ञानं संस्कृतद्वारा न संभाव्यते। एतस्यामवस्थायां स्पष्टमेतद् यत्संस्कृतशिक्षायास्य सर्वेषां कृते कश्चित्समान एव पाठ्यक्रमो नहि शक्यते निर्धारयितुम्। व्यक्तीनामवसरस्य परिस्थितेश्च भेदाद् रुचीनां वैचित्र्याच्च तस्मिन् पाठ्यक्रमे भेदोऽनिवार्य एव। तस्मिन् क्रमे मुख्यो भेदस्तु द्विविधानामधिकारिणां दृष्ट्या भविष्यति। प्रथमं तु तावत्तेऽधिकारिणो ये संस्कृते

प्रगाढपाण्डित्यमधिगत्य अध्यापकवृत्तिं स्वीकृत्य एकान्त-रूपेण तस्यानुशीलन एव जीवनं यापयितुमिच्छन्ति। द्वितीयाः पुनस्ते ये संस्कृतज्ञानोपार्जनं विधाय, यथासंभवं तस्य साहाय्येन, अन्यप्रकारिकामाजीविकां कर्तुमिच्छन्ति।

अस्मन्मते संस्कृतशिक्षणविषयेऽद्य यावत्कृतः प्रयत्न उपर्युक्त-दृष्टिद्वयेनापि नैव संतोषावहः। प्रथमदृष्ट्या तावत् सत्यामपि परीक्ष्यच्छात्राणांसंख्यायांवृद्धौ पदवाक्यप्रमाणपारगाणां प्रौढपण्डितानां परम्पराघत्वे निस्संशयं जीवितसंशयं प्राप्तेव दृश्यते। वेदब्राह्मणदर्शन-धर्मशास्त्रज्यौतिषादिगम्भीरविषयाणामुत्कृष्टमध्ययनाध्यापनं प्रायेण विलुप्तमिव नितरां कदर्थयति सचेतसां चेतांसि।

किञ्च प्राचीनपरिपाटीमाश्रित्य संस्कृतपठनपाठनपरम्पराया निर्वाहकाः संस्कृतज्ञा विद्वांसोऽद्य यावत् भारतीयप्राचीनसाहित्यादि-विषयकानुसंधानकार्ये न केवलमुदासीना एव, किन्तु बाहुल्येना-परिचिता अपि तस्यानुसंधानकार्यस्य प्रक्रियया मौलिकसिद्धान्तैश्च। महता खेदेन सममेव गम्भीरविचारस्यायं विषयः।

द्वितीयदृष्ट्यापि संस्कृतशिक्षार्थं कृतानां प्रयत्नानां विषये गम्भीरतापुरस्सरं विचारस्यावश्यकता विद्यते। स्पष्टमेतद् यत्संस्कृतस्याधिकाधिकः प्रचारो जनतायामेतयैव दृष्ट्या निर्धारितस्य पाठ्यक्रमस्य साहाय्येन संभवति। संस्कृतशिक्षाया आजीविकया संबन्धे स्थापित एव तत्संभवति। केवलं भावुकताया आधारेण संस्कृतशिक्षाया जनतायां सन्तोषावहः प्रचारः कदापि भविष्यतीति मनोरथमात्रम्। एतदेव कारणं यत्परःशतवर्षेभ्यो

जनतया, द्विजातिभिरपि, संस्कृतस्य पठनपाठनं त्यक्तमासीत्। संस्कृतपठनपाठने चिरादेव केवलं त एव प्रवृत्ता अभूवन् ये संस्कृतज्ञानसाहाय्येन पौरोहित्येन अध्यापकवृत्त्या वा स्वकीयजीविकामर्जितुमशक्नुवन्। शिक्षायामाजीविकादृष्टेरुपेक्षा नैव कर्तुं शक्यते। अतश्च यदि वयं जनतायां संस्कृतस्य प्रचारं वस्तुतोऽभिलषामस्तर्हि तस्य पाठ्यक्रमस्याजीविकया सह सम्बन्धस्य स्थापनमपरिहार्यत्वेनावश्यकम्।

सामान्यरूपेण आयुर्वेदराजशास्त्रपौरोहित्यादिविषयाणां सरलतया सम्बन्धः संस्कृतशिक्षणेन स्थापयितुं शक्यते। एतादृशविषयाणां स्पष्टमुपयोगिता जीविकायै विद्यते। संस्कृतस्य विद्यालया अपि कष्टेन विनैव एतेषां पठनपाठनस्य प्रबन्धं कर्तुं शक्नुवन्ति। एतद्विहाय, कृषिः, व्यापारः, उद्योगः इत्यादिविषयाणां शिक्षार्थमपि प्रबन्धो यावच्छक्यं संस्कृतविद्यालयैर्विधीयताम्।

परमेतस्य गम्भीरस्य विषयस्य वास्तविको विचार एतदर्थमेवायोजितासु विशिष्टासु विद्वत्परिषत्स्वेव सुतरां कर्तुं शक्यते। अत एव प्रस्तूयत आशास्यते चास्माभिर्यत् संस्कृतशिक्षणकार्यं कुर्वतीभिर्गुरुकुलकृषिकुलादिसंस्थाभिस्तादृशी काचित्स्थायिनी विदुषां शिक्षापरिषत् शीघ्रं स्थाप्येत यस्यां तत्तद्दृष्टिभिस्तत्तदनुभवानां चाधारेण संस्कृतशिक्षापद्धतेर्विषये परस्परं विचारविनिमयस्यावसरः प्राप्यते तद्द्वारा चोक्तसमस्यायाः समाधाने समर्था वयं भवाम।

इति शम्

---

( पृ० २७९ )



डा० जी० थीबो,
प्रिंसिपल, गवर्नमेंट संस्कृत कालेज बनारस
(१८७९-१८८८)

'लक्ष्मीपुर'नगरे

असमसंस्कृतसमितेः

षड्विंशे

उपाधि-वितरणोत्सवे

ग्रन्थकर्तुः

# दीक्षान्तभाषणम्

(CONVOCATION ADDRESS)

( १०।४।१९६१ ई० )

ॐ

अहं राष्ट्री संगमनी वसूनां
चिकितुषी प्रथमा यज्ञियानाम् ।
तां मा देवा व्यदधुः पुरुत्रा
भूरिस्थात्रां भूर्यावेशयन्तीम् ॥
अहमेव स्वयमिदं वदामि
जुष्टं देवेभिरुत मानुषेभिः ।
यं कामये तं तमुग्रं कृणोमि
तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥

( वागाम्भृणीसूक्तम् । ऋग्० १० । १२५ । ३, ५ )

---

सैनापत्यं च राज्यं च दण्डनेतृत्वमेव च ।
सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥

( मनु० १२।१०० )

माननीयाः सभापतिमहोदयाः विद्वद्वर्याश्च,

महदिदं सौभाग्यं यदहमद्य भारतीयसंस्कृत्या एकतमप्राचीनकेन्द्रत्वेन सुप्रसिद्धे, नैकपवित्रतीर्थैरुपशोभिते, लोकोत्तरसुषमासंपत्त्या प्रकृतिदेव्या निजावास इव च प्रतीयमाने प्रदेशेऽस्मिन् देववाण्याः प्रचारसमुद्धारकार्ययोस्तत्पराया अस्याः परिषदो वार्षिकाधिवेशनावसरे स्नातकान् तत्समस्यांश्चाभिलक्ष्य दीक्षान्तभाषणं विधातुम् अधिकारिणामभ्यर्थनावशाद् अत्रभवतां समक्षमुपस्थितोऽस्मि ।

शैशवात्प्रभृत्येव जीवननिर्विशेषं खलु समुपासिता सुरभारती अनेन जनेन । तस्याः संरक्षणेन, संवर्धनेन, प्रचारणेन प्रसारणेन चैव, न केवलमस्माकं भारतीयानामेव, किन्तु मानवमात्रस्यापि वास्तविकं कल्याणं संभवतीति सुदृढो मम विश्वासः । अत एव आयुषः पश्चिमेऽपि भागे संस्थितोऽहमुक्तमामन्त्रणं कर्तव्यपालनमेवेदमिति मन्यमानः स्वीकृतवान् ।

आर्यमिश्राः !

नूनमद्य सर्वतः प्रथमं दीक्षान्तमहोत्सवेऽस्मिन् समुपस्थिताः परीक्षापायोधिसमुत्तीर्णाः

"ब्रह्मचारी……श्रमेण लोकांस्तपसा पिपर्ति"

(अथर्व० ११।५।४)

इत्याथर्वणीं श्रुतिमनु श्रमतपोमूर्तयः स्नातका एव हार्दिकमभिनन्दनं सर्वेषामस्माकमर्हन्ति । तादृशानेव स्नातकानभिलक्ष्य

"वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्मं चर" इत्यादिः "एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम्" इत्यन्तश्च सुप्रसिद्धस्तैत्तिरीयोपनिषद उपदेशः समाम्नायते ।

तैः सहैव,

अस्मिन्नार्यावर्त्ते निवासे ये ब्राह्मणाः कुम्भीधान्या अलोलुपा अगृह्यमाणकारणाः किञ्चिदन्तरेण कस्याश्चिद् विद्यायाः पारंगतास्तत्रभवन्तः शिष्टाः ।

( महाभाष्ये ६।३।१०९ )

इत्यादर्शम् अस्मिन् सर्वथा प्रतिकूलेऽपि काले यथाशक्ति अनन्यभावेन अनुसरन्तो यशोऽवदातमूर्तयस्तेषामध्यापका अपि, नानाविधविघ्नबाधास्वपि देववाण्या भूयःसमुत्थानस्य कृते कार्यकर्तारोऽन्येऽपि तथैव सर्वथा साधुवादार्हाः ।

तदेतदभिनन्दनं साधुवादश्च न केवलमवसरप्राप्त उपचार एव, किन्तु भारते शिक्षाजगतः सांप्रतिकीः प्रवृत्तीर्निभालयतः पुनरपि भारतीयशीलसदाचारयोः समुद्धारे समुत्सुकस्य ममान्तरात्मनः समुद्गतो भाव एव मन्तव्यः ।

नूनं स्वभावत एव संस्कृताध्ययनाध्यापनकर्तारः श्रमस्य तपसश्च मूर्तयः । परमद्यत्वे तु साम्प्रतिकजीवनस्य चाकचक्येन चमत्कारकारणाच्चेतआकर्षणया धारायाः प्रलोभनकाले सांप्रतिकशिक्षाया मोहमुन्मुच्य सात्त्विकजीवने रतास्ते प्रायेण कर्तव्यबुद्धिप्रेरिता एव

संस्कृतस्याध्ययनाध्यापनमनुसरन्तो विशेषतोऽस्माकमभिनन्दनार्हा इत्यत्र नैवास्ति कश्चित् संदेहस्यावसरः।

## सांप्रतिकभारते पारम्परिक-संस्कृतशिक्षापद्धतेः स्थानम्

परम्परामाप्तायाः संस्कृतशिक्षापद्धतेर्नूनमद्यत्वे नैकाः समस्याः। नैककारणवशान्नैव तस्या दशा संतोषावहा। कामं च नानाविधपरिष्कारसापेक्षा सा इति सर्वमग्रे विचारयिष्यामः।

तथाप्यद्य सा जागर्त्ति प्रचलति चेति महत् सौभाग्यं भारतस्येत्येव तावदधस्तात् प्रदर्शयितुं प्रयत्यतेऽस्माभिः।

भारतस्य स्वर्णयुगे प्रचलितायाः शिक्षापद्धतेरनेके गुणा अद्यापि तस्यां कथंचित् सुरक्षिता आदर्शरूपेण नानाविधगम्भीरसमस्याभि कदर्थितां साम्प्रतिकीं शिक्षापद्धतिं सत्पथमानेतुं समर्था इत्यस्माक विश्वासः।

प्रथमं तावदेतद्दृष्ट्यैव तस्या अतिमहत्त्वमुपयोगिता च।

कथमिति चेत्तदेवात्र प्रदर्श्यते। तथा हि—

## विश्वविद्यालयानां दुरवस्था

साम्प्रतं भारतीयशिक्षाजगति योऽसौ प्राणहन्तृ हालाहलमिव सुदारुणः कोलाहलः स कस्याविदितः। छात्राध्यापकयोः छात्राधिकारिणोर्वा परस्परं संघर्षस्य समाचाराः प्रायः समायान्ति नः श्रवणपथम्।

सेयं छात्रोच्छृङ्खलतया कर्तव्यनिष्ठाध्यापकानां, निर्व्याजविद्यापरायणतामुत्सृज्य प्रधानतोऽर्थार्जनपराणामध्यापकानामुपेक्षाभावेन शिक्षाणां छात्राणां च पारस्परिकसंबन्धस्य आदर्शहीनता कं न तापयति भारतीयसंस्कृतेः कल्याणानुबन्धिषु आदर्शेषु श्रद्धावन्तं जनम्।

विश्वविद्यालयच्छात्राणां निरङ्कुशव्यवहारेण नागरिकाणामपि जीवनं दुःसहं जायते काले काले इत्ययमपरो गण्डस्योपरि स्फोटः।

परदारेषु परदारिकासु च मातृबुद्धिं स्वसृबुद्धिं दुहितृबुद्धिं वा शास्त्रतो व्यवहारतश्च प्रतिपादयति भारतीयसंस्कृतिः। परं तद्विरुद्धमेव विश्वविद्यालयेषु छात्राणामभद्रो व्यवहारो नूतमन्या हृदयोन्माथिनी प्रायेण प्रात्यहिकी समस्यास्माकं विश्वविद्यालयानाम्।

शृङ्गारभावनायाः सर्वथा परिपोषके तत्रत्यजीवने छात्रेषु अध्यापकेष्वपि वा तपोमयजीवनस्य वार्तापि न श्रूयते। अत एव शिक्षाया अतीव व्ययसाध्यत्वं, स्वास्थ्यस्य निर्ह्रासः, कस्या अपि नियमितायाः संध्यावन्दनादिसहकारिण्या दिनचर्याया अभावः—सर्व एष दुरन्तः परिणामस्तस्या एव पद्धतेः!

कस्मिंश्चित्प्रधानविश्वविद्यालये नवागतस्योपकुलपतेः कृते आवासस्थानस्य शीततापनियन्त्रणसज्जायां प्रायेण विंशतिसहस्रमुद्राव्ययस्य वार्ता समाचारपत्रेषु केन नालोकिता भवेत्?

तत्तत्पक्षानादाय परस्परमविश्वासेन अहमहमिकया च व्याप्तवातावरणेषु तत्तद्विश्वविद्यालयेषु उपकुलपतेर्नियुक्तेरप्येका दुर्विगाह्या समस्या।

सैषा हृदयतापकरी भारतीयविश्वविद्यालयानां सांप्रतिकी दुर्दशा !!!

## प्राचीना भारतीया आदर्शाः

तदत्र विषये प्राचीना ये भारतीया आदर्शाः तेषां कश्चिदुल्लेखो नासामयिको भवेत्।

"ब्रह्मचारी....श्रमेण लोकांस्तपसा पिपर्त्ति" (अथर्व० ११।५।४) इत्याथर्वणश्रुतिप्रामाण्याद् भारतीयसंस्कृतेः प्राचीनतम-कालादारभ्यैव श्रमेण तपसा च ब्रह्मचारिजीवनस्य घनिष्ठः संबन्ध आसीदिति स्पष्टमेव प्रतीयते। उपनिषत्स्वपि जाबालसत्यकामा-दीनामुपाख्यानेषु तस्यैवादर्शस्य नैकत्र ध्वनिः श्रूयते।

अत एव वाल्मीकिरामायणे महाराजदशरथपुत्रस्यापि रामस्य विषये "वेदैश्च ब्रह्मचर्यैश्च गुरुभिश्चोपकर्षितः" (वा० रा० २।१२।८४) इत्येवं वर्णनं दृश्यते।

सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै।
तेजस्वि नावधीतमस्तु। मा विद्विषावहै॥

(तैत्तिरीयोपनिषदि ब्रह्मानन्दवल्लीशान्तिपाठः)

इत्येवं प्रात्यहिकीं प्रार्थनां कुर्वतोः गुरुशिष्ययोः परस्परं कीदृशः स्निग्धमधुरः संबन्ध आसीदिति नैव विशिष्टव्याख्यानमपेक्षते।

स एव तयोः संबन्धो यास्कीयनिरुक्ते हृदयहारिशब्देषु एवमन्वा-ख्यातो दृश्यते—

य आतृणत्त्यवितथेन कर्णा-
वदुःखं कुर्वन्नमृतं सं प्रयच्छन् ।
तं मन्येत पितरं मातरं च
तस्मै न द्रुह्येत् कतमच्चनाह ॥ इत्यादि ।

(निरुक्ते २।४)

अस्यार्थस्यातीव हृदयहारित्वेनैव महाभारते (उद्योगपर्वणि ४४।६) मनुस्मृतावपि (मनुस्मृतौ २।११४, ११५, १४४) च स शब्दान्तरैर्निबद्धो दृश्यते ।

अतोऽलोलुपेषु तपःप्रधानेषु कर्तव्यबुद्ध्या पुत्रनिर्विशेषमन्तेवासिभ्यो विद्यां वितरत्सु गुरुषु श्रद्धावतां छात्राणां स्वमानत एव पूर्णतयाऽमायिको व्यवहार आसीत् प्राचीनकाले ।

अनसूयकान् ऋजून् तपस्विनः श्रद्धावतश्च छात्रानुद्दिश्यैव आचार्यस्य

आ मा यन्तु ब्रह्मचारिणः स्वाहा ।
वि मा यन्तु ब्रह्मचारिणः स्वाहा ॥
प्र मा यन्तु ब्रह्मचारिणः स्वाहा........ एवं मां
ब्रह्मचारिणः । धातरायन्तु सर्वतः स्वाहा ॥

(तैत्तिरीयोपनिषद् १।४।२,३)

एतादृशी समुत्कण्ठा वर्णिता श्रूयते ।

किं बहुना, संस्कृतवाङ्मयं खलु प्राचीनकालिकस्य गुरुशिष्य-

योरादर्शसम्बन्धस्य प्राचीनविद्यासंस्थानां च तदनुकूलवातावरणस्य पदे पदे हृद्यं साद्रश्यमुपस्थापयति ।

## सांप्रतिकविश्वविद्यालयानां परिष्कारे संस्कृतविद्यालयैरादर्शोपस्थापनम्

अस्माकं देववाण्याः समुपासकानामेष गर्वस्य गौरवस्य च विषयो यत्प्राचीनपरम्परामनुसरत्सु संस्कृतविद्यालयेषु संस्कृतपाठशालासु च उपरिनिर्दिष्टाः प्राचीना आदर्शा अद्यापि जाग्रति ।

दिष्ट्या अद्यापि तत्र गुरुशिष्ययोः परस्परं सस्नेहमधुरसंबन्धो दृश्यते । अद्यापि तत्र

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुः साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः ॥
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥

इत्यादिपद्यानि सश्रद्धं पठ्यमानानि श्रूयन्ते । अद्यापि गुरुपूर्णिमायां गुरवस्तत्र सविधि पूज्यन्ते ।

अन्यत्वेऽपि संस्कृतविद्यालयच्छात्रेषु संस्कृतविद्वत्सु च तपस्या, गुरुशिष्यभावः, वस्तुतोऽकृत्रिमः स्वदेशप्रेमा, भारतीयसंस्कृतेरभिमानः, स्वधर्मपरायणता, कर्मनिष्ठता, आस्तिक्यबुद्धिः, देवभक्तिः, शुचिता, भारतीयशीलसदाचारानुवर्तित्वम्, विशेषतश्च देववाणीं प्रति अनन्यप्रेमभावना इत्यादयः, अन्यत्र अश्रुतचराः, नैके विशिष्टा गुणा दृश्यन्ते ।

नूनमत्र विषये संस्कृतविद्यालया:, स्वयमुपेक्षिता अपि प्रायेण जनतया राष्ट्रेण च, सांप्रतिकविश्वविद्यालयानां कृते उदाहरणमुपस्थापयितुमर्हन्ति।

एतद्दृष्ट्यैव तावत्पारम्परिकसंस्कृतशिक्षापद्धतेरतिमहत्त्वमुपयोगिता चेति पूर्वमवोचाम।

नूनमेतद्दृष्ट्या सांप्रतिकविश्वविद्यालयानां परिष्कार आमूलचूडमपेक्षितः।

भारतीयसंस्कृतेस्त्यागतपस्यासंयमप्रभृतिसात्त्विकभावनानां विश्वविद्यालयेषु सद्यः प्रतिष्ठापनायामेव वस्तुतो भारतस्य कल्याणं निहितम्।[1]

सांप्रतिकभारते पारम्परिकसंस्कृतशिक्षापद्धतेरिदम् एकं चित्रम्, अयम् एकः पक्षः। निश्चितं स संतोषावहः।

---

१. एतदभिप्रायेणैव विगतवर्षे (२८, २६, ३० जनवरी १९६०) प्रयागनगरे कुम्भपर्वणोऽवसरेऽखिलभारतीयसंस्कृतिसंमेलनस्य विशेषाधिवेशनेऽस्माभिरिदंप्रथमत्वेनोपस्थापितोऽयमस्मत्प्रस्तावः सर्वसम्मत्या स्वीकृत आसीत्—

## प्रस्तावः

सम्प्रति हमारे देश में शिक्षण संस्थाओं की, विशेषतः विश्वविद्यालयों की, जो दुःखद परिस्थिति देखी जा रही है, वह राष्ट्र के लिए एक महान् चिन्ताजनक समस्या बन गयी है। इस परिस्थिति का उत्तरदायित्व केवल छात्रों पर ही है—ऐसा नहीं कहा जा सकता। उसके लिए गुरु, शिष्य,

परं पक्षान्तरमप्यस्य विषयस्य विद्यते।

स्वयं पारम्परिकसंस्कृतशिक्षापद्धतेरेव संबन्धे ये प्रश्नाः तेषां विचार एवात्र प्रथमत्वेनावश्यकः। आत्मपरीक्षणं हि नाम सर्वस्याः

---

अधिकारीगण, विश्वविद्यालयों की शासन-व्यवस्था एवं वर्तमान शिक्षा-पद्धति, सब का ही उत्तरदायित्व प्रतीत होता है। इस कठिन समस्या के समाधान के लिए इस भारतीय संस्कृति सम्मेलन के मत में स्पष्टतः इस बात की आवश्यकता है कि प्राचीन भारतीय संस्कृति की परम्परा के अनुसार विश्वविद्यालयों को ऐसा नवीन रूप दिया जावे किः—

(क) उनमें मधुर सहज स्नेह तथा पारस्परिक कर्तव्य-भावना से युक्त गुरु-शिष्य-सम्बन्ध की पुनः स्थापना हो सके।

(ख) पाठ्यक्रमों में ऐसे अनिवार्य विषय रखे जायँ, जिनसे छात्रों में आवश्यक रूप से नैतिकता की भावना, ब्रह्मचर्य, श्रम तथा तप अर्थात् कष्ट-सहिष्णुता का आदर्श पुनः प्रतिष्ठित हो सके।

अध्यापक वर्ग में अतिमात्रा में आर्थिकलिप्सा यथा पदलिप्सा और तन्मूलक दलबन्दी की दुष्प्रवृत्ति के नियंत्रण के लिए इस बात की परम आवश्यकता है कि अध्यापकों की नियुक्तियों में अपेक्षित योग्यता एवं अनुभवों के साथ-साथ उनकी चारित्रिक शुद्धता तथा नैतिकता पर भी ध्यान दिया जाय। उच्चतम पदों की नियुक्तियों में तपस्या, त्याग तथा क्रमशः वर्द्धमान अपरिग्रह के जीवन को आवश्यक ठहराया जाय।

इसके लिए यह वांछनीय होगा कि विश्वविद्यालयों के वैतनिक पद दो प्रकार के हों। आयु की एक सीमा तक, जैसे पचपन वर्ष की अवस्था

सिद्धेर्मूलमित्यामनन्ति मनीषिणः। ततश्च तस्याः पद्धतेरेव प्रधान-प्रश्नान् आदाय कश्चिद्विचारः प्रस्तूयतेऽधस्तात्।

तस्यैतस्य विचारस्य

(१) उपयोगिताप्रदर्शनम,

(२) वर्तमानस्थितेरवेक्षणम्,

(३) ऐतिहासिकं सिंहावलोकनम्,

(४) कर्तव्यप्रतिपादनम्,

(५) उपसंहारश्च

इति पञ्चावयवाः।

---

तक, जब कि मनुष्य पर सामान्यतया गृहस्थी का उत्तरदायित्व रहता है, क्रमशः वेतन-वृद्धि ( आरोह ) का क्रम जारी रहे और तदनन्तर वेतन को पुरस्कार का रूप दिया जावे और वह क्रमशः अवरोह क्रम से घटता रहे और उसे प्राप्त करने की योग्यताओं में विद्या की विशिष्ट योग्यता के साथ-साथ त्याग, तपस्या और यथासम्भव अपरिग्रह की भावना को भी आवश्यक रूप से महत्त्व दिया जाय।

इससे शिक्षण-संस्थाओं के वातावरण में सात्त्विकता, कर्तव्य-निष्ठा और आदर्शवादिता की भावना का संचार होगा।

शिक्षा के क्षेत्र में इस सिद्धान्त की सफलता होने पर इसे अन्य क्षेत्रों में भी लागू किया जा सकता है।

प्रस्तावक—डा० मंगलदेव शास्त्री

अनुमोदक—श्री मौलिचन्द्र शर्मा

## भारतस्य सुप्रभातम्

नूनमभूतपूर्वोऽयं समयो भारतवर्षस्य दैर्घकालिक इतिहासे। सत्यं सुप्रभाता रजनी। चिरकालिकपराधीनतामहातमिस्रातमोऽपगमे भारतीयगगनमण्डले उदयाभिमुखस्य भारतीयाभ्युदयभानोः नूतन-नूतनाशाकिरणोद्भासि दिव्यं प्राभातिकं ज्योतिर्विशालम् आशाचक्र-वालम् आभासयद् नो मानसकलिकाः प्रबोधयदिवावलोक्यते।

अस्मिन् हि सुशोभने समये भारतीयानामस्माकं सोल्लासमनसां सहसेव मुखान्निःसरति—

सुप्रभातं विजयतां धियो यत्पुष्टिवर्धनम्।<br>
पथः सत्यस्य सातये॥

अथवा—

भारत्या भुवनेऽखिले पृथु यशस्तन्वद् बुधानां मनः-<br>
स्वाशावल्लरिकासुमानि विकचीकुर्वत्तमो वारयत्।<br>
नूत्नज्ञानरवेः प्रकाशकिरणैर्विस्तीर्यमाणं पुरो<br>
हृद्यं तत्खलु सुप्रभातमभितः संवर्धतां भारतम्॥

तदेतस्मिन् मनोऽभिरामे अभिनवजीवनस्फूर्तिप्रदे समये, अभिनवतामापन्न इव भारते, राष्ट्रस्य तत्तद्विभागेषु पुनर्निर्माणस्य अभिनवनिर्माणस्य वा चर्चायाः प्रसङ्गे, भारतस्यान्तरात्मन आधान-भूतायाः भारतीयसंस्कृतेश्च शरीररूपिण्याः सुरभारत्याः भूयः-समुत्थानस्य वार्त्तापि नूनं सर्वथा स्वाभाविकी।

तत्र देववाण्या भूयःसमुत्थानस्य सांप्रतं कुत आवश्यकतेति चेत् तदेवात्र समाधीयते—

( १ )

## अभिनवभारते संस्कृतस्योपयोगिता

तदत्र विशेषतो भारतस्य अभिनवनिर्माणार्थं सामान्यतो विश्वकल्याणार्थं चापि देववाण्या भूयःसमुत्थानस्य महत्युपयोगितेत्यस्माकं मतम्। तदथः प्रदर्श्यते।

तत्रैतत्संग्रहसूत्रं भवति—

**सांप्रदायिकसांमनस्यसंस्थापन-तत्तद्भाषागतसंघर्षापनोदन-भारतीयसंस्कृतिहार्दाविष्करण-शिक्षापद्धतिपरिष्कार-विश्वकल्याणानि प्रयोजनम्** —इति।

अपर आह—

अत्यल्पमिदमुच्यते। **ऐतिहासिकानुसन्धानं नूतनविज्ञानसाहाय्यं च प्रयोजनमित्यपि वक्तव्यम्।**

तच्चैतत्किंचिद् व्याख्यानमपेक्षते। तथा हि—

**(क) साम्प्रदायिकसांमनस्यसंस्थापनार्थमेव** तावत् संस्कृतस्य भूयःसमुत्थानमपेक्ष्यते।

नाविदितमेतत्कस्यापि यत् चिरकालप्ररूढाभ्यः संकीर्णसांप्रदायिकभावनाभ्यो महद्भयमस्माकं राष्ट्रस्य। तासामीदृशीनां दुरन्तानां

भावनानां प्रतीकारार्थं देववाण्या अभ्युत्थानं हि नूनमद्वितीयं साधनम्।

संस्कृतभाषा हि चिरादेव समानरूपेण समाश्रिता परिपुष्टा च विभिन्नैर्भारतीयैः संप्रदायैः। प्रायेण सर्वेषामपि शैवशाक्तजैनबौद्धादि-भारतीयसंप्रदायानां धार्मिकवाङ्मयस्याधाररूपा देववाणी। प्रायेण सर्वेषामपि भारतीयधर्माणामाचार्यैः संग्रथितानि ग्रन्थरत्नानि देव-वाण्याः साहित्यसमृद्धिं संपादयन्ति।

सर्वथा सत्यमेतद्—यथा सर्वे नदीनदाः समुद्रे संस्थितिं यान्ति, तथैव सर्वेऽपि भारतीय संप्रदाया भारतीयसंस्कृतौ समाश्रयं लभन्ते।

ततश्च निर्विवादं तत्तद्विभिन्नसंप्रदायेष्वन्तर्वर्त्तिनीमेकसूत्र-तामादधाना सांप्रदायिकसांमनस्यसंस्थापनस्य मुख्यतमं साधनं देववाणी।

(ख) तत्तद्भाषागतसंघर्षस्यापनोदनार्थमपि संस्कृतस्य भूयःसमुत्थानमावश्यकम्।

विभिन्नप्रदेशीयभाषागतसंघर्षेणाप्येका दुरूहा समस्या सांप्रतम-स्माकं राष्ट्रस्य। तत्तद्भाषाणां प्रश्नमादाय भारते प्रवर्धमाना वैमन-स्यभावना कस्य राष्ट्रहितैषिणो मनस्तापं न तनुते?

अस्याः कठिनसमस्यायाः समाधानमपि संस्कृतभाषायाः समा-श्रयेणैव सुतरां संपादयितुं शक्यते।

सर्वासामेव भारतीयार्यभाषाणां संस्कृतं जननी। अन्यासामपि सहस्रशः शब्दराशेः विचाराणां चानुदानेन पोषणकरणाद् हेतो-

धात्रीव सा वर्तते। निर्विवादं हि सा न केवलं राष्ट्रभाषाया हिन्द्या एव, किन्तु अन्यान्यभारतीयभाषाणामपि उपजीव्यभूता।

ततश्च न केवलं विभिन्नभाषाभाषिप्रदेशेषु परस्परं सांमनस्य-संस्थापनार्थमेव किन्तु तत्तत्प्रदेशीयभाषाणां सम्यगध्ययनार्थं पोषणार्थं चापि देववाणी नः शरणम्।

राष्ट्रभाषायास्तु भविष्यं विशेषतस्तस्यामायत्तमिति निर्विवादं विद्वांसो मन्यन्ते।

(ग) भारतीयसंस्कृतेर्हार्दस्य आविष्कारणार्थमपि संस्कृत-स्याभ्युत्थानमपेक्षितम्।

नितान्तमतिप्राचीना सांस्कृतिकी परम्परा भारतस्य। तस्य किमपि नूतनं निर्माणं तां सांस्कृतिकीं परम्परामाश्रित्यैव भवि-तुमर्हति।

ततश्च भारतीयसंस्कृतेर्यद् हार्दम् अन्तरभिप्रायो वा तस्या-विष्करणं नामास्माकं प्रथमं कर्तव्यम्। तच्च तस्या दीर्घपरम्पराया अध्ययनेनैव साध्यम्। तच्च प्रथमतः संस्कृतस्य समुत्थान-मपेक्षते।

संस्कृतं वाव भारतीयसंस्कृतेः शरीरमधिष्ठानं वा।

(घ) शिक्षापद्धतेः परिष्कारार्थमपि संस्कृतस्य भूयःसमु-त्थानमावश्यकम्।

कस्यापि अन्यराष्ट्रस्येव अभिनवभारतस्यापि निर्माणे अद्वि-तीयमनिवार्यं च साधनं तदीयशिक्षापद्धतिरित्यत्र न हि कस्यचिद् विवादः।

भारते सांप्रतं प्रचलितायाः शिक्षापद्धतेर्ये पूर्वोक्ता अन्ये च महान्तो दोषास्ते प्रतिदिनमस्मद्राष्ट्रनायकैस्तत्तन्मञ्चेभ्य उद्घोष्यन्ते। चिरकालिकवैदेशिकदास्यप्रभावाद् अभारतीयभावनाभावितत्वं हि तस्या मौलिको दोषः। तन्मूलका हि प्रायेण तस्याः सर्वेऽप्यपरे दोषाः। ततश्च तेषां प्रतीकारार्थमयमेवाभ्युपायो यद् भारतीयसंस्कृते-राधारेण तस्याः परिष्कारो नाम। भारतीयसंस्कृतिर्हि स्वभावत एव श्रम-तपः-संयम-सौम्यत्व-भ्रातृभावना-गुरुसपर्यानुशासनप्रभृति-पवित्रादर्शानां प्रतिपादिका सांप्रतिकशिक्षापद्धतेर्दोषाणां प्रतीकारस्य परमोऽभ्युपायः।

संस्कृतं वाव भारतीयसंस्कृतेः शरीरमधिष्ठानं वेति पूर्वमवोचाम। ततश्च सांप्रतिकशिक्षापद्धतेः परिष्कारार्थमपि संस्कृतस्य समुत्थानं सुतरां साहाय्यकृत्।

(ङ) विश्वकल्याणार्थमपि देववाण्या भूयःसमुत्थानस्य महती उपयोगिता।

मानवीयधर्मेणानर्थान्तररूपा भारतीयसंस्कृतिर्हि नूनं स्वरूपत एव सकललोककल्याणसाधनक्षमा।

पुमान् पुमांसं परि पातु विश्वतः।

(ऋग्० ६।७५।१४)

मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे।

(यजु० ३६।१८)

सर्वस्तरतु दुर्गाणि मा कश्चिद् दुःखभाग्भवेत्।

इत्येवं मानवीयकल्याणस्य विश्वसौहार्दस्य च भावनाभिरापूर्णा वै भारतीयसंस्कृतिर्जगतः कृते भारतस्यामरसंदेशो भवितुमर्हति। नूनं तदधीनमेव परित्राणं सांप्रतं समन्तात् खिन्नस्य जगतः।

एतद्दृष्ट्या हि संस्कृतसाहित्यं विश्वस्य साहित्यमिति वक्त शक्यते।

गङ्गाया 'गङ्गोत्तरी' (=गङ्गावतारस्थानम) इव भारतीयसंस्कृते-रुद्भवस्थानं वाव संस्कृतम्। तस्याः स्वरूपपरिज्ञानाय संस्कृत-वाङ्मयपरिशीलनमनिवार्यरूपेणोपयोगि।

ततश्च विश्वकल्याणदृष्ट्यापि देववाण्या भूयसी उपयोगिता।

(च) **ऐतिहासिकानुसन्धानमपि** संस्कृताभ्युत्थानस्यापरं प्रयोजनम्।

भारतवर्षस्येतिहासविषयकं धार्मिकसामाजिकराजनीतिकाद्यनु-सन्धानं संस्कृतज्ञानमन्तरेण असंभवि। तत्तद्विषयकसामग्री संस्कृत-वाङ्मये संस्कृतभाषायाः शिलालेखादिषु चैव प्रायेण समुपलभ्यते।

(छ) **नूतनविज्ञानसाहाय्यं** चापि तस्याभ्युत्थानस्य प्रयो-जनम्।

विदुषां नाविदितं यद् भाषाविज्ञान-पुराणविज्ञान-मतविज्ञानादि-नूतनविज्ञानानां जन्मनि विकासे च संस्कृतभाषायाः संस्कृतवाङ्-मयस्य च महानुपकारः सर्वैः स्वीक्रियते।

एतद्दृष्ट्यैव विशेषतः संस्कृतस्याध्ययनाध्यापनं पाश्चात्य-देशेष्वपि समाद्रियते।

तदेवं नैकदृष्ट्या अभिनवभारतेऽपि देववाण्या महत्त्वमुपयोगिता च।

तदत्र प्रसङ्गप्राप्तमेव देववाण्या अध्ययनाध्यापनयोः सांप्रतिक्या अवस्थायाः पर्यालोचनमिति तदेवानुस्त्रियते—

( २ )

# वर्तमानस्थितेरवेक्षणम्

येयं खलु वर्तमानकाले भारतवर्षे देववाण्याः प्रचलिता शिक्षा-पद्धतिः, आपाततः सा द्वौ पक्षाववगाहते। प्रथमं तावत्संस्कृतपाठ-शालादिषु तत्तत्संस्कृतपरीक्षापाठ्यक्रमानुसारेण प्रचलिता परिपाटी। द्वितीया या आधुनिकस्कूलकालेजादिषु प्रचलिता।

## तत्र द्वितीयपद्धतेर्विषये

नाद्य खलु बहु वक्तव्यमस्माकम्। स्कूलकालेजादिषु अद्य यावद् इंग्लिशभाषायाः प्राधान्येन सर्वथा गौणस्थानमेव संस्कृतस्य। नहि देववाण्याः प्रौढपाण्डित्यं, न चापि दुरूहप्राचीनग्रन्थानां विशेषज्ञता केनाप्यभिलभ्यते तां परिपाटीमनुसरता।

सत्यम्, एम० ए० परीक्षानन्तरं वैज्ञानिकविवेचनापद्धत्यनुसा-रेण उत्तराध्ययनस्य अनुसन्धानस्य चानुकूल्यं व्यवस्था च यत्र कुत्रचित समुपलभ्यते तस्यां परिपाट्याम्। नूनं तत् तस्याः परमं वैशिष्ट्यम्। परन्तु विरला एव केचिदध्ययनस्य तां कोटिमाटी-कन्ते। तेऽपि प्रायेण प्राचीनपरिपाटीमनु अधीयाना एव भवन्ति।

उपरिनिर्दिष्टकारणैरस्याः पद्धतेर्विषये केवलमेतावदेवास्माकं वक्तव्यं यत् सांप्रतं स्वतन्त्रे भारते तस्यामपि संस्कृताध्ययनाध्यापन-पद्धतौ अपेक्षितस्य समुत्कर्षस्य साधिकारविशेषज्ञतादृष्टेश्च आनयनार्थं परिष्कारोऽपेक्ष्यते ।

सत्यप्येवं, सर्वसाधारणजनतायां संस्कृतं प्रत्यनुरागस्य विवृद्धौ अस्या द्वितीयपद्धतेरपि विद्यते काचिदुपयोगितेति नैव विस्मरणीयम् ।

## पारम्परिकसंस्कृतशिक्षापद्धतिः

स्पष्टमेतद् यद् वास्तविकदृष्ट्या खलु पारम्परिकसंस्कृताध्ययनाध्यापनपद्धतेरेवाप्रतिमं महत्त्वम् । अतस्तामाश्रित्यैवास्माभिरधस्ताद् विशेषतो विचारः क्रियते ।

'प्रधाने हि कृतो यत्नः फलवान् भवति' इत्येष वै न्यायः ।

## तस्याः स्वरूपं गुणदोषपरीक्षणं च

देववाण्या वर्तमानकाले पाठशालादिषु प्रचलिता शिक्षापद्धतिर्नैव एकान्ततो नवीना, न चाप्यतिप्राचीनेत्यत्र विषये नैव विदुषां विवादः । वस्तुतस्तु राजनीतिकदास्यकालस्यान्धकारयुगे प्रचलिता पाठ्यपद्धतिरेव प्रायेण स्वेन रूपेणानुवर्तमाना, अंशमात्रेण रूपान्तरं प्रापिता वा, बृटिशशासनकालेऽपि नूतनपरीक्षाणां कृते प्रवर्त्तितासीत् ।

एवं च सति राजनीतिकदास्ययुगस्य दुष्प्रभावेण प्रभाविता सा नूनं तत्कृतदोषैर्विहीना भवेदिति नैव संभवति ।

तथापि विद्यत एव तस्या गुणपक्षोऽपि ।

एवं च तस्या वस्तुस्थितेरवेक्षणं सामान्येन गुणदोषविवेचनपुरस्सरमेव कर्त्तव्यमिति तदेव क्रियतेऽस्माभिः।

## तत्र गुणपक्ष एव तावद्विचार्यते

कस्यैतत् तिरोहितं यदस्माकं सुदीर्घे राजनीतिकपारतन्त्र्यकाले सर्वथा प्रतिकूलासु परिस्थितिषु कथंचिद् यत् संस्कृतपरम्परायाः संरक्षणमासीत् तत्खलु समस्तेऽपि भुवने कस्यापि वाङ्मयस्येतिहासेऽदृष्टचरम्।

तस्मिन् हि कठिनातिकठिने समये तपस्यां श्रद्धां देशभक्तिमेकान्तनिष्ठां विशेषतश्च देववाणीं प्रत्यनन्यप्रेमभावनां समाश्रितैर्भारतीयविद्वद्भिर्बाहुल्येन प्राचीनानेकदुरूहग्रन्थार्णवावारपारीणान् टीकोपटीकाप्लवान् विधाय कथमपि प्रौढपाण्डित्यपरम्परा संरक्षिता।

सैव प्रौढपाण्डित्यपरम्परा, प्रतिपाद्यविषयाणां दृष्ट्या संकुचितापि, विभिन्नभारतीयप्रान्तेषु प्रचलितसंस्कृतपरीक्षाप्रणाल्याः साहाय्येन कथंचिदद्यापि प्रचलति।

ततश्च संस्कृतपठनपाठनपरम्परायाः कथंचित्संरक्षणम्, पूर्वोक्तायाः टीकोपटीकागतप्रौढपाण्डित्यपरम्परायाः कथंचिन्निर्वाहश्च प्रचलितपाठ्यपद्धतेर्महनीयो महान् गुणः।

किञ्च, अद्यापि दिष्ट्या संस्कृतमासेतुहिमालयम् आपूर्वापरसमुद्रं च भारते परस्परव्यवहारसाधनं वर्त्तते। अद्यापि परःसहस्राश्छात्राः प्रतिवर्षं संस्कृतपरीक्षाणां कृते प्रयत्नपरा दृश्यन्ते। तदेतत्सर्वं देववाण्याः कृते वर्तमानपरीक्षाणामुपकारमेवोद्घोषयति।

सत्यप्येतस्मिन् महति गुणे, नैकेषां दोषाणां त्रुटीनां च हेतोर्वर्तमाना संस्कृतशिक्षापद्धतिर्नूनं परिष्कारमर्हति ।

## ते दोषास्त्रुटयश्च समासेनैवाधो निर्दिश्यन्ते ·

(१) भारतेतिहासस्य स्वतन्त्रतायाः स्वर्णयुगे निर्मितानाम् आकरग्रन्थानाम् आर्षग्रन्थानाम् अन्येषां च प्रमेयपदार्थबहुलग्रन्थ-रत्नानां प्रायेणोपेक्षा ।

अत एव कति नामाद्यत्वे महान्तोऽपि विद्वांसोऽतिविस्तृतेन वैदिकेन वाङ्मयेन, अर्थशास्त्र-निरुक्त-महाभाष्य-वाक्यपदी-याद्यनेकग्रन्थरत्नैश्च सम्यक् परिचिता दृश्यन्ते ?

(२) व्यापकपाण्डित्यस्य स्थाने विभिन्नकारणवशाद् एकदेशि-पाण्डित्य एव प्रायेण पक्षपातः ।

पदवाक्यप्रमाणानां पारगा नैकशास्त्राभिज्ञाः पारोवर्यविदो विद्वां-सोऽद्यत्वे केवलं नामशेषतां गता इत्यत्रैतदेव प्रधानं कारणम् ।

गणरत्नमहोदधिकारो वर्धमानोऽष्टौ व्याकरणानि सम्यगभ्यस्य स्वग्रन्थं निर्मितवानिति को नामाद्यत्वे श्रद्धास्यति ?

सुप्रसिद्धकाव्यव्याख्याकर्तुर्मल्लिनाथसूरेः

वाणीं काणभुजीमजीगणदवाशासीच्च वैयासकी-
मन्तस्तन्त्रमरंस्त पन्नगगवीगुम्फेषु चाजागरीत् ।
वाचामाचकलद्रहस्यमखिलं यश्चाक्षपादस्फुरां
लोकेऽभूद्यदुपज्ञमेव विदुषां सौजन्यजन्यं यशः ॥

( किरातार्जुनीयस्य घण्टापथव्याख्यायाम् )

इति पद्यम्, मनुस्मृतिव्याख्याकृतः कुल्लूकभट्टस्य—

मीमांसे बहुसेवितासि सुहृदस्तर्काः समस्ताः स्थ मे
वेदान्ताः परमात्मबोधगुरवो यूयं मयोपासिताः।
जाता व्याकरणानि बालसखिता युष्माभिरभ्यर्थये
प्राप्तोऽयं समयो मनूक्तविवृतौ साहाय्यमालम्ब्यताम् ॥

( मन्वर्थमुक्तावल्याम् )

इति पद्यं चाप्यत्र विषये अस्माकं दृष्टिपातमर्हति।

उक्तप्रवृत्तिमूलक एव हन्त ! सषडङ्गवेदाध्ययनप्रवृत्तेश्चिरकालादेव विलोपः प्रवृत्ते।

(३) विवेचनाबुद्धेरनुदयः, वस्तुतत्त्वज्ञानस्योपेक्षा च।

कस्यैतत्तिरोहितं यदद्यत्वे हि संस्कृतशिक्षापद्धतेरयमेको महान् दोषो यच्छात्रेषु कस्मिन्नपि विषये, विवेचनाबुद्धेस्तु का कथा, स्वाभाविकविशिष्टजिज्ञासाबुद्धेरप्यनुदय एव।

अवैज्ञानिकी शिक्षणपद्धतिः, प्रतिपाद्यविषयमनवबुद्ध्यैवातिमात्रं प्रवृद्धा ग्रन्थानां कण्ठस्थीकरणपरिपाटी च ( अद्यत्वे प्रायेण परीक्षार्थिनां सहचरी ) नूनमत्र मुख्यं कारणम्।

संस्कृतविद्वत्सु प्रायेण अनुसन्धानप्रवृत्तेरभावस्याप्येतदेव कारणम्।

(४) सामान्यव्यवहारोपयोगिनां गणितभूगोलेतिहासराजशास्त्रपौरशास्त्रलोकभाषादिविषयाणां ज्ञानस्योपेक्षा।

(५) जनताया जीवनेन लोकस्य राष्ट्रस्य च प्रगत्या संबद्धानां वार्तादण्डनीत्यादिविषयाणां पाठ्यक्रमेऽसन्निवेशः।

(६) समन्वयात्मकव्यापकसांस्कृतिकदृष्टेरभावेन साम्प्रदायिक-संकीर्णभावनायाः तत्तज्जातिगतसंकीर्णभावनायाश्च वातावरणम्, भारतीयसंस्कृतेः समन्वयात्मकबुद्धेरभावो वा।

(७) स्वाध्याय ( स्वयमध्ययन ) प्रवृत्तेरनुद्‌बोधनम्।

चिराय लुप्तेषु अथानुसंधानेन प्राकाश्यमुपगतेषु **अर्थशास्त्र**-सदृशेष्वपि ग्रन्थेषु बाहुल्येन दृश्यमानं विदुषां लोकविदितमाश्चर्यकारि अनौत्सुक्यमेतस्याः प्रवृत्तेरेव निदर्शनम्।

एतैरेवंजातीयकैरन्यैश्च विद्याया ज्ञानस्य च प्रगतेर्विरोधिभिर्दोषैर्युक्ता बाहुल्येन सांप्रतिकी संस्कृतशिक्षापद्धतिस्तत्तद्विद्यालयेष्विति को नाम न स्वीकरिष्यति?

अस्माकं संस्कृतज्ञानामसन्तोषप्रदायाः सांप्रतिक्याः परिस्थितेर्नूनं सैव कारणम्।

## संस्कृतशिक्षापद्धतेः परिष्कारः

तदेवं नैकदृष्ट्या अभिनवभारतस्य निर्माणार्थं जगतः कल्याणार्थं चापेक्षिताया देववाण्याः सांप्रतिकशिक्षापद्धतेः परिष्कारः सुतरामपेक्षित इति स्पष्टं प्रतिभाति।

स परिष्कारः कीदृशो भवेदित्येष वै आवश्यकः प्रश्नः।

परं देववाण्या अतिप्राचीनायाः परम्पराया अनुसन्धानमन्तरेण न हि तस्याः सांप्रतं प्रचलितायाः शिक्षापद्धतेः स्वभावो वस्तुतोऽवगन्तुं शक्यते, न चापि तस्यां सांप्रतिकीनामवस्थानामावश्यकतानां

चानुरूप्येण चिकीर्ष्यमाणस्य परिष्कारस्य द्विप्रकारौ निर्धारयितुं शक्येते।

ततश्च तस्या ऐतिहासिकस्य वृत्तस्य परम्परायाश्च किंचित् सिंहावलोकनं सर्वथापेक्ष्यत इति तदेवोपक्रम्यतेऽस्माभिः।

( ३ )

# ऐतिहासिकं सिंहावलोकनम्

देववाण्याः खलु ऐतिहासिकस्य वृत्तस्य कालत्रयेण विभागः कर्तुं शक्यते—प्रारम्भकालः, विस्तारकालः, तथा संकोचस्य ह्रासस्य वा काल इति।

## प्रथमः कालः

सामान्यदृष्ट्या वैदिकेन वाङ्मयेन सामकालिक एवैष कालः।

प्रायेणास्मिन्नेव काले भारतीयसंस्कृतेरार्यसभ्यतायाश्च प्रथमो विकासः प्रस्फोटनं च जातम्। अस्माकं सामाजिकधर्माणां जीवनस्य मर्यादानामादर्शानां च स्थापनाया अयमेव कालः।

भारतीयसंस्कृतेर्जीवनस्रोतसां श्रुतीनामेष एव कालः। संस्कृतस्य देवभाषात्वमेतत्कालकृतमेव[१]।

---

१ तु० "मन्त्रः कल्पो ब्राह्मणं चतुर्थी व्यावहारिकीति याज्ञिकाः।", "तस्माद् ब्राह्मणा उभयीं वाचं वदन्ति या च देवानां या च मनुष्याणाम्" (निरुक्ते १३।९)। किञ्च। "संस्कृतं नाम दैवी वागन्वाख्याता महर्षिभिः।"

अत एव वैदिकवाङ्मयस्याद्वितीयं महत्त्वं सर्वस्मिन्नपि भारतीये वाङ्मये। नूनं तस्योपेक्षा आत्मघातसमास्माकं भारतीयानाम्।

## द्वितीयः कालः

आरम्भकालादनन्तरं देववाण्या अतिमहतो विस्तरस्य कालोऽयं द्वितीयः कस्य नाम नाश्चर्यस्य विषयः।

भारतीयसंस्कृतेः समन्वयात्मकस्वरूपप्रतिपादनपरस्य पुराण-रामायणमहाभारतादेर्विस्तृतस्य वाङ्मयस्य, जगद्विस्मयकराणां पाणिन्यादिमुनिरचितसूत्राणाम्, भासकालिदासादिनिर्मितस्य हृदय-हारिणो गद्यपद्यात्मकस्य काव्यस्य, यावज्जीवनव्यापारमनु पुरुषार्थच-तुष्टयप्रतिपादिकानां वार्त्तादण्डनीत्यादिविद्यानाम्, तत्तत्कलासाहि-त्यस्य च विकासोऽस्मिन्नेव काले समभवत्।

तत्तद्विषयेषु आकरग्रन्थानां रचनायाः, तत्तद्रूपेण परम्परागताया भारतीयसंस्कृतेः समन्वयस्य, तस्या बौद्धधर्मादिरूपेण देशदेशान्तरेषु विस्तारस्य चाप्ययमेव कालः।

किं बहुना, राष्ट्रस्य जीवनस्य च सर्वेषामप्यङ्गाना-मानुकूल्येन देववाण्या विभिन्नविभागेषु सुमहतो वाङ्मयस्य सृष्टिरस्मिन्नेव कालेऽजायत।

प्रायेण स्वोपज्ञविचारविचारकाणामेवैष कालो भार-तस्येतिहासे।

बौद्धादिधर्माणामपेक्षया वै स्वर्णयुगमेतद् भारतीयेतिहासस्य!

सर्वमप्येतत् चेतश्चमत्कारि वृत्तं देववाण्यास्तत्काले सर्वतो दिशं स्वाराज्यभावनामनुभवतो भारतस्य सर्वथा स्वाभाविकमेवासीत् ।

## तृतीयः कालः

भारतस्येतिहासे प्रायेण राजनीतिकदास्यस्यायं कालः । अस्मिन् हि काले जातीयजीवने सर्वविधस्य संकोचस्य ह्रासस्य संकीर्णतायाश्च साम्राज्यं सर्वतो दिशमवर्तत ।

**जनताया राष्ट्रस्य च जीवनेन संबद्धानां वार्तादण्डनीतिशिल्पशास्त्रादिनैकविद्याविभागानां विलोपः संकोचो वा, सांप्रदायिकः शास्त्रीयो विवादश्च नूनमेतस्य कालस्य प्रदानम् ।**

नैवात्र कश्चिदाश्चर्यस्यावसरः ।

**स्वराज्यभानावस्तंगते राष्ट्रियप्रतिभाकमलानां वै संकोचः स्वाभाविको भवति ।**

नूनमेतदन्धकारयुगं भारतीयसंस्कृतेर्देववाण्या वाङ्मयस्य च ।

## वर्तमानकालस्य प्रारम्भः

उपरिनिर्दिष्टस्य तृतीयकालस्यान्धकारयुगे प्रचलिता पाठ्यपद्धतिरेव प्रायेणाद्यत्वे प्रचलितानां पारम्परिकसंस्कृतपरीक्षाणामाधार इति पूर्वमवोचाम ।

१६३२ ई० वर्षपर्यन्तं, यदास्माभिर्वाराणसेयराजकीयसंस्कृत-

परीक्षायां कार्यनिर्वाहक ( =रजिस्ट्रार )पदस्योत्तरदायित्वं गृहीतम्, प्रायेण तादृशी एव दशासीत् तत्रत्यपरीक्षायां पाठ्य-पद्धतेः।

भारतवर्षस्य अन्यप्रान्तीयसंस्कृतपरीक्षाणां पाठ्यपद्धतेरपि तदा प्रायेण तादृशी एव स्थितिरवर्तत।

क्रमशस्तदास्माभिरेव वाराणस्यां तस्याः पद्धतेः, पूर्वोक्तदोषा-णामपाकरणदृष्ट्या प्रगतिभावनायाः प्रवेशबुद्ध्या च, परिष्कारार्थ-मिदंप्रथमत्वेन प्रयत्न आरब्धः।

प्रगतिविरोधिनां स्वाभाविके घोरविरोधे सत्यपि शासनस्य साहा-य्येन तस्मिन् प्रत्यने आशातीता सफलता समधिगतास्माभिः।

महतः संतोषस्यायं विषयो यत्तस्या एव परिष्कृतायाः पद्धते-र्मौलिकसिद्धान्तानामनुसरणार्थं प्रागेव प्रयत्न आरब्धो दृश्यते तत्तत्प्रादेशिकसंस्कृतपरीक्षाणां पाठ्यपद्धतिसंबन्धे समस्तेऽपि भारते।

भारतीयसंस्कृतायोगेनापि स्वकीयप्रस्तावेषु बहुतरं सैवा-स्माकं दिगनुसृता।

केन्द्रीयसंस्कृतमण्डलस्यापि प्रयत्नास्तस्यामेव दिशि वर्तन्ते।

वाराणसेयराजकीयसंस्कृतपरीक्षाणां पाठ्यपद्धतेः परिष्कार-विषये प्राप्तसफलतयैव सोत्साहैरस्माभिः सर्वतः प्रथमं संस्कृत-विश्वविद्यालयस्यैकस्य स्थापनायाः प्रस्ताव उपस्थापित आसीदुत्तर-प्रदेशस्याधिकारिणां पुरः १९४७ ई० वत्सरस्य अगस्तमासे। तद-

नन्तरं च विशेषाधिकारि( O. S. D. )रूपेण नियुक्तैरस्माभिः **वाराणसेयराजकीयसंस्कृतमहाविद्यालयस्य संस्कृतविश्वविद्यालय**रूपत्वापादनविषये योजनाप्येका संपूर्णा प्रस्तुतासीत् तेषामेवाधिकारिणां पुरस्तात्।

मूलतः सैव योजना १६५८ ई० वत्सरे वस्तुतो **वाराणसेयसंस्कृतविश्वविद्यालय**रूपेण परिणता जातेति महतः संतोषस्य विषयः।

तस्मादेव विश्वविद्यालयात् प्रेरणां समधिगत्य सांप्रतं भारते तत्तत्प्रदेशेषु संस्कृतविश्वविद्यालयानां स्थापनार्थे प्रयत्नः क्रियमाणो दृश्यते। प्रागेव स्थापित एको विश्वविद्यालयो विहार-प्रदेशे।

## संस्कृतविश्वविद्यालयानां स्वरूपम्

प्रसङ्गेऽस्मिन् संस्कृतविश्वविद्यालयानां स्वरूपं कीदृशं भवेदित्यस्मिन् विषये कश्चिद् विचार आवश्यकः प्रतीयते।

नात्र सन्देहो यत् कस्यापि संस्कृतविश्वविद्यालयस्य स्थापनाया वार्तापि श्रूयमाणा संस्कृतज्ञानामस्माकं कञ्चिदवर्णनीयमन्तस्तोषं जनयति। तच्चैतत्सर्वथा स्वाभाविकमभिनन्दनीयं च।

सत्यप्येवम्, संस्कृतज्ञानां वास्तविकहितदृष्ट्यैव, प्रश्नस्यास्य गम्भीरचिन्तनस्यावश्यकता विद्यते।

प्रश्नद्वयमत्र तावद् विचारणीयम्—

प्रथमम्, किं विशुद्धसंस्कृतविश्वविद्यालये तादृशमतिशयेनोदारं

सर्वविधज्ञानप्रगतिसमुन्मुखं च वातावरणं भवितुमर्हति यादृशं वस्तुतो विश्वविद्यालयार्थमपेक्ष्यते ? तादृशे हि वातावरणे कस्यापि विश्वविद्यालयस्य महत्त्वं सन्निविष्टं भवतीति मन्यन्ते विद्वांसः।

द्वितीयप्रश्नस्ततोऽप्यधिकमावश्यकः। स चायम्—

भारतीयेतिहासस्य मध्ययुगात्परम्परयाप्राप्तानां नानाविधसंकोच-भावनानामद्यापि प्राधान्यं विद्यते संस्कृतविद्यालयेषु, राजकीयेष्वराज-कीयेषु च। अत एव लोकप्रसिद्धं प्रगतिपराङ्मुखं मध्यकालीनं वातावरणं तत्र दृश्यते प्रायेण।

ततश्च स्वाभाविक एष प्रश्नः। किं विशुद्धसंस्कृतविश्वविद्यालयो **वास्तविकदृष्ट्या** संस्कृतज्ञानां हितावहो भवितुमर्हति ? अर्हति चेत्, कथम् ? कैश्चोपायैः ?

**अद्यत्वे प्रगत्युन्मुखताया उदारबुद्धेश्च सर्वतः प्रथम-मपेक्षा संस्कृतज्ञेषु, न केवलं राष्ट्रस्य कल्याणार्थमेव, किन्तु स्वयं तेषामेव सर्वक्षेत्रेषु समुन्नत्यर्थमपि।**

ज्ञानस्य सीमाया बन्धनं ज्ञानस्य विकासश्चेति विप्रतिषिद्धम्।

सूर्यप्रकाशावरोधः पादपानामिव, विद्याप्रकाशावरोधो बुद्धीनां हितावहो न भवति।

देवानाम् **'आजिधावनम्'** श्रुतिषु[१] श्रूयते। वस्तुतो मानवजीवनमेवेदमाजिधावनम्। तत्र हि आजिगीषुभिरसंकीर्णं सर्वतो विस्तृतं क्षेत्रमपेक्ष्यते।

---

१. तु० शतपथब्राह्मणे ५।१।४

तादृश एव विश्वविद्यालयः संस्कृतज्ञानां हितावहो भवितुमर्हति।

सत्यप्येवम् , संस्कृतविश्वविद्यालयेषु अनुदारायाः प्रतिगामिविचारधारायाः प्रवृत्तेः प्राधान्यं चेद् भवति, नूनं तेषां भविष्यमन्धकारमयमिति मन्तव्यम् ।

तदेवं पारम्परिकसंस्कृतपठनपाठनपद्धतेर्विषय **ऐतिहासिकं सिंहावलोकनं** तस्याः **सांप्रतिकप्रवृत्तीनां च विहङ्गमावेक्षणं** विधाय, तत्र यदस्माकं कर्तव्यं तत्प्रतिपादनमेव प्रसङ्गप्राप्तमवशिष्यते, इति तदेवानुसरामः ।

( ४ )

## संस्कृतज्ञानां सांप्रतिकी स्थितिः कर्तव्यं च

आसीत्सोऽपि समयो भारते यदा खलु जीवनयात्रायाः प्रत्येकविभागे देववाण्या एवाप्रतिहतं साम्राज्यं सुस्थितमवर्त्तत ।

सैनापत्यं च राज्यं च दण्डनेतृत्वमेव च ।
सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥
(मनु० १२।१००)

इत्यादिप्रमाणैरयमर्थः स्पष्टं प्रतीयते ।

परं हन्त ! कालवशात्सर्वं तद्विपर्यस्तम् ।

सांप्रतिकजगति जीवनस्य यात्रायां राष्ट्रस्य वा प्रगतौ या खलु देववाण्याः संस्कृतज्ञानां वा स्थितिः कस्य सा न विदिता ? नहि देववाण्याः कश्चिदुपयोगः सामान्यलोकव्यवहारे, नापि काचिद्

विशेषापेक्षा संस्कृतज्ञानां राष्ट्रस्य विभिन्नविभागेषु। ततश्च उपेक्षिता इव सांप्रतिकजगति, कथं कथमपि स्वजीवननिर्वाहं कुर्वाणाः, संस्कृतज्ञाः कथन्नु कंचिदपि सन्तोषमनुभवितुमर्हन्ति ?

नात्र वैमत्यं यत्संस्कृतज्ञाः सांप्रतं नूनमात्मनोऽवमाननारोगेणाक्रान्ता इव, किंकर्तव्यविमूढा इव, केवलं साधारणातिसाधारणपदानां प्राप्त्यर्थमेव प्रयत्नपरा दृश्यन्ते। संस्कृतज्ञानेन सह लौकिकोन्नतेः कश्चित् प्रातिस्विको विरोधः, अत एव लौकिकोन्नतिदृष्ट्या संस्कृतज्ञानोपार्जनं कश्चिदपराध इतीव तेषामान्तरो विश्वासः प्रतीयते !

'संस्कृतज्ञाः सन्तोऽपि वयम्' इत्यस्य स्थाने **'संस्कृतज्ञत्वकारणादेव वयम्' राष्ट्रस्य तत्तद्विभागेषु न केवलं कार्यकर्तार एव, किन्तु अध्यक्षा अपि, संचालका अपि, नेतारोऽपि, तत्तद्राज्यानां मन्त्रिणोऽपि, राज्यपाला अपि, राजदूता अपि भवितुमर्हाः**, इत्येष विचारस्तु तेषां मनःसु प्रायेण स्थानमेव न लभते।

नूनमेष तेषामात्मपरीक्षणस्यावसरः। अस्या अवस्थाया उत्तरदायित्वं प्रथमतस्तेषामेवोपरि। नहि लोकोऽत्र दोषभाक्।

क्षणं तावदवधानेन चिन्तनीयम्। या खलु आ स्वराज्यप्राप्तेः राष्ट्रस्य सर्वतो दिशं प्रगतिरुपलभ्यते तत्र कः कियान् वा सहयोगः संस्कृतज्ञानाम् ? आस्तां तावत्सामाजिक्यादिसमस्यानां वार्ता। वर्तते महती राष्ट्रभाषानिर्माणस्यापि समस्या भारते। द्वादश वर्षाणि यावत् सहस्रशो व्याकरणस्याध्येतृभिस्तत्र यावदुपकृतं तन्नाविदितं कस्यापि !

तथा विचार एवात्र विषये संस्कृतज्ञानां स्थितेः पठनपाठनपद्धते-र्मनोवृत्तेश्च स्वरूपं नः समक्षं साक्षादुपस्थापयितुमलम् ।

नूनमखिलमेतद् वृत्तं संस्कृतज्ञानां लोकप्रगतेर्लोकावस्थितेश्चा-परिज्ञानमूलकम् ।

तत्रैतस्यामवस्थायां संस्कृतज्ञानां यत्कर्तव्यं तत्सुतरां स्पष्टम् । सर्वतः प्रथमं तैः, सांप्रतिकशिक्षादीक्षितैः समान-मेव, राष्ट्रस्य सर्वतो दिशं जायमानायां प्रगतौ सहयोगदा-नस्य सर्वेषूत्कृष्टविभागेषु प्रवेशस्य च योग्यता संपादनीया ।

संस्कृतज्ञा असामयिकाः, अत एव सांप्रतिकविश्व-विद्यालयीयशिक्षितैः समानं न सर्वत्र संमानं प्रवेशं वा लब्धुं योग्या इत्येषोऽपवादस्तैः समूलघातं हन्तव्यः ।

तत्रैतत्सर्वं कथमिव संपादयितुं शक्यत इत्यत्र विषये नैव विद्यते कस्याश्चिद् द्वेधा प्रतिपत्तेरवकाशः । नूनं देववाण्याः शिक्षा-पद्धतेः प्रगत्युन्मुखः परिष्कार एव तस्याभ्युपाय इत्यत्र नैव कस्यापि सन्देहस्य विवादस्य वावसरो विद्यते ।

तस्यैव सर्वथापेक्षितस्य परिष्कारस्य मौलिकाः सिद्धान्ताः, लक्षशः संस्कृतच्छात्राणां शतशश्चाध्यापकानां विद्यालयानां च स्वकीयस्यानुभवस्याधारेण, अधः संक्षेपेणैव प्रतिपाद्यन्ते-ऽस्माभिः ।

# संस्कृतशिक्षापद्धतेः परिष्कारस्य मौलिकाः सिद्धान्ताः

**(१) सामान्यव्यवहारोपयोगिनां गणितभूगोलेतिहाससामान्यविज्ञानादिविषयाणां ज्ञानम् ।**

तादृशं सामान्यज्ञानं हि, न केवलं छात्राणां यथायथं मनोविकासार्थमेव, न केवलमद्यत्वे सर्वविधाया ज्ञानविज्ञानयोः समुन्नतेराधाररूपत्वेन लोकप्रगतेरवबोधनार्थमेव, किन्तु स्वकीयजीवनयात्रायाः सौकर्यार्थमप्यावश्यकम् ।

**(२) प्रौढपाण्डित्यस्य संरक्षणेन सहैव विवेचनाशक्तेरप्युपबृंहणम् ।**

तत्तच्छास्त्रेषु परम्पराप्राप्तं प्रौढपाण्डित्यं नूनमस्माकं गर्वस्य गौरवस्य च विषयः। अत एव तस्य संरक्षणमस्माकं प्रथमं कर्तव्यम् ।

परन्तु तदेव केवलं सांप्रतिकसमस्यानां समाधानाय नैव पर्याप्तम् । अर्थशास्त्रेतिहासराजनीतिप्रभृतिविषयेष्वपि, नूतनेष्वनूतनेषु च, तादृशमेव, ततोऽप्यधिकं वा, प्रौढपाण्डित्यमद्यत्वेऽपेक्ष्यते ।

अत्रेदमप्यवधेयं यत्प्रौढपाण्डित्यं हि प्राधान्येन विवेचनाबुद्धिमपेक्षते । तां विना हि तत् प्रायेण आहोपुरुषिकारूपे प्रौढिवादे, वस्तुतत्त्वपरीक्षणप्रवृत्तिविरोधिन्यामत्यन्तं शब्द-

प्रमाणपरतायाम्, सर्वज्ञानोन्नतिविरोधिन्यां विचारसंकीर्णतायामेव वा पर्यवस्यति।

ततश्च प्रौढपाण्डित्यं वास्तविकीं पुष्टिं फलेग्रहितां चाश्नुवीतेति संस्कृतशिक्षापद्धतौ सर्वज्ञानसमृद्धेर्जननीरूपाया विवेचनाशक्तेरुपबृंहणस्याप्यतीवावश्यकता।

## (३) अनुसन्धानप्रवृत्तेरुद्बोधनम्।

नैतदविदितं विदुषां यत्सांप्रतिकजगति येयमाश्चर्यमयी चेतश्चमत्कारिणी समुन्नतिरभितो दृश्यते सा खलु ज्ञानविज्ञानयोर्विभिन्नविभागेषु निरन्तरमभियोगभाजां विदुषामनुसन्धानस्यैव फलम्।

अत एवानुसन्धानप्रवृत्तेः प्रोत्साहनार्थं सर्वेषून्नतेषु राष्ट्रेषु प्रतिवर्षमधिकाधिको धनव्ययः क्रियमाणः श्रूयते।

संस्कृतज्ञेष्वपि तदपेक्ष्यते सुतराम्।

परं खेदावहमेतद् यत्प्राचीनपरिपाटीमाश्रित्य संस्कृतपठनपाठनपरम्पराया निर्वाहकाः संस्कृतज्ञा विद्वांसः, स्वकीयविषयाणां विशेषज्ञाः सन्तोऽपि, अद्य यावदस्मिन्ननुसंधानकार्ये न केवलं प्रायेणोदासीना एव, किन्तु बाहुल्येनापरिचिता अपि एतस्य प्रक्रियया मौलिकसिद्धान्तैश्च।

ततश्च संस्कृतस्य नूतनशिक्षापद्धतावनुसन्धानप्रवृत्तेरुद्बोधनमपि मुख्यं स्थानं लब्धुमर्हति।

## (४) विद्यायास्तत्तद्विषयेषु नवीनोन्नतेरात्मसात्करणम्।

भारतस्य दास्यकाले सर्वाप्यस्माकं प्रगतिरवरुद्धासीत्। संस्कृतवाङ्-

मयमप्यस्याः प्रवृत्तेर्नापवादः। गणितज्यौतिषादिविषयेषु या पुनः सांप्रतिकी समुन्नतिः सा केन न श्रुता भवेत्। एतादृशी एव परिस्थितिरितिहासराजशास्त्रभाषाविज्ञानादिविषयाणामवस्ते।

ततश्चैतादृशेषु विषयेषु नवीनोन्नत्या संस्कृतज्ञा अपि परिचिता भवेयुरिति क्रियतामेव यत्नः।

को नु आत्मनो हितमाकाङ्क्षन् विद्यायाः समुन्नतावन्तरायो भवितुमर्हति?

## (५) समन्वयात्मकभारतीयसंस्कृतेर्भावना।

अयमेवार्थः 'सांप्रदायिकासहिष्णुताया निराकरणम्' अथवा 'सांप्रदायिकसमभावना' इत्यादिप्रकारैरपि वर्णयितुं शक्यते।

सैषा भावनास्माकं राष्ट्रस्येव, संस्कृतविद्यास्थानानां कृतेऽपि अतितरां मौलिकीमपरिहार्यां चावश्यकतां बिभर्ति। तद्विषये कीदृशोऽपि संकोचो न केवलमात्मवञ्चनैव, किन्तु राष्ट्रभ्रंशकरो महानपराधोऽपि।

## (६) तत्त्वज्ञानत्यनपेक्षिणी यावद्भारतीया दृष्टिः।

उपरिष्टात्प्रतिपादितेन सिद्धान्तेन प्रायेण गतार्थमप्येतत् प्रपञ्चार्थमेवोक्तं मन्तव्यम्।

सांप्रदायिकसंकोच इव तत्त्वज्ञानविगतः संकोचोऽपि देववाण्याः समुन्नतेरत्यन्तं बाधक इति कस्य तिरोहितम्। सोऽयं सत्यं न केवलं देववाण्या एव, किन्तु भारतराष्ट्रस्यापि मूले कुठाराघातः।

सुप्रसिद्धेषु 'ऑक्सफोर्ड' विश्वविद्यालयादिषु पृथिव्याः कस्यापि देशस्य कोऽपि च्छात्रः सस्वागतं प्रवेशमाप्तुमर्हति। विशेषतोऽत्रैव तेषामान्ताराष्ट्रिकं महत्त्वम्।

ततोऽस्माकं संस्कृतविद्यालयमहाविद्यालयादिषु . राजकीयेष्व-राजकीयेषु वा, कीदृशोऽपि सांप्रदायिकस्तत्तज्जातिगतो वा संकोच उपलभ्यमानो महान्तं क्लेशमात्मलज्जां चास्माकं जनयति।

**त एते मौलिकाः सिद्धान्ताः संस्कृतशिक्षापद्धतेः सांप्रतिकस्य परिष्कारस्य।**

त एव सिद्धान्ताः **पञ्चसूत्र्या** एवं निर्देष्टु शक्यन्ते—

(१) प्रौढपाण्डित्यपरम्परायाः संरक्षणम्।

(२) विद्यायास्तत्तद्विषयेषु नवीनोन्नतेरात्मसात्करणम्।

(३) अनुसन्धानेन विलुप्तप्राचीनशास्त्रादीनां समुद्धारो ज्ञानस्य नूतनः समुत्कर्षश्च।

(४) सांप्रदायिकसमभावना।

(५) तत्तज्जातिमूलकं कंचित्संकोचं विनैव यावद्भारतीयः प्रचारः प्रसारश्च।

एतान्येव संस्कृतज्ञानां कृते **'पञ्च शीलानि'** इति वर्णयितुं शक्यन्ते।

किं बहुना, योगे यमनियमादीनाम्, वेदान्ते शमदमादीनाम्, प्रासादस्य निर्माणे मूलभित्तेः, जीवने च ब्रह्मचर्याश्रमस्य यथापेक्षा, तथैव संस्कृतशिक्षायाः परिष्कारस्य साफल्यार्थमेत आधाराः अपेक्षिताः।

## उपसंहारः

तदेवं तत्तद्दृष्टीरवलम्ब्य संस्कृतशिक्षायाः, विशेषतश्च पारम्परिकसंस्कृतशिक्षापद्धतेः, विषयः संक्षेपतः समुपस्थापितोऽस्माभिरत्रभवतां पुरस्तात्। तद्विषये सांप्रतिक्यः समस्याः, तासां समाधानं, कर्तव्यं चापि यथामति निर्दिष्टम्।

उपसंहारे केवलमेतावदेव वक्तव्यं यत् चिरकालिकदास्यादनन्तरमद्य भारतं स्वतन्त्रमिति भारतवासिनां महत्सौभाग्यम्।

सोऽयं स्वतन्त्रभारतस्य अभिनवनिर्माणस्य कालः।

**सौम्याः स्नातकाः !**

तत्रैवस्मिन्नभिनवनिर्माणे अस्माकमपि संस्कृतज्ञानां यत्कर्तव्यं तन्नूनं नाविदितं भवताम्।

**'भारतं भारती भारतीयसंस्कृतिः'** इत्येष वै अस्माकमाघोषः।

भारतीयसंस्कृतेर् महत आदर्शान् पुरस्कृत्यैव भारतस्य नूतनं निर्माणमस्माकमभिमतम्।

तत्रैव संस्कृतस्य महती उपयोगिता महत्त्वं च। **संस्कृतज्ञानां च तत्र स्वाभाविकं नेतृत्वमर्यादापन्नम्।**

तद्विषये च नहि कथञ्चिदप्यस्माकं निराशाया अवसादस्य वा अवसरः।

नूनं स समयः पुरस्तात् समुपस्थित इव दृश्यते यदा संस्कृतं भूयोऽपि सर्वेषामादरास्पदमुन्नतिशिखरारूढं च भविष्यति।

सोऽयमस्माकमुत्थानस्य जागरणस्य च कालः ।

'यो जागार तमृचः कामयन्ते'

(ऋग्० ५।४४।११)

'इन्द्र इच्चरतः सखा'

(ऐतरेयब्राह्मणे ७।१५)

'उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्मसु ।'

इति श्रुतिस्मृत्यनुसारं लोकस्य कालस्य च प्रगतिम्, अभिनव-भारतस्य चावश्यकता अनुरुध्य देववाण्याः समुद्धारे समुन्नतौ च तत्परैर्भाव्यमस्माभिः । अयमेव पन्था येन वय संस्कृतज्ञा ऐतिहासिक-परम्परानुरूपं स्वकीयगौरवपदं प्राप्तुं शक्नुमो भूयोऽप्यभिनवे भारते । नूनं "नान्यः पन्था विद्यतेऽयनाय" ।

किं बहुना,

सर्वेऽपि वयमद्य विश्वभावनं भगवन्तं संभूय प्रार्थयामहे—

ओं भद्राः सन्तु प्रशस्तयो भद्रा वाचो वचोविदः ।
जागृयाम पुरोहिताः ॥
पावका नः सरस्वती वाजेभिर्वाजिनीवती ।
यज्ञं वष्टु धियावसुः ॥

( ऋ० १।३।१० )

इति शम्

अखिलभारतीय-

# संस्कृतसाहित्यसम्मेलनस्य

देहलीराजधान्यां

द्वात्रिंशाधिवेशने

## शिक्षापरिषदः

सभापतेर्

ग्रन्थकर्तुः

# अभिभाषणम्



४, ५ चैत्र शु० २०१२

( २७, २८।३।१९५५ )

# भद्रसूक्तम्

( वैदिकपद्धत्या )

भद्रं भद्रं सर्वतो नः समेयाद्,
भद्रा वाचः सुमनसो वदेम ।
भद्रं मनो भद्रकामाय भूयात्,
कामे कामे नो भद्रं विरोचताम् ॥१॥

ग्रामे ग्रामे नो भद्रं विराजताम्,
भासतां भद्रं समितौ सभायाम् ।
भद्रं राज्येषु विश्वतः समृध्याद्,
भद्रं पृथिव्यां प्रथतां समन्तात् ॥२॥

परस्परं भद्रं समाचरन्तो,
न मायिनो मानुषीणां प्रजानाम् ।
आतन्वन्तः शिवतातिं वरिष्ठाम्,
इहैव लोकेऽमृतमाभजेम ॥३॥

विप्राः कवयो भद्रवाचो भवन्तो,
भद्रं राजानो राज्यधुरं वहन्तः ।
भद्रं गुरौ शिक्षमाणा वसन्तो,
भद्रं वयं सर्वत आवदेम ॥४॥

भद्रं नः करोत्ववनिशमन्तरिक्षं,
भद्रं नो वायुः पवमानः प्रवातु ।
भद्रं भद्रं द्यावापृथिव्यौ भवेताम्,
भद्रं मरुतो वृष्टिवाहा भवन्तु ॥५॥

( ग्रन्थकर्तुरेतत् )

ॐ

# वाचस्पतिर्वाचं नः स्वदतु

( यजुः २०।१ )

महामहिमशालिनो विद्वद्धौरेयाः,

परमिदं सौभाग्यं यदहमद्य जगल्ललामभूतायामस्यां भारत-भाग्यलक्ष्मीधान्यां देहलीनगर्यां सुप्रथितख्यातेरस्य निखिल-**भारतवर्षीय-संस्कृत-साहित्यसम्मेलनस्य** द्वाविंशाधिवेशन-प्रसङ्गेन तस्य शिक्षापरिषदः सभापतिपदस्य स्वीकारार्थं तत्संयोजक-महानुभावैः साग्रहमामन्त्रितोऽत्रभवतां समक्षमुपस्थितोऽस्मि।

शैशवात्प्रभृत्येव क्रमशो गुरुकुलेषु वाराणस्यां देश्यवैदेशिकवि-भिन्नविश्वविद्यालयेषु च छात्रत्वेन, तदनु वाराणसेयराजकीयसंस्कृत-महाविद्यालयस्य प्रधानाचार्यत्वेन, प्रतिवर्षं सहस्रशश्छात्रैः संबद्धानां तदीयपरीक्षाणां कार्याध्यक्षत्वेन, अन्यैश्च ग्रन्थकर्तृत्वादिप्रकारैः चिराय खलु जीवननिर्विशेषं समुपासितायाः सुरभारत्याः संरक्षणेन, संवर्धनेन, प्रचारणेन प्रसारणेन चैव, न केवलमस्माकं भारतीयानामेव, किन्तु मानवमात्रस्यापि वास्तविकं कल्याणं संभवतीति सश्रद्धं विश्वासं धारयन्नेव उक्तामामन्त्रणां कर्तव्यपालनमेवेदमिति मन्यमानः स्वीकृत-वानहम्।

आर्यमिश्राः !

नूनमभूतपूर्वोऽयं समयो भारतवर्षस्य दैर्घकालिक इतिहासे। सत्यं सुप्रभाता रजनी। चिरकालिकपारवश्यमहातमिस्रातमोऽपगमे भारतीयगगनमण्डले उदयाभिमुखभारताभ्युदयभास्वतो नूतननूतनाशाकिरणोद्भासि दिव्यं प्राभातिकं ज्योतिर्विशालमाशाचक्रवालमाभासयन्नो मानसकलिकाः प्रबोधयदिवावलोक्यते।

अस्मिन् हि सुशोभने समये भारतीयानामस्माकं सोल्लासमनसां सहसैव मुखान्निःसरति—

सुप्रभातं विजयतां धियो यत्पुष्टिवर्धनम्।
पथः सत्यस्य सातये॥

तदेतेन मनोऽभिरामेण अभिनवजीवनस्फूर्त्तिदायिना समयेनाऽभिनवतामापन्न इव भारते

यूयं हि देवीर्ऋतयुग्भिरश्वैः
परिप्रयाथ भुवनानि सद्यः।
प्रबोधयन्तीरुषसः ससन्तं
द्विपाच्चतुष्पाच्चरथाय जीवम्॥

(ऋग्० ४।५१।५)

इत्यनुसारं संप्रवृत्ते सर्वतो जनतायाः प्रजागरे,

राष्ट्रस्य तत्तद्विभागेषु सोत्साहं सर्वतो दिशं पुनर्निर्माणोऽभिनवनिर्माणे वा प्रस्तुते,

प्रलयकरमहास्त्रबलदृप्तानामैश्वर्यमदमत्तानां परस्परमीर्ष्यया लोकानां संजिहीर्षया चातितरां व्याकुलस्य त्रस्तस्य च जगतः प्रशान्तये विश्वकल्याणकामनानुप्राणिताया लोकद्वयसमुन्नतिसाधनभूताया भारतीयसंस्कृतेर्मूर्त्तिमतो नवावतारस्य **राष्ट्रपितुः** पद्धतिं संदेशं चानुसरति **भारतमातुः पुत्ररत्ने जवाहरलाले** तत्सहकारिवृन्दे च,

भारतस्यान्तरात्मन आह्वानभूतायाः, भारतीयसंस्कृतेश्च शरीररूपिण्याः सुरभारत्याः भूयःसमुत्थानस्य चर्चेयं नूनं सर्वथा स्वाभाविकी।

तदेतत्किंचिद्व्याख्यानमपेक्षते—

( १ )

## अभिनव-भारते संस्कृतम्

कस्यात्र संदेहो यत्सांप्रतिके भारतस्य पुनर्निर्माणे नैकदृष्ट्या संस्कृताभ्युत्थानस्य महत्युपयोगिता। तथा हि

( क ) **सांप्रदायिकं सांमनस्यमेव** तावद् गृह्यताम्। नाविदितमेतत्कस्यापि यद् भारत-राष्ट्रस्य लोकतन्त्रात्मकगणराज्यरूपेण स्थापनं हि भारतीयेतिहासस्य अपूर्वा घटना। सर्वेषामस्माकं हि तद् गर्वास्पदम्। स्पष्टमेतद् यदेतादृशस्य हि गणराज्यस्य संस्थितिर्विभिन्नसंप्रदायेषु परस्परं सांमनस्यभावाधीनैव।

चिरकालप्ररूढाभ्यः संकीर्णसांप्रदायिकभावनाभ्यो महद्भयमस्माकं राष्ट्रस्येति कस्याविदितं भवेत्। तासामीदृशीनां दुरन्तानां भावनानां प्रतीकारार्थं देववाण्या अभ्युत्थानं हि नूनमद्वितीयं साधनम्।

संस्कृतभाषा हि चिरादेव समानरूपेण समाश्रिता परिपुष्टा च विभिन्नसंप्रदायैः। प्रायेण सर्वेषामपि भारतीयसंप्रदायानां धार्मिकवाङ्मयस्याधाररूपा देववाणी। प्रायेण सर्वेषामपि भारतीयधर्माणामनुयायिभिराजीवनं तपांसि तपद्भिराचार्यैः संग्रथितानि ग्रन्थरत्नानि देववाण्याः साहित्यसमृद्धिं संपादयन्ति।

ततश्च निर्विवादं तत्तद्विभिन्नसंप्रदायेष्वन्तर्वर्त्तिनीमेकसूत्रतामादधाना सांप्रदायिकसांमनस्यसंस्थापनस्य मुख्यतमं साधनं देववाणी।

( ख ) विभिन्नप्रान्तीयभाषागतसंघर्षेणाप्येका दुरूहा समस्या सांप्रतमस्माकं राष्ट्रस्य।

अस्याः कठिनसमस्यायाः समाधानमपि संस्कृतभाषायाः समाश्रयेणैव सुतरां संपादयितुं शक्यते।

सर्वासामेव भारतीयार्यभाषाणां संस्कृतं जननी। अन्यासामपि नैकविधपोषणकारणाद् हेतोर्धात्रीव सा वर्तते। निर्विवादं हि सा न केवलं राष्ट्रभाषाया हिन्द्या एव, किन्तु अन्यान्यप्रान्तीयभाषाणामपि उपजीव्यभूता।

ततश्च न केवलं विभिन्नप्रान्तेषु परस्परं सांमनस्यसंस्थापनार्थमेव, किन्तु तत्तत्प्रान्तीयभाषाणां सम्यगध्ययनार्थं पोषणार्थं चापि देववाणी एव नः शरणम्।

राष्ट्रभाषायास्तु भविष्यं विशेषतस्तस्यामेवायत्तमिति निर्विवादं विद्वांसो मन्यन्ते ।

(ग) सामान्येन भारतीयसंस्कृतेरन्तरभिप्रायस्याविष्करणार्थमपि संस्कृतस्याभ्युत्थानमपेक्षितम् ।

नितान्तमतिप्राचीना सांस्कृतिकी परम्परा भारतस्य । तस्य किमपि नूतनं निर्माणं तां सांस्कृतिकीं परम्परामाश्रित्यैव भवितुमर्हति । तत्रैव भारतस्य वैशिष्ट्यं संनिविष्टम् ।

किञ्च, वस्तुतो मानवीयधर्मेणानर्थान्तररूपा भारतीयसंस्कृतिर्हि नूनं स्वरूपत एव सकललोककल्याणभावनक्षमा । सा वै भारतस्य जगतः कृतेऽमरसंदेशो भवितुमर्हति । नूनं तदधीनमेव परित्राणं सांप्रतं समन्तात् खिन्नस्य जगतः ।

ततश्च भारतीयसंस्कृतेर्यद् हार्दं तस्याविष्करणं नामास्माकं प्रथमं कर्तव्यम् । तच्च तस्या दीर्घपरम्पराया अध्ययनेनैव साध्यम् । तच्च प्रथमतः संस्कृतस्य समुत्थानमपेक्षते । संस्कृतं नाम भारतीयसंस्कृतेः शरीरमधिष्ठानं वा ।

(घ) अभिनवभारतस्य निर्माणेऽद्वितीयमनिवार्यं च साधनं तदीयशिक्षापद्धतिरिति सर्वेषां सम्मतम् ।

भारते सांप्रतं प्रचलितायाः शिक्षापद्धतेर्ये महान्तो दोषास्ते प्रतिदिनमस्मद्राष्ट्रनायकैस्तत्तन्मञ्चेभ्य उद्घोष्यन्ते । चिरकालिकवैदेशिकदास्यप्रभावाद् अभारतीयभावनाभावितत्वं हि तस्या मौलिको दोषः । तन्मूलका हि प्रायेण तस्याः सर्वेऽप्यपरे दोषाः । ततश्च

तेषां प्रतीकारार्थमयमेवाभ्युपायो यद् भारतीयसंस्कृतेराधारेण तस्याः परिष्कारो नाम। भारतीयसंस्कृतिर्हि

"ब्रह्मचारी....श्रमेण लोकांस्तपसा पिपर्त्ति।"

"ब्रह्मचारी ब्रह्म भ्राजद् बिभर्त्ति"

(अथर्व० ११।५।४,२४)।

इत्याद्यनुसारं स्वभावत एव श्रम-तपः-संयम-सौम्यत्व-भ्रातृ-भावना-गुरुसपर्यानुशासनप्रभृतिपवित्रादर्शानां प्रतिपादिका सांप्रतिक-शिक्षापद्धतेर्दोषाणां प्रतीकारस्य परमोऽभ्युपायः।

संस्कृतं वाव भरतीयसंस्कृतेः शरीरमधिष्ठानं वेति पूर्वमवोचाम। ततश्च सांप्रतिकशिक्षापद्धतेः परिष्कारार्थमपि सुतरां संस्कृतस्य समुत्थानं साहाय्यकृत्।

## संस्कृतशिक्षापद्धतेः परिष्कारः

तदेवं नैकदृष्ट्या अभिनवभारतस्य निर्माणार्थं जगत. कल्याणार्थं च सुतरामपेक्षिताया देववाण्याः ,सांप्रतिकशिक्षापद्धतेर्दिक्-प्रकारयोर्निर्धारणमेवैतस्याः परिषदः प्रधानमुद्देश्यम्।

कस्यापि देशस्य राष्ट्रस्य वा समुत्थानस्य प्रथमं सोपानं विचार-पुरस्सरं निर्णीतस्तत्रत्यः शिक्षाक्रम एव भवतीति केन नाभ्यु-पगम्येत?

परं भारतवर्षे, कालक्रमेण तास्ता अवस्था भजमानस्य तस्या-तितरां प्राचीनस्येतिहासस्येव, देववाण्या अपि परम्पराऽतिप्राचीना।

ततश्च तत्तत्कालेषु तस्यैवेतिहासस्य अवस्थाविशेषान् प्रवृत्तिविशेषांश्च प्रतिबिम्बरूपेण प्रदर्शयन्त्या देववाण्याः परम्पराया अनुसन्धानमन्तरेण न हि तस्याः सांप्रतं प्रचलितायाः शिक्षापद्धतेः स्वभावोऽवगन्तुं शक्यते, न चापि तस्यां सांप्रतिकीनामवस्थानामावश्यकतानां चानुरूप्येण चिकीर्ष्यमाणस्य परिष्कारस्य दिक्प्रकारौ निर्धारयितुं शक्येते।

एवं च तस्या ऐतिहासिकस्य वृत्तस्य परम्परायाश्च किंचित् सिंहावलोकनं सर्वथापेक्ष्यत इति तदेव प्रथममुपक्रम्यतेऽस्माभिः।

( २ )

## ऐतिहासिकं सिंहावलोकनम्

देववाण्याः खलु ऐतिहासिकस्य वृत्तस्य कालत्रयेण विभागः कर्तुं शक्यते—प्रारम्भकालः, विस्तारकालः, तथा संकोचस्य ह्रासस्य वा काल इति।

### प्रथमः कालः

सामान्यदृष्ट्या वैदिकेन वाङ्मयेन सामकालिक एवैष कालः।

"साक्षात्कृतधर्माण ऋषयो बभूवुः। तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान् संप्रादुः। उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुः। वेदं च वेदाङ्गानि च।" (निरुक्ते १।२०) इति निरुक्तग्रन्थेन प्रायेण तदेव वाङ्मयमुपवर्ण्यते।

प्रायेणास्मिन्नेव काले भारतीयसंस्कृतेरार्यसभ्यतायाश्च प्रथमो विकासः प्रस्फोटनं च जातम्। अस्माकं सामाजिकधर्माणां जीवनस्य मर्यादानामादर्शानां च स्थापनाया अयमेव कालः

भारतीयसंस्कृतेर्जीवनस्रोतसां श्रुतीनामेष एव कालः। संस्कृतस्य देवभाषात्वमेतत्कालकृतमेव[१]।

किं बहुना, भारतवर्षस्येतिहासे विशेषतो निर्माणस्य कृतेर्वा एष कालः।

अत एव वैदिकवाङ्मयस्याद्वितीयं महत्त्वं सर्वस्मिन्नपि भारतीये वाङ्मये। नूनं तस्योपेक्षा आत्मघातसमास्माकं भरतीयानाम्।

## द्वितीयः कालः

आरम्भकालादनन्तरं देववाण्या अतिमहतो विस्तरस्य कालोऽयं द्वितीयः कस्य नाम नाश्चर्यस्य विषयः।

भारतीयसंस्कृतेः समन्वयात्मकस्वरूपप्रतिपादनपरस्य पुराण-रामायणमहाभारतादेर्विस्तृतस्य वाङ्मयस्य, जगद्विस्मयकराणां पाणिन्यादिमुनिरचितसूत्राणाम्, भासकालिदासादिनिर्मितस्य हृदय-हारिणो गद्यपद्यात्मस्य काव्यस्य, यावज्जीवनव्यापारमनु पुरुषार्थ-चतुष्टयप्रतिपादिकानां वार्त्तादण्डनीत्यादिविद्यानाम्, तत्तत्कला-साहित्यस्य च विकासोऽस्मिन्नेव काले समभवत्।

---

१ तु० "मन्त्रः कल्पो ब्राह्मणं चतुर्थी व्यावहारिकीति याज्ञिकाः।", "तस्माद् ब्राह्मणा उभयीं वाचं वदन्ति या च देवानां या च मनुष्याणाम्" (निरुक्ते १३।६)।

तत्तद्विषयेषु आकरग्रन्थानां रचनायाः, तत्तद्रूपेण परम्परागताया भारतीयसंस्कृतेः समन्वयस्य, तस्या बौद्धधर्मादिरूपेण देशदेशान्तरेषु विस्तारस्य चाप्ययमेव कालः।

किं बहुना, राष्ट्रस्य जीवनस्य च सर्वेषामप्यङ्गाना-मानुकूल्येन देववाण्या विभिन्नविभागेषु सुमहतो वाङ्मयस्य सृष्टिरस्मिन्नेव कालेऽजायत।

प्रायेण स्वोपज्ञविचारविचारकाणामेवैष कालो भारतस्येतिहासे।

बौद्धादिधर्माणामपेक्षया वै स्वर्णयुगमेतद् भारतीयेतिहासस्य! सर्वमप्येतत् चेतश्चमत्कारि वृत्तं देववाण्यास्तत्काले सर्वतो दिशं स्वाराज्यभावनामनुभवतो भारतस्य सर्वथा स्वाभाविकमेवेति नहि काम्पि विशेषव्याख्यामपेक्षते।

## तृतीयः कालः

भारतस्येतिहासे प्रायेण राजनीतिकदास्यस्यायं कालः। अस्मिन् हि काले जातीयजीवने सर्वविधस्य संकोचस्य ह्रासस्य संकीर्णतायाश्च साम्राज्यं सर्वतो दिशमवर्तत।

जनताया राष्ट्रस्य च जीवनेन संबद्धानां वार्तादण्डनीति-शिल्पशास्त्रादिनैकविद्याविभागानां विलोपः संकोचो वा, सांप्रदायिकः शास्त्रीयो विवादश्च नूनमेतस्य कालस्य महद् वैशिष्ट्यम्।

नैवात्र कश्चिदाश्चर्यस्यावसरः ।

**स्वराज्यभानावस्तंगते राष्ट्रियप्रतिभाकमलानां वै संकोचः स्वाभाविको भवति ।**

नूनमेतदन्धकारयुगं भारतीयसंस्कृतेर्देववाण्या वाङ्मयस्य च ।

## वर्त्तमानकालस्य प्रारम्भः

येयं खलु देववाण्या वर्त्तमानकाले प्रायेण प्रचलिता शिक्षापद्धतिः, नैव सा एकान्ततो नवीना, न चाप्यतिप्राचीनेत्यत्र विषये विदुषां नैव विवादः । वस्तुतस्तु उपरिनिर्दिष्टतृतीयकालस्यान्धकारयुगे प्रचलिता पाठ्यपद्धतिरेव प्रायेण स्वेन रूपेणानुवर्त्तमाना, अंशमात्रेण रूपान्तरं प्रापिता वा, बृटिशशासनकालेऽपि नूतनपरीक्षाणां कृते प्रवर्त्तितासीत् ।

एवं च सति राजनीतिकदास्ययुगस्य दुष्प्रभावेण प्रभाविता सा नूनं तत्कृतदोषैर्विहीना भवेदिति नैव संभवति । तथा चानुपदमेव प्रदर्श्यतेऽस्माभिः ।

## सांप्रतिकसंस्कृतशिक्षापद्धतेर्गुणदोषपरीक्षणम्

जगतः, विशेषतो भारतवर्षस्य, सांप्रतिक्याः परिस्थितेरावश्यकतानामानुगुण्येन, संस्कृतज्ञानां वास्तविकीं समुन्नतिं प्रगतिं च पुरस्कृत्य, नूतनसंस्कृतशिक्षापद्धतेर्निर्धारणमेवास्याः शिक्षापरिषदः प्रधानमुद्देश्यम् । तच्च वर्तमानसंस्कृतशिक्षापद्धतेः सामान्येन गुणदोषविवेचनपुरस्सरमेव कर्तुं शक्यत इति तदेव क्रियतेऽस्माभिः ।

## तत्र गुणपक्ष एव तावद्विचार्यते

कस्यैतत् तिरोहितं यदस्माकं सुदीर्घे राजनीतिकपारतन्त्र्यकाले सर्वतः प्रतिकूलासु परिस्थितिषु, विलुप्तेषु विलोपोन्मुखेषु च परःशतेषु प्राचीनग्रन्थरत्नेषु, कथंचित् यत्किंचित् संस्कृतपरम्परायाः संरक्षणमासीत् तत्खलु समस्तेऽपि भुवने कस्यापि वाङ्मयस्येतिहासेऽदृष्टचरम्।

तस्मिन् हि कठिनातिकठिने समये तपस्यां श्रद्धां देशभक्तिमेकान्तनिष्ठां विशेषतश्च देववाण्यां प्रत्यनन्यप्रेमभावनां समाश्रितैर्भारतीयविद्वद्भिर्बाहुल्येन प्राचीनानेकदुरूहग्रन्थार्णवावारपारीणान् टीकोपटीकाप्लवान् विधाय कथमपि प्रौढपाण्डित्यपरम्परा संरक्षिता।

सैव प्रौढपाण्डित्यपरम्परा, प्रतिपाद्यविषयाणां दृष्ट्यातिसंकुचितापि, भारतीयविभिन्नप्रान्तेषु प्रचलितसंस्कृतपरीक्षाप्रणाल्याः साहाय्येन कथंचिदद्यापि प्रचलति।

ततश्च संस्कृतपठनपाठनपरम्परायाः कथंचित्संरक्षणम्, देववाण्यास्तृतीयकाले निर्मितटीकोपटीकागतप्रौढपाण्डित्यपरम्परायाः कथंचिन्निर्वाहश्च प्रचलितपाठ्यपद्धतेर्महनीयो महान् गुणः।

किञ्च, अद्यापि दिष्ट्या संस्कृतमासेतुहिमालयम् आपूर्वापरसमुद्रं च भारते परस्परव्यवहारसाधनं वर्तते। अद्यापि परःसहस्राश्छात्राः प्रतिवर्षं संस्कृतपरीक्षायाः कृते प्रयत्नपरा दृश्यन्ते। तदेतत्सर्वं देववाण्याः कृते वर्तमानपरीक्षाणामुपकारमेवोद्घोषयति।

सत्यप्येतस्मिन् महति गुणे, नैकेषां दोषाणां त्रुटीनां च हेतोर्वर्तमाना संस्कृतशिक्षापद्धतिर्नूनं सद्य एव परिष्कारमर्हति।

## ते दोषास्त्रुटयश्च समासेनैवाधो निर्दिश्यन्ते

(१) भारतेतिहासस्य स्वतन्त्रतायाः स्वच्छन्दवातावरणस्य स्वर्णयुगे निर्मितानामाकरग्रन्थानामार्षग्रन्थानामन्येषां च अनेकपदार्थबहुलग्रन्थरत्नानां प्रायेणोपेक्षा ।

अत एव कति नामाद्यत्वे महान्तोऽपि विद्वांसोऽतिविस्तृतेन वैदिकेन वाङ्मयेन, अर्थशास्त्र-निरुक्त-महाभाष्य-वाक्यपदीयाद्यनेकग्रन्थरत्नैश्च सम्यक् परिचिता दृश्यन्ते ?

(२) व्यापकपाण्डित्यस्य स्थाने मध्यकाले पुष्टिं गतायाः शास्त्रार्थशैल्या आधारेण एकदेशिपाण्डित्यस्य एव प्रायेण पक्षपातः ।

पदवाक्यप्रमाणानां पारगा नैकशास्त्राभिज्ञाः पारोवर्यविदो विद्वांसोऽद्यत्वे केवलं नामशेषतां गता इत्यत्रैतदेव प्रधानं कारणम् ।

गणरत्नमहोदधिकारो वर्धमानोऽष्टौ व्याकरणानि सम्यगध्यस्य स्वग्रन्थं निर्मितवानिति को नामाद्यत्वे श्रद्धास्यति ?

उक्तप्रवृत्तिमूलक एव हन्त ! षडङ्गवेदाध्ययनप्रवृत्तेरचिरकालादेव विलोपः प्रवृत्ते ।

(३) विवेचनाबुद्धेरभावः, वस्तुतत्त्वज्ञानस्योपेक्षा च ।

**सामान्येन शब्दैकप्रमाणपरताप्रवृत्तिं परप्रत्ययनेयबुद्धिं च विहाय तत्तद्विषयेषु स्वयमेव यथाप्रमाणं वस्तुतत्त्वपरीक्षणमुखी प्रवृत्तिरेव विवेचनाबुद्धिः ।**

कस्यैतदविदितं यदद्यत्वे हि संस्कृतशिक्षापद्धतेरप्यनेको महान्

दोषो यत्प्रथमं तु छात्रेषु कस्मिन्नपि विषये, विवेचनाबुद्धेस्तु का कथा, स्वाभाविक-विशिष्टजिज्ञासाबुद्धेरप्यनुदय एव। उदयेऽपि अभ्यस्यमानग्रन्थप्रमाणबलादेव सबलात्कारमिव तस्या उपशमः क्रियते। अभ्यस्यमानग्रन्थोक्ताः पदार्थास्तत्तद्ग्रन्थेषु यथा प्रतिपादितास्तथैव वस्तुतत्त्वज्ञाननिरपेक्षतया गृह्यन्ते।

अवैज्ञानिकी शिक्षणपद्धतिः, प्रतिपाद्यविषयमनवबुद्ध्यैवातिमात्रं प्रवृद्धा ग्रन्थानां कण्ठस्थीकरणपरिपाटी च (अद्यत्वे प्रायेण परीक्षार्थिनां सहचरी) नूनमत्र मुख्यं कारणम्। संस्कृतविद्वत्सु अनुसन्धानप्रवृत्तेरवरोधस्याप्येतदेव कारणं बहुत्वेन।

(४) सामान्यव्यवहारोपयोगिनां गणितभूगोलेतिहासराजशास्त्रपौरशास्त्रलोकभाषादिविषयाणां ज्ञानस्योपेक्षा।

(५) जनताया जीवनेन लोकस्य राष्ट्रस्य च प्रगत्या संबद्धानां वार्तादण्डनीत्यादिविषयाणां पाठ्यक्रमेऽसन्निवेशः।

(६) समन्वयात्मकव्यापकसांस्कृतिकदृष्टेरभावेन सांप्रदायिकसंकीर्णभावनायाः तत्तज्जातिगतसंकीर्णभावनाया वा वातावरणम्, भारतीयसंस्कृतेः समन्वयात्मकबुद्धेरभावो वा।

(७) स्वाध्याय (स्वयमध्ययन) प्रवृत्तेरनुद्बोधनम्।

कस्यैतत्तिरोहितं यच्छात्रा अद्यत्वे साधारणटीकाग्रन्थानपि गुरोरेवाध्येतुमुत्सुकाः स्वावलम्बनेनैव ग्रन्थतत्त्वनिर्धारणे महतीं ग्लानिं व्यथां चानुभवन्ति।

चिराय लुप्तेषु अथानुसंधानेन प्राकाश्यमुपगतेषु अर्थशास्त्रसदृशे-

ष्वपि ग्रन्थेषु बाहुल्येन दृश्यमानं विदुषां लोकविदितमाश्चर्यकारि अनौत्सुक्यमपि एतस्याः प्रवृत्तेरेव निदर्शनम्।

एतैरेवंजातीयैरन्यैश्च विद्याया ज्ञानस्य च प्रगतेर्विरोधिभिर्दोषैर्युक्ता बाहुल्येन सांप्रतिकी संस्कृतशिक्षापद्धतिस्तत्तद्विद्यालयेष्विति को नाम न स्वीकरिष्यति ?

अस्माकं संस्कृतज्ञानामसन्तोषप्रदाया वर्तमानायाः परिस्थितेर्नूनं सैव कारणम्।

## संस्कृतज्ञानां सांप्रतिकी स्थितिः कर्तव्यं च

आसीत्सोऽपि समयो भारते यदा खलु जीवनयात्रायाः प्रत्येकविभागे देववाण्या एवाप्रतिहतं साम्राज्यं सुस्थितमवर्त्तत।

सैनापत्यं च राज्यं च दण्डनेतृत्वमेव च।
सर्वलोकाधिपत्यं च वेदशास्त्रविदर्हति ॥

(मनु० १२।१००)

इत्यादिप्रमाणैरयमर्थः स्पष्टं प्रतीयते।

परं हन्त ! कालवशात्सर्वं तद्विपर्यस्तम्।

सांप्रतिकजगति जीवनस्य यात्रायां राष्ट्रस्य वा प्रगतौ या खलु देववाण्याः संस्कृतज्ञानां वा स्थितिः कस्य सा न विदिता। नहि देववाण्याः कश्चिदुपयोगः सामान्यलोकव्यवहारे, नापि काचिद् विशेषापेक्षा संस्कृतज्ञानां राष्ट्रस्य विभिन्नविभागेषु। ततश्च उपेक्षिता इव सांप्रतिकजगति, कथं कथमपि स्वजीवननिर्वाहं कुर्वाणाः संस्कृतज्ञाः कथन्तु कंचिदपि सन्तोषमनुभवितुमर्हन्ति ?

नात्र वैमत्यं यत्संस्कृतज्ञाः सांप्रतं नूनमात्मनोऽवमानतारोगेणाक्रान्ता इव, किंकर्तव्यविमूढा इव, केवलं साधारणातिसाधारणपदानां प्राप्त्यर्थमेव प्रयत्नपरा दृश्यन्ते। संस्कृतज्ञानेन सह लौकिकोन्नतेः कश्चित् प्रातिस्विको विरोधः, अत एव लौकिकोन्नतिदृष्ट्या संस्कृतज्ञानोपार्जनं कश्चिदपराध इवेति तेषमान्तरो विश्वासः प्रतीयते।

'संस्कृतज्ञाः सन्तोऽपि वयम्' इत्यस्य स्थाने 'संस्कृतज्ञत्वकारणादेव वयम्' राष्ट्रस्य तत्तद्विभागेषु न केवलं कार्यकर्तार एव, किन्तु अध्यक्षा अपि, संचालका अपि, नेतारोऽपि, मन्त्रिणोऽपि भवितुमर्हाः, इत्येष विचारस्तु तेषां मनःसु प्रायेण स्थानमेव न लभते।

नूनमेष तेषामात्मपरीक्षणस्यावसरः। तदस्या अवस्थाया उत्तरदायित्वं प्रथमतस्तेषामेवोपरि। नहि लोकोऽत्र दोषभाक्।

क्षणं तावदवधानेन चिन्तनीयम्। या खलु आ स्वराज्यप्राप्तेः राष्ट्रस्य सर्वतो दिशं प्रगतिरुपलभ्यते तत्र कः कियान्वा सहयोगः संस्कृतज्ञानाम्? आस्तां तावत्सामाजिक्यादिसमस्यानां वार्ता। वर्तते महती राष्ट्रभाषानिर्माणस्यापि समस्या भारते। द्वादश वर्षाणि यावत्सहस्रशो व्याकरणस्याध्येतृभिस्तत्र यावदुपकृतं तन्नाविदितं कस्यापि।

क्षणं विचार एवात्र विषये संस्कृतज्ञानां स्थितेः पठनपाठनपद्धतेर्मनोवृत्तेश्च स्वरूपं नः समक्षं साक्षादुपस्थापयितुमलम्।

नूनमखिलमेतद् वृत्तं संस्कृतज्ञानां लोकप्रगतेर्लोकावस्थितेश्चाप्यपरिज्ञानमूलकम्।

तत्रैतस्यामवस्थायां संस्कृतज्ञानां यत्कर्तव्यं तत्सुतरां स्पष्टम्। सर्वतः प्रथमं तैरात्मनो हीनभावनां प्रगतिपराङ्मुखीं प्रवृत्तिं च परित्यज्य, सांप्रतिकशिक्षादीक्षितैः समानमेव, राष्ट्रस्य सर्वतो दिशं जायमानायां प्रगतौ सहयोगदानस्य सर्वेषूत्कृष्टविभागेषु प्रवेशस्य च योग्यता संपादनीया।

संस्कृतज्ञा असामयिकाः, अत एव विश्वविद्यालयीयशिक्षितैः समानं न सर्वत्र संमानं प्रवेशं वा लब्धुं योग्या इत्येषोऽपवादस्तैः समूलघातं हन्तव्यः।

तदेतत्सर्वं कथमिव संपादयितुं शक्यत इत्यत्र विषये नैव विद्यते कस्याश्चिद् द्वेधा प्रतिपत्तेरवकाशः। सततं ज्ञानविज्ञानयोरुन्नतौ तत्परेषु सर्वेष्वपि समुन्नतदेशेषु, तत्रत्येषु सुप्रसिद्धविश्वविद्यालयेषु च पूर्णतः फलेग्रहितां गतायाः शिक्षापद्धतेराधारेणैव देववाण्या अपि शिक्षापद्धतेः प्रगत्युन्मुखः परिष्कार एव तस्याभ्युपाय इत्यत्र नैव कस्यापि सन्देहस्य विवादस्य वावसरो विद्यते।

तस्यैव सर्वथापेक्षितस्य परिष्कारस्य मौलिकाः सिद्धान्ताः, लक्षशः संस्कृतच्छात्राणां शतशश्चाध्यापकानां विद्यालयानां

च स्वकीयस्यानुभवस्याधारेण, अधः संक्षेपेणैव प्रतिपाद्यन्तेऽस्माभिः।

( ३ )

## संस्कृतशिक्षापद्धतेः परिष्कारस्य मौलिका सिद्धान्ताः

**(१) सामान्यव्यवहारोपयोगिनां गणितभूगोलेतिहाससामान्यविज्ञानादिविषयाणां ज्ञानम्।**

तादृशं सामान्यज्ञानं हि, न केवलं छात्राणां यथायथं मनोविकासार्थमेव, न केवलमद्यत्वे सर्वविधाया ज्ञानविज्ञानयोः समुन्नतेराधाररूपत्वेन लोकप्रगतेरवबोधनार्थमेव, किन्तु स्वकीयजीवनयात्रायाः सौकर्यार्थमप्यावश्यकम्।

**(२) प्रौढपाण्डित्यस्य संरक्षणेन सहैव विवेचनाशक्तेरप्युपबृंहणम्।**

तत्तच्छास्त्रेषु परम्पराप्राप्तं प्रौढपाण्डित्यं नूनमस्माकं गर्वस्य गौरवस्य च विषयः। अत एव तस्य संरक्षणमस्माकं प्रथमं कर्तव्यम्।

परन्तु तदेव केवलं सांप्रतिकसमस्यानां समाधानाय नैव पर्याप्तम्। अर्थशास्त्रेतिहासराजनीतिप्रभृतिविषयेष्वपि, नूतनेष्वनूतनेषु च, तादृशमेव, ततोऽप्यधिकं वा, प्रौढपाण्डित्यमद्यत्वेऽपेक्ष्यते।

अत्रेदमप्यवधेयं यत्प्रौढपाण्डित्यं हि प्राधान्येन विवेचनाबुद्धिमपेक्षते। तां विना हि तत् प्रायेण आहोपुरुषिकारूपे प्रौढिवादे, वस्तुतत्त्वपरीक्षणप्रवृत्तिविरोधिन्यामत्यन्तं शब्दप्रमाणपरतायाम्, सर्वज्ञानोन्नतिविरोधिन्यां विचारसंकीर्णतायामेव वा पर्यवस्यति।

ततश्च प्रौढपाण्डित्यं वास्तविकीं पुष्टिं फलेग्रहितां चाश्नुवीतेति संस्कृतशिक्षापद्धतौ सर्वज्ञानसमृद्धेर्जननीरूपाया विवेचनाशक्तेरुपबृंहणस्याप्यतीवावश्यकता।

(२) अनुसन्धानप्रवृत्तेरुद्बोधनम्।

नैतदविदितं विदुषां यत्सांप्रतिकजगति येयमाश्चर्यमयी चेतश्चमत्कारिणी समुन्नतिरभितो दृश्यते सा खलु ज्ञानविज्ञानयोर्विभिन्नविभागेषु निरन्तरमभियोगभाजां विदुषामनुसन्धानस्यैव फलम्।

अत एवानुसन्धानप्रवृत्तेः प्रोत्साहनार्थं सर्वेषून्नतेषु राष्ट्रेषु प्रतिवर्षमधिकाधिको धनव्ययः क्रियमाणः श्रूयते।

संस्कृतवाङ्मयेऽपि तदपेक्ष्यते सुतराम्। परं खेदावहमेतद् यत्प्राचीनपरिपाटीमाश्रित्य संस्कृतपठनपाठनपरम्पराया निर्वाहकाः संस्कृतज्ञा विद्वांसः, स्वकीयविषयाणां विशेषज्ञाः सन्तोऽपि, अद्य यावदस्मिन्ननुसंधानकार्ये न केवलं प्रायेणोदासीना एव, किन्तु बाहुल्येनापरिचिता अपि एतस्य प्रक्रियया मौलिकसिद्धान्तैश्च।

ततश्च संस्कृतस्य नूतनशिक्षापद्धतावनुसन्धानप्रवृत्तेरुद्बोधनमपि मुख्यं स्थानं लब्धुमर्हति ।

## (४) विद्यायास्तत्तद्विषयेषु नवीनोन्नतेरात्मसात्करणम् ।

भारतस्य दास्यकाले सर्वाप्यस्माकं प्रगतिरवरुद्धासीत् । संस्कृतवाङ्मयमप्यस्याः प्रवृत्तेर्नापवादः । गणितज्यौतिषादिविषयेषु या पुनः सांप्रतिकी समुन्नतिः सा केन न श्रुता भवेत् । एतादृशी एव परिस्थितिरितिहासराजशास्त्रभाषाविज्ञानादिविषयाणामप्यत्वे ।

ततश्चैतादृशेषु विषयेषु नवीनोन्नत्या संस्कृतज्ञा अपि परिचिता भवेयुरिति क्रियतामेव यत्नः ।

को नु आत्मनो हितमाकाङ्क्षन् विद्यायाः समुन्नतावनुदारो भवितुमर्हति ?

## (५) समष्ट्यात्मकभारतीयसंस्कृतेर्भावना ।

अयमेवार्थः 'सांप्रदायिकासहिष्णुताया निराकरणम्' अथवा 'सांप्रदायिकसमभावना' इत्यादिप्रकारैरपि वर्णयितुं शक्यते ।

सैषा भावनास्माकं राष्ट्रस्येव, संस्कृतविद्यास्थानानां कृतेऽपि अतितरां मौलिकीमपरिहार्यां चावश्यकतां बिभर्ति । तद्विषये कीदृशोऽपि संकोचो न केवलमात्मप्रवञ्चनैव, किन्तु राष्ट्रभ्रंशकरो महानपराधोऽपि ।

## ( ६ ) तत्तज्जात्यनपेक्षिणी यावद्भारतीया दृष्टिः ।

उपरिष्टात्प्रतिपादितेन सिद्धान्तेन प्रायेण गतार्थमप्येतत् किञ्चित्प्रपञ्चार्थमेवोक्तं मन्तव्यम् ।

सांप्रदायिकसंकोच इव वत्त्ज्ञातिकृतः संकोचोऽपि देववाण्याः समुन्नतेरत्यन्तं बाधक इति कस्य तिरोहितम्। सोऽयं सत्यं न केवलं देववाण्या एव, किन्तु भारतीयराष्ट्रस्यापि मूले कुठाराघातः।

सुप्रसिद्धेषु 'ऑक्सफोर्ड'-विश्वविद्यालयादिषु पृथिव्याः कस्यापि देशस्य कोऽपि च्छात्रः सस्वागतं प्रवेशमाप्तुमर्हति। विशेषतोऽत्रैव तेषामान्तराष्ट्रिकं महत्त्वम्।

परमस्माकं 'सार्वभौमवैदिकधर्मस्य' घोषणां कुर्वत्सु गुरुकुलेष्वपि कीदृशोऽपि सांप्रदायिकः संकोचः, राजकीयसंस्कृतविद्यालयेषु च कीदृशोऽपि सांप्रदायिकस्तज्ज्ञातिगतः संकोचो वा समुपलभ्यमानो महान्तं क्लेशमात्मलज्जां च नो जनयति।

**त एते मौलिकाः सिद्धान्ता अस्मन्मते सांप्रतिकस्य कस्यापि संस्कृतशिक्षापद्धतेः परिष्कारस्य।**

त एव सिद्धान्ताः पञ्चसूत्र्या एवं निर्देष्टुं शक्यन्ते—

(१) प्रौढपाण्डित्यपरम्परायाः संरक्षणम्।

(२) विद्यायास्तत्तद्विषयेषु नवीनोन्नतेरात्मसात्करणम्।

(३) अनुसन्धानेन विलुप्तप्राचीनशास्त्रादीनां समुद्धारो ज्ञानस्य नूतनः समुत्कर्षश्च।

(४) सांप्रदायिकसमभावना।

(५) यावद्भारतीयः प्रचारः प्रसारश्च।

एतान्येव संस्कृतज्ञानां कृते 'पञ्च शीलानि' इति वर्णयितुं शक्यन्ते।

किं बहुना, योगे यमनियमादीनाम्, वेदान्ते शमदमादीनाम्, प्रासादस्य निर्माणे मूलभित्तेः, जीवने च ब्रह्मचर्याश्रमस्य यथापेक्षा, तथैव संस्कृतशिक्षायाः परिष्कारस्य साफल्यार्थमेत आधाराः अपेक्षिताः।

## ( ४ )

# विद्यापीठस्य प्रस्तावोऽभिनवसंस्कृतशिक्षा-पद्धतिश्च

संस्कृतज्ञानां संस्कृतानुरागिणां च कृते महत्याः प्रसन्नताया विषयो यद् निखिलभारतवर्षीय-संस्कृतसाहित्यसम्मेलनेनानेन संस्कृतस्य संस्कृतज्ञानां च वास्तविकाभ्युत्थानमभिलक्ष्य, यथासंभवं भारतशासनस्य साहाय्येन, सामयिकदृष्ट्या सर्वाङ्गसंपूर्णस्य संस्कृत-विद्यापीठस्यात्र देहलीनगर्यामेव स्थापनार्थं समुद्योगः समारब्ध इति। सर्व एव समारम्भो वस्तुतस्तस्यैव भूमिकारूपः।

तस्यैव विद्यापीठस्य कृतेऽभिनवशिक्षापद्धते रूपरेखानिर्माणार्थं परिषदेषा समामन्त्रिता।

अत एव पूर्वोक्तान् साम्प्रतिकसंस्कृतशिक्षाया आवश्यकान् सिद्धान्तान् संस्कृतज्ञानां सांप्रतिकीरावश्यकताश्च मनसि निधाय, परिषद् आयोजकानामभिप्रायाँश्चानुसृत्य, अत्रभवतां स्थापयिष्य-माणायाः पाठ्यसमितेश्च विमर्शार्थम्, यथानुभवं स्वकीयविचारा अत्र विषये समुपस्थाप्यन्ते।

## विद्यापीठस्य रूपरेखा

प्रायेण प्रदर्शितमेवोपरिष्टादस्माभिर्यन्मध्यकालीनपरम्परामनुसरन्ती अद्यत्वे प्रचलिता संस्कृतपठनपाठनपद्धतिरतीव संकुचिता, न केवलं पाठ्यविषयाणां दृष्ट्यैव, किन्तु तदनुसारं शिक्षितानां जीविकाक्षेत्रस्यापि दृष्ट्या। बाहुल्येन पाठशालादिषु अध्यापनवृत्त्यैव ते शिक्षिताः स्वजीविकानिर्वाहं कर्तुमर्हन्ति।

तत्स्थाने उभयदृष्ट्यापि नूतनसंस्कृतशिक्षापद्धतेः स्वरूपमतिविस्तृतं भवेदित्येवास्माकमभीष्टम्। तदनुसारं शिक्षितानां जीविकाक्षेत्राणि यथासंभवं साम्प्रतिकविश्वविद्यालयेषु शिक्षितानां जीविकाक्षेत्रैः समानानि भवेयुरित्येतदर्थमेव नः प्रयत्नेन लक्ष्येण च भाव्यम्।

स्पष्टतः सर्वमेतन्नैव सद्यः संपादयितुं शक्यते। अत एव प्रस्तावितस्य विद्यापीठस्य कार्यक्रमं वयं तात्कालिकदैर्घकालिकभेदाभ्यां विभजामः। प्रारम्भिककाले कार्यक्षेत्रं स्वभावत एव तात्कालिककार्यक्रमेण सीमाबद्धमेव तिष्ठेत्, दैर्घकालिककार्यक्रमस्तु कालान्तरेणैव व्यवहर्तुं शक्यते।

### तात्कालिकः कार्यक्रमः

विद्यापीठस्य तात्कालिकः कार्यक्रमस्तावदधोनिर्दिष्टप्रकारेण त्रिविधो भवेत्—

(१) पठनपाठनविभागः—

(क) विद्यालयविभागः,

(ख) महाविद्यालयविभागः ।

(२) पुस्तकालयः संग्रहालयश्च ।

(३) अनुसन्धानविभागः—

(क) उत्तराध्ययनविभागः,

(ख) प्रकाशनविभागः—

(अ) अनुसन्धानपत्रिका ( त्रैमासिकी ),

(इ) प्राचीनग्रन्थमाला,

(उ) नूतनग्रन्थमाला ।

## दैर्घकालिकः कार्यक्रमः

विद्यापीठस्य दैर्घकालिकः कार्यक्रमस्तु सामान्येन चतुर्विधो भवेत् । तथा हि—

(१) शिक्षणपद्धतिविभागः,

(२) पत्रसंपादनकलाविभागः,

(३) वैदेशिकभाषासंस्कृतिविभागः,

(४) प्रतियोगितापरीक्षाविभागः ।

सामान्येन विभागानामेतेषामुपयोगिताया आवश्यकतायाश्च विषये न हि वक्तव्यमपेक्ष्यते । पूर्वोक्तानां सिद्धान्तानां व्याख्ययैव तत्प्रायेण गतार्थमिति मन्तव्यम् । तथापि प्रत्येकं विभागस्य किंचिद् विवरणमधो निर्दिश्यते—

## पठन-पाठन-विभागः

अस्य विभागस्य द्वाववान्तरविभागौ भवेताम्—प्रथमपरीक्षा-मध्यमपरीक्षात्मको **विद्यालयविभागः** प्रथमः, शास्त्र्याचार्यपरीक्षात्मको **महाविद्यालयविभागो** द्वितीयश्चेति।

## प्रथमपरीक्षा मध्यमपरीक्षा च

तत्र **प्रथमपरीक्षायाम्** अन्यैर्गणितादिभिरपेक्षितैर्विषयैः सहैव संस्कृते पत्रत्रयं भवेत्—साधारणव्याकरणे, सरलगद्यपद्यात्मकसंग्रहे, अनुवादे चेति।

संस्कृते योग्यतादृष्ट्या रामायणमहाभारतपद्यशैल्याः साधारण-सरलगद्यशैल्याश्च परिचयः, साधारणतः शुद्धसंस्कृतेन लेखनशक्तिश्च लक्ष्यत्वेन भवेताम्। व्याकरणे सूत्रोद्धरणं यथासंभवं नावश्यकं मन्येत।

**मध्यमापरीक्षा** वर्षत्रयेण संपन्ना भवेत्। अन्यैरपेक्षितैर्विषयैः सहैव संस्कृते योग्यताया लक्ष्यमेवं भवेत्—

रामायणमहाभारतपुराणादिशैल्याः सम्यक् परिचयः, तेषां स्वाध्यायस्य योग्यता, तत्र प्रवृत्तिश्च। गद्यपद्यात्मककाव्यानां साधारणः परिचयः। तर्कसंग्रहस्तत्सदृशो ग्रन्थो वा। शुद्धसंस्कृतेन स्वाभिप्रायप्रकटनयोग्यता, निबन्धलेखनशक्तिश्च। मौलिकभारतीय-संस्कृतेः साधारणः परिचयः। वैदिकभाषायां कश्चित्प्रवेशश्चेति।

व्याकरणस्य मानम्—मध्यकौमुद्याः किञ्चिन्न्यूनं, विषयप्रधानं, न तु ग्रन्थप्रधानम्। अत्र नवीनस्वतन्त्रग्रन्थनिर्माणमुपयुक्ततरं भवेत्। परं शास्त्र्याद्यग्रिमपरीक्षयोर्व्याकरणं विशेषविषयत्वेन अधिजिगांसूनां कृते मध्यकौमुदी एव नियता भवेत्।

गणिते भागद्वयं भवेत्—आवश्यकं वैकल्पिकं च। सिद्धान्त-ज्योतिषं मुहूर्तादिज्ञानं जन्मपत्रनिर्माणं च वैकल्पिकं भवेत्।

प्रथमायां मध्यमायां च परीक्षायां राष्ट्रभाषाया अध्ययनमावश्यकं भवेत्। इंग्लिशभाषायाः कस्याश्चित्प्रान्तीयभाषायाश्च वैकल्पिकं भवेत्।

## शास्त्रिपरीक्षा

शास्त्रिपरीक्षा वर्षत्रयेण प्रायेण द्वादशभिः पत्रैर्निष्पन्ना भवेद्यो-निर्दिष्टप्रकारेण—

१—विशिष्टविषयः.................... पत्रत्रयम्।
२—संस्कृतसाहित्यम्................ "
३—इंग्लिशभाषा ( प्रान्तीयभाषा वा )........... "
४—राष्ट्रभाषा।............ "

विस्तरेणामेतेषां तारतम्यादिकं पश्चान्निर्धारयिष्यते। पत्रसंख्या च। विशिष्टविषयाःप्रारम्भ एते स्युः :—

व्याकरणम्, दर्शनम् ( सामान्यमथवा विशिष्टम् ), इतिहास-पुराणे, साहित्यम्, वेदः, राजशास्त्रम्, धर्मशास्त्रम्, ज्योतिषम् ( सगणितम् ), भारतीयसंस्कृतिः।

इतिहासराजनीत्यादिसांप्रतिकविषयाणामध्ययनं यथासंभवं संबद्ध-संस्कृतविषयैः सहैव अथवा स्वतन्त्रत्वेन भवेदिति विचारणीयो विषयो वर्तते।

भारतीयसंस्कृतेः स्वतन्त्ररूपेण विशिष्टविषयत्वमावश्यकम्। पाश्चात्यविश्वविद्यालयीयपद्धतेरनुरूपं छात्राणामाकर्षकमुपयोगि च तन्नूनं भविष्यतीति नो विश्वासः।

शास्त्रिपरीक्षाया लक्ष्यम्—जगत्प्रसिद्धोत्कृष्टविश्वविद्यालयानां बी० ए० परीक्षोत्तीर्णस्नातकानामिव सर्वपरिस्थितीरभिषहमाणाया योग्यताया व्यक्तित्वस्य च (तेजसो वर्चसश्चेति वैदिकभाषायाम्) प्रभाववद्विकासो भवेत्।

### आचार्यपरीक्षा

उपरिनिर्दिष्टविशिष्टविषयेष्वेव वर्षद्वयेन निष्पन्ना भवेत्।

परीक्षाया मानम्—तत्तद्विषयेषु एम० ए० परीक्षावदेव भवेत्।

शिक्षापद्धतेर्विकासक्रमेण शास्त्रिण आचार्याश्च प्रतियोगितापरीक्षास्वपि प्रवेशयोग्या भवेयुरित्यपि अस्माकमभीप्सितम्। तच्चोपायैः सर्वथा साध्यमिति नो दृढो विश्वासः।

### पुस्तकालयः संग्रहालयश्च

अस्मिन् विषये नैव किंचिद्वक्तव्यमपेक्ष्यते। कस्यापि महाविद्यालयस्य कृते एष विभागः परमावश्यकः। यथावश्यकमस्य विस्तारोऽप्यपेक्ष्येत।

## अनुसन्धान-विभागः

कस्यापि साङ्गोपाङ्गस्य शिक्षाक्रमस्य पूर्णतायै अनुसन्धान-विभागस्यानिवार्यरूपेणावश्यकता भवतीति नैव विदुषां तिरोहितम्।

**शिक्षाया उत्कृष्टं समुचितं च वातावरणमनुसन्धानविभागमन्तरेण नैव संभवति। संस्कृतपठनपाठनपद्धतेर्वातावरणं सर्वथा प्रगतिशीलमुदारोदात्तभावनाभिरभिव्याप्तं च भवेदित्यावश्यक एवैष विभागः।**

तत्र ज्ञानस्यानन्त्याद् अनुसन्धान-विषयाणां संख्यया निर्धारणं कर्तुं नैव शक्यम्। तथापि सामान्येन विषयाणां दृष्ट्या प्रारम्भकालेऽस्मिन्ननुसन्धानविभागे विशेषतो वेद, पुराणेतिहास, दर्शन, साहित्य, व्याकरणसदृशविषयेषु एव व्यापकदृष्ट्यानुसन्धानकार्यसंचालनार्थं योग्यानामनुभववतां महोपाध्यायानां व्यवस्था करणीया भविष्यति।

तेषामेव साहाय्येन तत्तद्विषयेषु सांप्रतिकोन्नतिदृष्ट्या वैज्ञानिकपद्धत्या च तुलनात्मकमुत्तराध्ययनमपि साध्यं भवेत्।

**उत्तराध्ययनविभागे** हि 'पीएच० डी०' परीक्षादिवद् वाचस्पत्यादिपरीक्षार्थं छात्रा अनुसन्धानादिकार्यं कर्तुमर्हन्ति।

**प्रकाशनविभागस्य** तदवान्तरविभागानां च विषये नात्र बहु वक्तव्यमपेक्ष्यते।

अनुसन्धानविभागस्य वास्तविकं साफल्यं प्रकाशनविभागं विना नैव संभवति ।

महदेतत्कार्यम् । परमेतेन विना विद्यापीठस्य तत्परिचालित-नूतनसंस्कृतशिक्षापद्धतेश्च साफल्यं भवितेत्यतीव संदेहास्पदम् ।

स्पष्टतोऽत्र विषये भारतशासनस्य विशेषतः साहाय्यम-पेक्ष्यते । वस्तुतस्तु भारतशासनेनैव सुमहतः कार्यस्यास्य समारम्भः School of Oriental Studies, London इति संस्थाया आदर्शेन विधेयः ।

'विशाल'-भारतीयदृष्ट्या एवं क्रियते चेन्नूनं सर्व-स्मिन्नपि 'एशिया' महाद्वीपेऽस्याः संस्थायास्तद्‌द्वारा च भारतस्यापि बहुमानो गौरवं च भवितेति नो दृढो विश्वासः ।

## दैर्घकालिकः कार्यक्रमः

दैर्घकालिककार्यक्रमान्तर्गतानां शिक्षापद्धत्यादिविषयकविभागा-नामत्र विशेषव्याख्यानेनालम्, भाषणस्यास्यातिविस्तरभयात्, तेषां तात्कालिककार्यक्रमान्तर्गतत्वाभावाच्च ।

एतत्तु स्पष्टमेव यन्नूतनसंस्कृतशिक्षापद्धतेः पूर्णतः साफल्यं तैर्विभागैर्विना नैव संभवति ।

संक्षेपेणैतावदेव वक्तुं शक्यते यत्संस्कृतज्ञानां दृष्टिर्विशदा भवेत्, तेषामुपयोगिताया जीविकायाश्च क्षेत्रं देशे विदेशेषु च सुविस्तीर्णं विशेषतः संमानास्पदं च भवेदित्येतदर्थमेव विभागानामेतेषामावश्यकता नूनं क्रमशो भविष्यति।

( ५ )

## संस्कृतप्रसारसमितिः साहित्यसंमेलनस्य कर्त्तव्यं च

उपरिनिर्दिष्टरूपरेखानुसारेण भारतराष्ट्रस्याभिनवनिर्माणे सहयोगप्रदानस्य संस्कृतज्ञानां परमोत्कर्षस्य च लक्ष्येण आदर्शविद्यापीठस्य स्थापना, तस्य बुद्धिविवेकपूर्वकं साफल्येन संचालनं च नूनं भारतीयसंस्कृतेः संस्कृतस्य च पुनरभ्युत्थानार्थमेकं महदाभ्युदयिकमैतिहासिकं च पावनमनुष्ठानं भविष्यतीति नो विश्वासः। क्रमेण तमेव पन्थानमन्याः संस्कृतसंस्था ध्रुवमनुगमिष्यन्ति। छात्राणामधिकाधिका संख्या च संस्कृताध्ययनार्थं समुत्सुका भविष्यति।

परमत्र विषये जनतायाः संस्कृतं प्रति आकर्षणस्यानुरागस्य च वृद्ध्यर्थं विद्यते किंचिन्महत्कर्तव्यं संस्कृज्ञानाम्, अस्य सम्मेलनस्य च विशेषतः। तच्चैतत्

**संस्कृतभाषाया अध्ययने लेखने च यथा सारल्यमुपजायते, यथा च व्याकरणस्य नात्यधिकमपेक्षा भवति तथा सद्यः प्रयत्नो विधीयतामिति।**

सर्वथैवाभूतपूर्वं नूतनं वा एतत्प्रतिपादनमिति नैवात्र शङ्का कार्या।

अन्यभाषास्विव संस्कृतेऽपि व्याकरणदृष्ट्या, विशेषतः प्रयुक्ताप्रयुक्तशब्दराशिदृष्ट्या, शैलीदृष्ट्या च कालक्रमेण जायमानानि परिवर्तनानि कस्य नाम भाषातत्त्वविदो दृष्टिपथं नायान्ति। आस्तां तावद्वैदिकभाषाया वार्ता। पाणिनिमुनिकालादारभ्यैव संस्कृते कियती परिवृत्तिर्दृश्यते? उदाहरणार्थम्—

महता प्रयत्नेन पाणिनिमुनिना ग्रन्थीकृतस्य लकारार्थप्रकरणस्य, लौकिकस्वरप्रकरणस्य च चिरादेव विद्यते नैव कश्चिदपि प्रायोगिक उपयोगः।

नैकेऽपाणिनीयास्ताद्धिता अन्ये च प्रयोगाः प्रायेण दृष्टिपथमायान्ति प्रामाणिकेष्वपि ग्रन्थेषु। 'कालीन' शब्दोऽपाणिनीयोऽपि योगसूत्रव्यासभाष्ये प्रयुक्तो दृश्यते। 'अधीन' शब्दस्य स्वतन्त्रत्वेनापि प्रयोगोऽभ्यनुज्ञायतेऽमरसिंहेन। छप्रत्ययस्य ठगादीनां चापाणिनीयाः प्रयोगा बहुलमुपलभ्यन्ते। पञ्चवार्षिक, पाञ्चवर्षिक, पाञ्चवार्षिकेत्यादिशब्दानां साधुत्वासाधुत्वविवेकस्य विद्यते महत्यपेक्षाद्यत्वे।

तिङन्तप्रयोगाणां स्थाने निष्ठाप्रयोगस्य चिराय क्रमशः प्रवर्धमाना शैली कस्याविदिता?

किञ्च, विद्यते नूतनापि समस्या संस्कृतज्ञानां पुरस्तात्। नैकेषां नूतनातिनूतनविचाराणां कृते नूतनशब्दानां निर्माणमद्यत्व आवश्यकम्। आस्तां राष्ट्रभाषाया वार्ता। संस्कृतभाषाया अप्यभिनवविकासार्थमेतदावश्यकम्।

कादम्बर्यादीनामलंकारबहुला समासबहुला दुरूहा शैली जनतायां संस्कृतस्य प्रसारार्थं नोपयुज्यते। न चाप्यस्मत्संस्कृतेः प्रधान-ग्रन्थेषु महाभारतादिषु सा शैली समाद्रियते।

ततश्चास्मिन् संबन्धे सामयिक्याः परिस्थितेरावश्यकतायाश्चानुगुण्येन संस्कृतभाषायाः सर्वतो दिशं प्रगतिः प्रसारश्च भवेतामित्युद्देश्येन विशेषज्ञानां विदुषां सद्यः समितिरेका संस्थापनीया साहित्य-सम्मेलनेनेत्यस्माकं साग्रहं सनिर्बन्धं च प्रस्तावः।

## संस्कृतविश्वविद्यालयस्य प्रश्नो भारतशासनस्य कर्तव्यं च

प्रसङ्गेऽस्मिन् संस्कृतविश्वविद्यालयस्य स्थापनायाः प्रस्तावस्य विषयेऽपि, यस्य हृद्या वार्ता यदा कदा सर्वेषामस्माकं श्रुतिपथमायाति, कश्चिद्विचार आवश्यकः प्रतीयते।

नात्र सन्देहो यत् संस्कृतविश्वविद्यालयस्य स्थापनाया वार्तापि श्रूयमाणा संस्कृतज्ञानामस्माकं कञ्चिदवर्णनीयमन्तस्तोषं जनयति। तच्चैतत्सर्वथा स्वाभाविकमभिनन्दनीयं च।

कदाचिद् बहूनामेतदवगतं न भवेद् यत् सर्वतः प्रथममस्माभिरेवैष प्रस्ताव उपस्थापित आसीदुत्तरप्रदेशस्याधिकारिणां पुरः। प्रस्तावेन तेन प्रभावितैस्तैरधिकारिभिर्वर्षमेकं यावद् विशेषाधिकारिरूपेण नियुक्तैश्चास्माभिः सुप्रसिद्धस्य वाराणसेयराजकीयसंस्कृत-महाविद्यालयस्य संस्कृतविश्वविद्यालयरूपत्वापादनविषये योजनाप्येका संपूर्णा प्रस्तुतासीत् तेषां पुरस्ताद्।

तदेवमान्तरः संबन्धोऽस्माकं संस्कृतविश्वविद्यालस्य योजनया प्रस्तावेन च।

सत्यप्येवम्, संस्कृतज्ञानां वास्तविकहितदृष्ट्यैव, प्रश्नस्यास्य विषये गम्भीरचिन्तनस्यावश्यकता विद्यत इति प्रतीयते। तदत्र प्राप्तावसर एव कश्चिद् विचार उपस्थाप्यतेऽत्रभवतां शासनस्य च विमर्शार्थम्।

प्रश्नद्वयमत्र तावद् विचारणीयम्।

प्रथमम्, किं विशुद्धसंस्कृतविश्वविद्यालये तादृशमतिशयेनोदारं सर्वविधज्ञानविज्ञानप्रगतिसमुन्मुखं च वातावरणं भवितुमर्हति यादृशं वस्तुतो विश्वविद्यालयार्थमपेक्ष्यते? तादृशे हि वातावरणे कस्यापि विश्वविद्यालयस्य महत्त्वं सन्निविष्टं भवतीति मन्यन्ते विद्वांसः। किञ्च, कस्मिन्नपि वास्तविके विश्वविद्यालये तन्नाम्ना सह 'संस्कृते' त्यादिविशेषणस्य किं सार्थक्यमित्यपि विचारणीयं विद्यते।

द्वितीयप्रश्नस्ततोऽप्यधिकमावश्यकः। स चायम्।

भारतीयेतिहासस्य मध्ययुगात्परम्परया प्राप्तानां नानाविध-संकोचभावनानामद्यापि प्राधान्यं विद्यते संस्कृतविद्यालयेषु, राजकीये-ष्वराजकीयेषु च, इति पूर्वमवोचाम। अत एव लोकप्रसिद्धं प्रगति-पराङ्मुखं मध्यकालीनं वातावरणं तत्र दृश्यते प्रायेण।

ततश्च स्वाभाविक एष प्रश्नः। किं विशुद्धसंस्कृतविश्व-विद्यालयो **वास्तविकदृष्ट्या** संस्कृतज्ञानां हितावहो भवितुमर्हति? अर्हति चेत, कथम्? कैश्चोपायैः?

अद्यत्वे प्रगत्युन्मुखताया उदारबुद्धेश्च सर्वतः प्रथममपेक्षा संस्कृतज्ञेषु, न केवलं राष्ट्रस्य कल्याणार्थमेव, किन्तु तेषामेव सर्वक्षेत्रेषु समुन्नत्यर्थमपि ।

ज्ञानस्य सीमाया बन्धनं ज्ञानस्य विकासश्चेति विप्रतिषिद्धम् । सूर्यप्रकाशावरोधः पादपानामिव, विद्याप्रकाशावरोधो बुद्धीनां हितावहो न भवति । परं वस्तुतः संस्कृतज्ञानां हितदृष्टिरेवात्र परमं प्रमाणम् ।

देवानाम् 'आजिधावनम्' श्रुतिषु श्रूयते । वस्तुतो मानवजीवनमेवेदमाजिधावनम् । तत्र हि आजिगीषुभिरसंकीर्णं सर्वतो विस्तृतं क्षेत्रमपेक्ष्यते ।

तादृश एव विश्वविद्यालयः संस्कृतज्ञानां भवेदित्यस्माकमिततरामभीष्टम् ।

स्पष्टमेतद् यदतीव विशिष्टं महत्त्वं विद्यतेऽत्र विषये समुचितनिर्धारणस्य । ततश्चास्माकं विचारेण विशेषत आवश्यकमेतद् यद्भारतशासनेन सद्य एका समितिः शिक्षाविशेषज्ञानां स्थापयितव्या यैतद्विषयकं सर्वं वृत्तमुपलभ्य सम्यक् परीक्ष्य च स्वसिद्धान्तमस्मिन् विषय उपस्थापयेत् ।

सैव समितिः संस्कृतेन संबद्धेषु अधोनिर्दिष्टविषयेष्वपि परीक्षणपुरस्सरं स्वकीयं मतमाविष्कुर्यात्—

( १ ) भारतशासनेन देहल्याम् School of Oriental Studies, London इत्यस्या निदर्शनेन संस्थायाः स्थापनस्यावश्यकता ।

( २ ) भारतवर्षे विभिन्नाभिः संस्कृतानुसन्धानसंस्थाभिः क्रियमाणे कार्ये परस्परं सामञ्जस्यस्थापनम् ।

( ३ ) प्राचीनहस्तलिखितपुस्तकानां रक्षार्थं बृहतो राजकीयपुस्तकागारस्य देहल्यां स्थापना ।

## उपसंहारः

तदेवं भारतराष्ट्रस्य 'भारतीयसंस्कृतेः संस्कृतस्य संस्कृतज्ञानां च परस्परं सामञ्जस्येनैव समुन्नतेरादर्शं पुरस्कृत्य प्रस्तावितस्य विद्यापीठस्य रूपरेखामभिनवसंस्कृतशिक्षापद्धतेश्च दिक्प्रकारौ यथामति यथानुभवं च प्रदर्श्य अत्र विरम्यतेऽस्माभिः ।

उपसंहारे केवलमेतावदेव वक्तव्यं यद् भारतवर्षस्येतिहासे चिराय सोत्कण्ठमुदीक्षितः कालोऽयं समुपस्थितः । अस्मिन्नवसरे हि दिष्ट्या भारतीयसंस्कृतेः संस्कृतस्य च समुत्थानस्य वार्ता सर्वतो दिशं श्रूयते ।

सोऽयमतर्कितोपनतः शुभावसरो नैवोपेक्षणीयः ।

"अद्धा हि तद् यदद्य........अनद्धा हि तद् यच्छ्वः"

इति वै शातपथी श्रुतिराह ।

चिराय प्रसुप्तमस्माभिः । परं नायं निद्रातन्द्र्योः कालः ।

ततश्च "यो जागार तमृचः कामयन्ते (ऋग्० ५।४४।१४),

"उत्तिष्ठत जाग्रत प्राप्य वरान् निबोधत" (कठोप० १ ३।१४)

इति श्रुत्यनुसारं लोकस्य कालस्य च प्रगतिं, अभिनवभारतस्य चावश्यकता अनुरुध्य देववाण्याः समुन्नतौ तत्परैर्भाव्यमस्माभिः ।

अयमेव पन्था येन वयं संस्कृतद्वारा ऐतिहासिकपरम्परानुरूपं स्वकीयगौरवपदं प्राप्तुं शक्नुमो भूयोऽप्यभिनवे भारते। नूनं "नान्यः पन्था विद्यतेऽयनाय"।

ओं भद्राः सन्तु प्रशस्तयो
भद्रा वाचो वचोविदः।
जागृयाम पुरोहिताः॥

इति शम्



गुरुकुलकांगड़ी-विश्वविद्यालयस्य

४३तममहोत्सवस्य

सरस्वतीसंमेलनाधिवेशने

सभाध्यक्षस्य

ग्रन्थकर्तुः

# अभिभाषणम्

( ३।१।३।१९४५ ई० )

स्थाणुरयं भारहारः किलाभू-

दधीत्य वेदं न विजानाति योऽर्थम् ।

योऽर्थज्ञ इत् सकलं भद्रमश्नुते

नाकमेति ज्ञानविधूतपाप्मा ॥

यद् गृहीतमविज्ञातं निगदेनैव शब्द्यते ।

अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥

( निरुक्ते १।१८ )

## ब्रह्म वर्म ममान्तरम्

( अथर्व० १।१९।४ )

# वेदा अभिनवभारतं च

माम्या विद्वद्वर्याः प्रियब्रह्मचारिणश्च,

नूनमभूतपूर्वोऽयं समयः संसारस्येतिहासे। अदृष्टचरमहायुद्ध-कालरात्रिसंत्रस्तमखिलं जगद् भूयः शान्तिप्रभातमुपस्थितप्रायमभि-मन्यमानं नूलननूतनाभिराशाभिः साश्वासमुच्छ्वसदिव प्रतीयते। "जिव्री युवाना पितराकृणोतन"[1] ( ऋग्० १।११०।८ ) इत्यनुसारं जराजीर्णस्य भारतवर्षस्यापि कायकल्पेनाभिनवीकरणस्य चिराय सोत्कण्ठमुदीक्षितः कालः समासन्न इव। तदस्मिन्नभिनवे भारते भारतीयसंस्कृतेः प्रधानस्रोतसां वेदानां केन स्थानेन केन चोपयोगेन भवितव्यमित्येवाद्य प्राधान्येन वैदिकसाहित्यसमुद्धारार्थं संस्थापि-तस्यास्य विश्वविद्यालयस्य सरस्वतीसम्मेलनस्यावसरं किञ्चिद्वि-चार्यते।

कस्याप्यर्थस्योपादेयता तदुपयोगितामपेक्षते। उप-योगिता चोपादातुरादर्शानुगामिनीरावश्यकता अनुसरति।

---

१. हे ऋभवः! यूयं जिव्री जीर्णौ वृद्धौ पितरा मातापितरौ युवाना पुनर्यौवनोपेतौ अकृणोतन अकृद्वन्।

एतन्न्यायानुसारमभिनवभारतंस्यादर्शानामावश्यकतानां चानुकूल्येनैव वेदानामुपयोगितायाः स्थितेश्च स्वरूपविनिर्णयः कर्तुं शक्यत इति तां विधामाश्रित्यैव प्रकृतो विषयोऽद्य प्रपञ्चयिष्यते।

## वेदानां स्थितेः सिंहावलोकनम्

तत्रादौ वेदानामद्य यावत्स्थितेः किञ्चित्सिंहावलोकनमपेक्षितम्। तच्च क्रमिककालभेदेन प्रदर्श्यते।

### प्रथमः कालः

प्रथमं तावदायाति साक्षात्कृतधर्मणामृषीणां कालः। अस्मिन् हि काले वेदप्राणानां तेषां जीवनचर्यातो नितरामभिन्नैव वेदानां स्थितिरासीत्। अयातयामानि[1] हि वै तदा छन्दांसि बभूवुः। अग्निवाय्वादित्यादिदेवानां यदपि दार्ष्टिविषयिकं[2] कर्म, यच्चापि मनुष्यस्याध्यात्मिकं वृत्तं तदेव वेदानां प्रत्यक्षरूपत्वेन व्याख्यारूपत्वेन वा मन्यते स्म। किं बहुना, "वेदा जीवनं, जीवनं च वेदाः" इत्येव तेषाममायिनामृषीणां साक्षात्कृतधर्मतायाः स्वरूपमासीदिति प्रतीयते। अयमेवार्थः

---

१. यातयामः। यातो गतो याम उचितसमयो यस्य सः। जीर्णः, पर्युषितः। अयातयामानि अपर्युषितरूपाणि।

२. प्रत्यक्षत्वेनानुभूयमानम्।

"अग्निवायुरविभ्यस्तु[१] त्रयं ब्रह्म सनातनम्।
दुदोह यज्ञसिद्धयर्थमृग्यजुःसामलक्षणम्।" (मनु० १।२३)
इत्यादिवचसां संगच्छते।

## द्वितीयः कालः

ते पुनः साक्षात्कृतधर्माण ऋषयोऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्संप्रादुः। चिराय खल्वेषोपदेशपरम्परा प्रवृत्ते। एतन्मूलकमेव वेदानां 'श्रुतिः' इत्यपि नामान्तरम्। तस्या मन्त्रोपदेशपरम्पराया निर्वाहकेषु ये सत्त्वसंपन्नाः प्रज्ञावैशारद्यविशिष्टा यथानियमं वेदाभ्यासनिरता आसंस्तेऽर्थानुसन्धानपूर्वकमेव मन्त्रान् याज्ञिके कर्मकलापे प्रयुञ्जाना अथवा मन्त्रार्थाननुसृत्यैव श्रौतकर्माणि तन्वानाः[२] साक्षात्कृतधर्मताया आदर्शस्यैव यथासंभवं संरक्षणार्थमयतन्त।

---

१. "तिस्र एव देवता इति नैरुक्ताः। अग्निः पृथिवीस्थानः। वायुर्वेन्द्रो वान्तरिक्षस्थानः। सूर्यो द्युस्थानः। तासां माहाभाग्यादेकैकस्या अपि बहूनि नामधेयानि भवन्ति। अपि वा कर्मपृथक्त्वात्।" (निरुक्ते ७।५) इति नैरुक्तसिद्धान्तविधया सर्वेषामपि वैदिकमन्त्रैः स्तूयमानानां देवतानामग्न्यादित्रय एवान्तर्भावोऽवगन्तव्यः। शतपथब्राह्मणम् (११।५।८।१-३) अप्यत्रानुसंधेयम्।

२. "तदेतत्सत्यं मन्त्रेषु कर्माणि कवयो यान्यपश्यंस्तानि त्रेतायां बहुधा संततानि।" ( मुण्डकोपनिषद् १।२।१ ) इत्युपनिषदप्येतमेवार्थं ब्रवीति।
( त्रेतायां त्रयीसंयोगभूतायां हौत्राध्वर्यवौद्गात्रप्रकारायामिति तट्टीका )

अस्मिन् हि काले मन्त्रार्थानाश्रित्य गौणरूपेणैव कर्मकाण्डस्य प्रवृत्तिरासीत्। तदानुकूल्येनैव च तस्मिन् क्रियमाणे कर्मकाण्डस्य साफल्यममन्यत। अत एव "एतद्वै यज्ञस्य समृद्धं यद् रूपसमृद्धं यत्कर्म क्रियमाणमृग् यजुर्वाभिवदति" (निरुक्ते १।१६), "अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम्" (ऋग् १०।७१।५), "सर्वा विशः कल्पन्ते, कल्पते यज्ञोऽपि, तस्यै जनतायै कल्पते यत्रैवं विद्वान् होता भवति" (ऐतरेयब्राह्मणे १।६), "वाचा च हि मनसा च यज्ञो वर्तते" (मननं मनो ज्ञानमर्थावबोध इत्यभिप्रायः। ऐ०ब्रा० ५।३३) इत्यादिश्रुतिषु अर्थज्ञानपूर्वकमेव मन्त्राणां कर्मसूपयोगः श्रेयसे कल्पत इत्ययमेवार्थः सुबहुशः प्रतिपाद्यते।

किञ्च, गौणत्वेन प्रवृत्तस्यापि कर्मकाण्डस्यास्मिन् काले सार्थक्यं वैदिकोदात्तभावनानां निर्वाहकत्वेन तद्द्वारा जनताया राष्ट्रस्य च समुन्नतेः साधनत्वेनैव मन्यते स्म। "न वा अरे कर्मकाण्डस्य कामाय कर्मकाण्डं प्रियं भवति, जनताया राष्ट्रस्य तु कामाय कर्मकाण्डं प्रियं भवति' इतीव तात्कालिकः सिद्धान्त आसीत्।

तात्कालिकीनामुदात्तभावनानामुदाहरणानि कर्मकाण्डविधायकेषु ब्राह्मणादिग्रन्थेष्वेव प्रायेणोपलभ्यन्ते। तद्यथा—

ईश्वरो हास्य वित्ते देवा अरन्तोर्यद्वा अयमात्मनेऽलममंस्तेति

(ऐ० ब्रा० ३।४८)

स्वीयवर्तमानावस्थायामसन्तुष्टो यः समुत्कृष्टतरावस्थाया अवाप्तये यतते तस्यैव देवाः सहाया भवन्तीति भावः।

नानाश्रान्ताय श्रीरस्तीति रोहित ! शुश्रुम ।
पापो नृषद्वरो जन इन्द्र इच्चरतः सखा ॥ चरैवेति ।[1]
(ऐ० ब्रा० ७।१५)

चरन्वै मधु विन्दति चरन्स्वादुमुदुम्बरम् ।
सूर्यस्य पश्य श्रेमाणं यो न तन्द्रयते चरन् ॥ चरैवेति ।[2]
(ऐ० ब्रा० ७।१५)

भद्रादभि श्रेयः प्रेहि (ऐ० ब्रा० १।१३)

कल्याणादुत्कृष्टतरं कल्याणमाप्नुहीत्यर्थः ।

तस्मादाहुर्न सायमतिथिरपरुध्य इति (ऐ० ब्रा० ५।३०)।

अपरुध्यो निराकरणीयः ।

राष्ट्राणि वै विशः (ऐ० ब्रा० ८।२६)।

जनताया उन्नत्यवनत्यनुगामिन्यौ वै राष्ट्रस्योन्नत्यवनती भवत इत्यर्थः ।

ब्रह्म च क्षत्रं च संश्रिते (ऐ० ब्रा० ३।११)।

संश्रिते परस्पराश्रिते इत्यर्थः ।

ब्रह्मणि खलु वै क्षत्रं प्रतिष्ठितम् । क्षत्रे ब्रह्म (ऐ० ब्रा० ८।२)।

## तृतीयः कालः

परं कालान्तरेण "अधर्मेण जितो धर्मः प्रवृत्तमधरोत्तरम्"

---

१, नानाश्रान्ताय । न अनाश्रान्ताय । नृषद्वरः । बन्धुगृहेष्वेव सर्वदावस्थितो वर उत्कृष्टोऽपि । चरत उद्यमशीलस्य ।

२. मधु उदुम्बरं च भोगविशेषस्योपलक्षणम् । श्रेमाणं श्रेष्ठत्वम् । तन्द्रयतेऽलसो भवति ।

इत्युक्त्यनुरूपं सर्वमेव पूर्वोक्तं विपर्यस्तम्। तथा च, मन्त्रोपदेश-परम्परानिर्वाहका एव क्रमशः

"आलस्यादन्नदोषाच्च मृत्युर्विप्राञ्जिघांसति" ( मनु० ५।४ )

इत्यनुसारमालस्यादिदोषोपहताः प्रज्ञामान्द्यहेतोर्मन्त्रार्थज्ञानाय ग्लायन्तः, स्थाणव इव केवलं भारहाराः सन्तः,

"अधेन्वा चरति माययैष वाचं
शुश्रुवाँ अफलामपुष्पाम् ( ऋग्० १०।७१।५ )

इत्येवं मायिनो हठान्निगदवादिनो याज्ञिकत्वाभिमानिनः संवृत्ताः।

"अनर्थका हि मन्त्राः।" ( निरुक्ते १।१५ ), "मन्त्राश्च कर्मकरणाः" ( आश्वलायनश्रौतसूत्रे १।१।२१ ) इति वै तेषां सनिर्बन्धमाघोषितः सिद्धान्त आसीत्।

"यद् गृहीतमविज्ञातं निगदेनैव[1] शब्द्यते।

अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित्" ( निरुक्ते १।१८ )

'अर्थज्ञानं विना हि प्रयुक्ता मन्त्ररूपा वागपुष्पेत्यभिधीयते, नैव च सा स्वाभीष्टानर्थान्दुग्धे' इत्येवं शतशः स्पष्टमर्थज्ञानमहिम्नः प्रतिपादकेषु प्रमाणेषु विद्यमानेष्वपि मन्त्रानर्थक्यप्रतिपादनपर एष सिद्धान्तो नूनं लोकप्रतारणार्थं स्वार्थसाधनतत्परैः स्वकीयाज्ञानप्रच्छादनबुद्ध्यैव प्रवर्त्तित आसीदिति प्रतीयते।

अर्थज्ञाननिरपेक्षो हि अज्ञो लोकः सुखं शब्दप्रमाणजालैर्निगडयितुं शक्यते।

---

१. निगदेनैव पाठमात्रेणैव।

मन्त्रार्थानभिज्ञा ऋत्विजस्तस्करा इव यजमानस्य वित्तमादाय द्रवन्ति तं च पापगर्ते प्रक्षिपन्तीति सार्वजनीनः सार्वभौमश्च सिद्धान्तः श्रुतावेवासकृत्स्पष्टं प्रतिपादितो विद्यते। तथा चैतरेयिणां श्रुतिः—

यथा ह वा इदं निषादा वा सेळगा वा पापकृतो वा वित्तवन्तं पुरुषमरण्ये गृहीत्वा कर्तमन्वस्य वित्तमादाय द्रवन्ति। एवमेव त ऋत्विजो यजमानं कर्तमन्वस्य वित्तमादाय द्रवन्ति यमनेवंविदो याजयन्ति ( ऐतरेयब्राह्मणे ८।११ )

सेळगाश्चौराः। कर्तमन्वस्य गर्ते प्रक्षिप्येत्यर्थः।

किञ्च। वर्ज्यानृत्विजः, ऋत्विजां कर्तव्यं च प्रतिपादयन्ती चैव श्रुतिराह—

त्रीणि ह वै यज्ञे क्रियन्ते जग्धं गीर्णं वान्तम्। तद्धैतदेव जग्धं यदाशंसमानमार्त्विज्यं कारयत उत वा मे दद्यादुत वा मा वृणीतेति। तद्ध तत्पराङेव यथा जग्धम्। न हैव तद्यजमानं भुनक्ति। अथ हैतदेव गीर्णं यद् बिभ्यदार्त्विज्यं कारयत उत वा मा न बाधेतोत वा मे न यज्ञवेशसं कुर्यादिति। तद्ध तत् पराङेव यथा गीर्णम्। न हैव तद्यजमानं भुनक्ति। अथ हैतदेव वान्तं यदभिशस्यमानमार्त्विज्यं कारयते। यथा ह वा इदं वान्तान्मनुष्या बीभत्सन्त एवं तस्माद्देवाः। तद्ध तत्पराङेव यथा वान्तम्। न हैव तद्यजमानं भुनक्ति। स एतेषां त्रयाणामाशां नेयात्। ( ऐ० ब्रा० ३।४६ )

पराङ् निकृष्टम्। यज्ञवेशसं यज्ञविघातम्। अभिशस्यमानः। योऽयथाचारेण सर्वैर्निन्द्यते।

नूनमेषा श्रुतिः सदसद्विवेकपराङ्मुखान् धनार्जनलम्पटान् परवञ्चकानृत्विज एवाभिलक्ष्यीकृत्य प्रवृत्ता ।

अस्मिन् हि काले कर्मसु प्रयुक्तमन्त्राणामर्थज्ञानस्योपेक्षया शुष्ककर्मकाण्डस्यैव प्राधान्यं तत्र प्रयुज्यमानमन्त्राणां च गौणत्वं सप्रयत्नमास्थापितं निगदवादिभिर्वेदजडैर्याज्ञिकंमन्यैः । निगदमात्रेण वेदमधीत्य त्वरिता वक्तार[१] एते सनियमं वेदाभ्यासप्रवृत्तेरप्युच्छेदकराः संजाताः । "अन्धेनैव नीयमाना यथान्धाः" इत्यन्धपरम्परान्यायानुरूपमज्ञानगर्ते पतिता आर्यजनतापि शनैः शनैर्वैदिकसंस्कृतेस्तदुदात्तभावनाभ्यश्च सुदूरमुत्सारिता ।

अस्मिन्नेव काले नीरसं शुष्कं वैदिकं कर्मकाण्डमवैदिकेन कर्मकाण्डेन समाक्रान्तं प्रायेण जनताया: प्रतारणफलकमेव संजातम् । "मन्त्राः कर्मकरणाः", "वेदा हि यज्ञार्थमभिप्रवृत्ताः" सिद्धान्तमिममादाय स्वाभिधेयार्थनिरपेक्षया प्रक्षिप्तबाह्यकर्मकाण्डेऽपि शान्त्यादिग्रहशान्त्यादिरूपे वैदिकमन्त्राः प्रायुज्यन्त ।

एवं चान्यदेशेष्विव भारतवर्षेऽपि अज्ञानोपबृंहिता परमतारणोन्मुखी प्रवृत्तिरेव नूनं शुष्ककर्मकाण्डस्यानन्तराशेः प्रसवभूमिः ।

---

१. तथा च पातञ्जलं महाभाष्यम्—"वेदमधीत्य त्वरिता वक्तारो भवन्ति । वेदान्नो वैदिकाः शब्दाः सिद्धा लोकाच्च लौकिकाः । अनर्थकं व्याकरणमिति ।" ( पस्पशाह्निके ) ।

## तदेतदन्धकारयुगं वैदिकेतिहासपरम्परायाम् ।

प्रथमं त्वत्र काले वेदमन्त्राणामर्थज्ञानप्रवृत्तिरेव प्रायेण विनष्टा । मीमांसादिशास्त्रेषु वेदचर्चाप्रसङ्गे प्रायेण ब्राह्मणवचनानामेवोद्धरणमेतदेव द्योतयति । वैदिकसंहिताभाष्येषु मन्त्राणां व्याख्यायां कृतायामपि 'मन्त्राः कर्मकरणाः' इति पक्षमाश्रित्य कृता सा कर्मकाण्डापेक्षया मन्त्राणां गौणत्वमेव ख्यापयति ।

वस्तुतो वेदमन्त्राणां महत्त्वं न तेषां तत्तत्कर्मणि विनियोगमूलकम्, किन्तु स्वप्रतिपादितार्थोत्कर्षमूलकमेव । अत एव तेषां कर्मसु विनियोगः, अत एव च वस्तुतस्तत्तत्कर्मणः सार्थक्यम्—इत्येष तात्त्विकः सिद्धान्तस्तु समूलमुपेक्षित एव प्रायेण वेदभाष्यकारैः ।

वस्तुतः स्वहिताहितमनवेक्षमाणैरेतैर्याज्ञिकंमन्यैर्वेदाभ्यासः स्वयमेव न त्यक्तः, किन्त्वन्यैरपि स परित्याजितः । एतस्यैवायं दुष्परिणामो यद्वैदिके पथि खिलीभूते, वैदिकोदात्तभावनासु च विनष्टप्रायासु, परितो विजृम्भमाणा अनार्यभावना आर्यजातेर्जीवनस्रोतांस्यपवारयन्त्यो देशप्रगतेर्मार्गेषु चिराय कण्टकीभूताः संतिष्ठन्ते ।

## अस्माकं कर्तव्यम्

आर्यजातेः सैषा दुरवस्था एताश्चानार्यभावनाः पुनरपि वैदिकोदात्तभावनानां जनतायां प्रचारणेनैव समूलमुन्मूलीकर्तुं शक्यन्ते । तच्चैतद् वेदानां स्वाध्यायप्रवृत्तेर्जनतायामुद्बोधनेन, सततम् अप्रबुद्धान् आस्कन्दितुमुद्युक्तायाः प्रायेण नैतिकभावनाभङ्गरसिकाया

अतिमात्रं प्रवृद्धाया निरर्थकशुष्ककर्मकाण्डपिशाचिकाया अव-खण्डनेन, पुनरपि कर्मकाण्डराशेर्जनताप्रतारणामूलकस्वरूपमपनुद्य प्राचीनकाल इव वैदिकोदात्तभावनानां पोषकरूपत्वापादनेन, 'कर्म-काण्डं तत्सहकारिण ऋत्विगादयश्च जनताहितसंपादनार्थं न तु जनता तदर्थम्'[१] इति बुद्धेः सर्वत्रोद्भावनेन चैव संभवति।

किंच, जीवनस्फूर्तिप्रदोपदेशगभीरैर्वेदमन्त्रैर्होमादिकरणे न तेषां वास्तविकी उपयोगिता, किन्तु निरन्तरमसूढेन सोत्साहेन सश्रद्धेन च चेतसा तदर्थमनन एव—वेदविषय एतादृशविचाराणां प्रचार एव चिराय निरर्थककर्मकलापपाशैर्निगडितां भारतीयार्यजनतां धार्मिक-दृष्ट्या नैतिकदृष्ट्या च समुन्नतिपथं नेतुं प्रभवति।

## वैदिकोदात्तभावनानां निदर्शनानि

वैदिकोदात्तभावनाविषयमवलम्ब्य अतिप्रपञ्चनस्य नायमवसरः। स्वतन्त्रतयैव प्रतिपादनीयोऽयं विषयः। तथापि चिरायावनति-गर्ते पतिताया विशीर्णसर्वगात्राया निराशापाशेन निगडिताया अन्याभिश्चानार्यजुष्टाभिरस्वर्ग्याभिर्भावनाभिरभिभूताया भारतीय-

---

१. तु० "यजमानो वै यज्ञः" (ऐ० ब्रा० १।२८)। "आत्मा वै यज्ञस्य यजमानोऽङ्गानि ऋत्विजः" (शतपथब्राह्मणे ६।५।२।१६)। "यत्र क्व च यजमानवशो भवति, कल्पत एव यज्ञोऽपि। तस्यै जनतायै कल्पते यत्रैवं विद्वान् यजमानो वशी यजते।" (ऐ० ब्रा० ३।१२)

जनतायाः समुद्धारार्थं वैदिकोदात्तभावना[1] एव प्रथम उपाय इति कैश्चिदेव निदर्शनैरत्र प्रदर्श्यते । तथा हि—

## १—समष्टिभावना

कस्याविदितं यद्भारतीयजनतायां साङ्घिकशक्त्यै कुठारीभूता चिराय रूढमूला वैयक्तिकभावना । धार्मिकक्षेत्रे राजनीतिकक्षेत्रे सामाजिकजीवने वा सर्वत्रापि दृष्टदुष्टप्रभावा सा तस्या मूलानि कृन्तति । तस्या उच्छेदनार्थं समष्टिभावनया राष्ट्रभावनया च ओतप्रोताः "सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम्... (ऋग्० १०।१९१।२)", "समानो मन्त्रः समितिः समानी... (ऋग्० १०।१९१।३)", "आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम् आ राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायताम्... (यजु० २२।२२)", एतादृश्यो वैदिकभावना एव जनतामनःसु प्रविष्टाः सुतरां प्रतीकारः । किंच, "धियो यो नः प्रचोदयात्" (यजु० ३।३५), "यद्भद्रं तन्न आसुव" (यजु० ३०।३), "अग्ने नय सुपथा राये अस्मान्" (यजु० ४०।१६) इत्येवं प्रायेण निरपवादं बहुवचनेन युक्ताः प्रार्थनाः समष्टिभावनाया एव वेदेषु स्वाभाविकत्वमाख्यापयन्ति ।

## २—कल्याणभावना

एवमेव प्रायेण सुखावाप्तिदुःखहानिभावने एवाश्रित्य प्रचलितस्य

---

१. वैदिकोदात्तभावनानां विषये विस्तरेण विचारस्तु ग्रन्थकर्तुः 'भारतीयसंस्कृति का विकास, प्रथमभाग, वैदिकधारा' ग्रन्थे द्रष्टव्यः ।

हिन्दुधर्मस्य साक्षादसाक्षाद्वा दुष्प्रभावोऽस्माकं वैयक्तिकजीवने सामाजिकजीवने च कस्याविदितो भवेत्। ऐन्द्रियकता, लोकायतता, स्वकर्तव्यपराङ्मुखता, तत्तत्फलकामनया विभिन्नदेवापदेवानामुपासना, मिथ्यासंन्यासः—सर्वमेतत्तद्दुष्प्रभावमूलकमेव। एतस्या अनास्थायाः प्रतीकारो वैदिक्या भद्रभावनयैव कर्तुं सुशकः।

"भद्रं कर्णेभिः शृणुयाम देवाः" ( यजु० २५।२१ )

"यद्भद्रं तन्न आसुव" ( यजु० ३०।३ )

"भद्रं जीवन्तो जरणामशीमहि" ( ऋग्० १०।३७।६ )।

इत्येवं शतशः स्पष्टमाम्नाता भद्रभावनैव श्रेयःशब्दवाच्या सुखदुःखभावने अतीत्य अथवा 'सुखदुःखे समे कृत्वा' प्राणपणेनापि मनुष्यं स्वकर्तव्यपालनपरायणं विधातुं क्षमते। सैषा भद्रभावना यद्वा कल्याणभावनैव, वस्तुतोऽमृतत्वभावना। एषैव निःश्रेयसभावना।

## ३—आशावादस्य भावना

चिराज्ञानाविषसंतापैः परिपीडिताया आर्यजातेर्नैराश्यभावना स्वभाव इव जीवनस्य प्रायः प्रतिक्षेत्रे लब्धपदा दृश्यते। 'असारः संसारः, सर्वथैव हेयः, कारागारसदृशो बन्धस्थानम्, जीवनं दुःखमयं क्षणभङ्गुरं च।' तथा

अभ्रमध्ये च पश्यन्ति चञ्चलां विद्युतां गतिम्।
क्षणां दृष्ट्वा च नश्यन्ति तथा संसारिणो जनाः॥

इत्यादिभिर्हृदुल्लासहरैः सिद्धान्तैः प्रायेण व्याप्तमिवास्मदीयमावरका-

लिकं धार्मिकमपि वाङ्मयम्। अस्माकं विद्वत्सु साधुसमाजे च दृश्यमानं वैराग्यमपि प्रायेण नैराश्यस्यैवापरं नाम। एतत्प्रभावेणैवास्माकं क्षमादयासन्तोषप्रभृतयोऽप्युदात्तगुणा दैन्यभयालस्यादिरूपेण विकृतिमापादिता इव दृश्यन्ते।

तदेतस्या नैराश्यभावनायाः प्रतीकारः

विश्वदानीं सुमनसः स्याम
पश्येम नु सूर्यमुच्चरन्तम् ( ऋग्० ६।५२।५ ),
इन्द्र त्वोतास आ वयं वज्रं घना ददीमहि।
जयेम सं युधि स्पृधः॥ ( ऋग्० १।८।३ ),
महत्वं नमन्तां प्रदिशश्चतस्र-
स्त्वयाध्यक्षेण पृतना जयेम ( ऋग्० १०।१२८।१ ),
अदीनाः स्याम शरदः शतं
भूयश्च शरदः शतात् ( यजुः ३६।२४ ),
रोहेम शरदः शतम्। पूषेम शरदः शतम्।
भवेम शरदः शतम्। भूयेम शरदः शतम्।
भूयसीः शरदः शतात्॥ ( अथर्व० १९।६७।४-८ )

इत्यादिभिराशावादभरिताभिर्भावनाभिरेव सुतरां कर्तुं पार्यते।

तदेतत्सर्वं वैदिकसाहित्यस्य विशेषतश्च वेदानामध्ययनाध्यापनप्रवृत्तेः श्रवणप्रवचनप्रवृत्तेश्च प्रोद्बोधनेन, वैदिकोदात्तभावनानां चाबालवृद्धमापामरप्रान्तं च, न केवलं निरर्थकप्रायेणोपदेशेन, किन्तु कर्मणाचारेण निदर्शनेन च हृदयंगमतापादनेनैव साधयितुं शक्यते।

परं हन्त ! वेदनामकीर्तनमारटन्तोऽपि, 'वेदानामध्ययनमध्यापनं श्रवणं श्रावणं च परमो धर्मः' इत्येवमनवरतमितस्ततो घोषयन्तोऽपि, मन्त्रार्थाविबोधस्तु दूरत एवास्ताम्—मन्त्राणां शुद्धोच्चारणेऽपि पङ्के गाव इवाद्यापि सीदन्तो वयं पूर्वोक्तेभ्यो निगदपाठिभ्योऽप्यपकृष्टां पदवीं भजामहे। तदनुकरणशीलाश्च वयं जनताप्रतारणोन्मुखा भारतीयेतिहासे चिराय दृष्टदुष्टप्रभावस्यापि अतिमात्रं प्रवृद्धस्य कर्मकाण्डस्य प्रचारणेन अर्थज्ञानमनपेक्ष्यैव मन्त्रजातैरग्नौ धनराशीन् भस्मसात्कुर्वन्तो नात्मग्लानिमनुभवामः। विस्मरामश्च यदभिनवे भारते वेदानामुपयोगिताया हृदयंगमता नैवमापादयितुं शक्यते।

समयोऽयं यदद्याप्यत्र विषये सावहितैर्भाव्यमस्माभिः। ततश्च ये वेदेषु श्रद्धालवस्तेषामेतत्कर्तव्यं यत्तैरभिनवभारतस्यावश्यकता आदर्शांश्चाकलय्य इतिहासतोऽपि च शिक्षामङ्गीकृत्य वृद्धाया मातृभूमेरभिनवीकरणे दृढाध्यवसायैरुदात्तवैदिकभावनानाम् आपूरितदिगन्तर उच्चैर्घोष उपस्थापयितव्यः।

प्रार्थना च विधेया—

ॐ सह नाववतु सह नौ भुनक्तु सह वीर्यं करवावहै।
तेजस्वि नावधीतमस्तु मा विद्विषावहै।

॥ इति शम् ॥

---

( पृ० २७७ )



डाक्टर ए० वेनिस,

प्रिंसिपल, गवर्नमेंट संस्कृत कालेज, बनारस, १८८८–१९१८

अखिलभारतीयस्य

आर्य(हिन्दू)धर्मसेवासङ्घस्य

समाश्रयेण

कलकत्तानगरे प्रवृत्ते

गीताजयन्ती-महोत्सवे

सभापतेर्

ग्रन्थकर्तुः

# अभिभाषणम्

११ शु० मार्गशीर्षे २००२

( १५।१२।१९४५ ई० )

# परमतत्त्वमहं नतोऽस्मि

व्याप्य स्थितं त्रिभुवनं परितोऽप्रमेयं
पुण्यं परं परमनिर्वृतिधाम सत्यम् ।
पापापहं त्रिविधतापहरं वरेण्यं
शान्तं शिवं परमतत्त्वमहं नतोऽस्मि ॥१॥

यस्यास्ति वाङ्मनसयोर्महिमा न गम्यो
लोकानतीत्य निखिलानपि संस्थितं यत् ।
भूत्वा यतो विलयमेति च यत्र विश्वं
तच्छाश्वतं किमपि तत्त्वमहं नतोऽस्मि ॥२॥

( ग्रन्थकर्तुरमृतमन्थनात् )

---

ॐ

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः ।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम ॥

( भगवद्गीता १८।७८ )

# भगवद्गीतायाः स्वरूपम्

देव्यः सज्जनाश्च !

'गीताजयन्ती' महोत्सवस्य शुभावसरेऽस्मिन् सभापतिपद-ग्रहणाय निमन्त्रितोऽहं नूनमेतस्य समारम्भस्य संयोजकमहानुभावान् प्रति अनुगृहीतमात्मानं मन्ये । नाहं गम्भीरस्य गीताशास्त्रस्य पारगो विद्वान्, न चापि तस्य दुर्गममार्गस्य सफलो यात्री । तथापि, प्राप्तवानस्मि गीतायाः स्वजीवनेऽद्वितीयं प्रकाशं प्रेरणाञ्चाहम् । विद्यते तस्या उपदेशे मदीया श्रद्धा; आत्मानं च तस्यास्तुच्छमेकं साधकं मन्ये । ममैषा दृढा धारणा यत् केवलमार्यधर्मस्य पुनरभ्युत्थानार्थमेव, किन्तु समस्तमानवसमाजस्य कल्याणार्थमपि, तस्या आवश्यकता विद्यते । अत एव कारणान्निमन्त्रणमेतत्कर्तव्यबुद्ध्यैव स्वीकृतवानहम् ।

रत्नगर्भाया अस्या भारतभूमेरथवा वीरप्रसविन्या विश्वविजयिन्या आर्यजातेर्दुर्भाग्यमेतद् यत्सा स्वकीयानि बहूमूल्यान्यनुपमरत्नानि विस्मृत्य, तेषां स्वरूपं वा अनवबुध्य, संसारे दीनेव हीनेव भिक्षुकीव वा दरीदृश्यते। तस्या दशा नूनं तस्य गृहस्थस्येव यो वस्तुतो धनवानपि स्ववंशपरम्पराप्राप्तं निधिं विस्मृत्य, अज्ञानवशाद्वा हीरकमणीन् काचस्य खण्डानिव व्यवहरन्, आत्मानं दरिद्रं दीनं च मन्यते। उदात्तस्यार्यधर्मस्योपदेष्टारोऽस्माकं वेदादिनिधय एतादृशीमेव दुरवस्थां भजन्ते। प्रथमं तु ते विस्मृता एवास्माभिः, न चेत्तेषां दुरुपयोग एव चिरात् क्रियतेऽस्माभिः। श्रीमद्भगवद्गीतापि तेषामेव सर्वश्रेष्ठरत्नानामेकं रत्नम्। अविस्मृतत्वेऽपि तस्य, नैव तस्य पूर्णरूपेण सदुपयोगः कृतोऽस्माभिः। **अत्रोऽत्र गीतायाः स्वरूपमुपयोगं चैवाधिकृत्य काचिन्मीमांसाद्य प्रस्तूयते।**

चिरकालादेव गीतायाः स्वरूपविषये विभिन्नमतानां बाहुल्यमिति नाविदितं विदुषाम्। विभिन्नमतान्यवलम्ब्य निर्मितानि यावन्ति भाष्याणि टीकाश्च गीताया उपलभ्यन्ते, प्रायेण नैव तावन्ति अन्यस्य कस्यापि ग्रन्थस्य भवेयुः। प्रायेण प्रत्येकं संप्रदायस्य प्रवर्त्तकैरनुयायिभिर्वा आचार्यैर्विद्वद्भिश्च गीतायास्तात्पर्यं स्वस्वसंप्रदायस्यानुकूल्येन प्रदर्शयितुं प्रयतितम्। नूनमेतद् गीतायाः सर्वसम्मतं महत्त्वं स्पष्टीकरोति; परं तदेव गीतायाः स्वाध्याये जटिलां समस्यां तटस्थस्य जिज्ञासोः पुरस्तादुपस्थापयति।

तदत्र गीतायाः पृष्ठभूमेरैतिहासिकभित्तेर्वा परिज्ञानमेव प्रायेण समस्याया एतस्याः समाधाने नः शरणमिति प्रतीयते। गीता-सदृशस्य महतः शास्त्रस्यैतिहासिक आधारो युद्धक्षेत्रे समुत्पन्ना अर्जुनस्य संशयात्मकतैव, न तु तात्कालिकी सामाजिकी धार्मिकी वा प्रवृत्तिरवस्था वेत्येतन्मतं तु केवलमात्मप्रवञ्चनैव। संसारे कस्या-प्येतादृशस्य ग्रन्थस्यैतिहासिकी भित्तिः केवलमेकव्यक्तिसापेक्षा भवेदिति नैव युज्यते। कापि विस्तृता कार्यकारणपरम्परा हि प्रायेण जगतीतिहासस्य घटनानामुद्भवं स्वरूपं चापि निर्धारयति। अत एव गीतायाः सिद्धान्तानां विचाराणां वा वैशिष्ट्यस्य साम-ञ्जस्यस्य चावगत्यै तात्कालिकीनां समाजगतप्रवृत्तीनां स्वरूपस्य ज्ञानमावश्यकम्। तच्च गीताया एवाध्ययनेन स्पष्टीभवति। उदाहरणार्थम्, अधोनिर्दिष्टवचनान्येव तावदत्र विचार्यन्ताम्—

( १ )

ईश्वरोऽहमहं भोगी सिद्धोऽहं बलवान् सुखी॥
आढ्योऽभिजनवानस्मि कोन्योऽस्ति सदृशो मया।
यक्ष्ये दास्यामि मोदिष्य इत्यज्ञानविमोहिताः॥
आत्मसंभाविताः स्तब्धा धनमानमदान्विताः।
यजन्ते नाम यज्ञैस्ते दम्भेनाविधिपूर्वकम्॥
(१६।१४, १५, १७)

यामिमां पुष्पितां वाचं प्रवदन्त्यविपश्चितः।
वेदवादरताः पार्थ! नान्यदस्तीति वादिनः॥

कामात्मानः स्वर्गपरा जन्मकर्मफलप्रदाम् ।
क्रियाविशेषबहुलां भोगैश्वर्यगतिं प्रति ॥
(२।४२-४३)

एवं त्रयीधर्ममनुप्रपन्ना
गतागतं कामकामा लभन्ते ॥ (९।२१)

( २ )

अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः ।
दम्भाहंकारसंयुक्ताः कामरागबलान्विताः ॥
कर्षयन्तः शरीरस्थं भूतग्राममचेतसः ।
मां चैवान्तःशरीरस्थं तान् विद्ध्यासुरनिश्चयान् ॥
(१७।५-६)

( ३ )

न कर्मणामनारम्भान्नैष्कर्म्यं पुरुषोऽश्नुते ।
न च संन्यसनादेव सिद्धिं समधिगच्छति ॥
न हि कश्चित्क्षणमपि जातु तिष्ठत्यकर्मकृत् ।
कार्यते ह्यवशः कर्म सर्वः प्रकृतिजैर्गुणैः ॥
कर्मेन्द्रियाणि संयम्य य आस्ते मनसा स्मरन् ।
इन्द्रियार्थान् विमूढात्मा मिथ्याचारः स उच्यते ॥
(३।४-६)

अनाश्रितः कर्मफलं कार्यं कर्म करोति यः ।
स संन्यासी च योगी च न निरग्निर्न चाक्रियः ॥
(६।१)

काम्यानां कर्मणां न्यासं संन्यासं कवयो विदुः।
सर्वकर्मफलत्यागं प्राहुस्त्यागं विचक्षणाः ॥
(१८।२)

प्रमाणेभ्य एतेभ्यः स्पष्टमेतत्प्रतीयते यद् गीताया उपदेशस्य तात्कालिकं विशिष्टं कारणं, यत्रैकतस्तस्मिन् समये समाजे व्याप्ता अत्यधिककर्मकाण्डस्य प्रवृत्तिरासीत्, तत्रापरतः कर्मकाण्डमात्रं तिरस्कुर्वती मिथ्यासंन्यासस्य प्रवृत्तिरथवा घोरशारीरकष्टरूपा तपसः प्रवृत्तिरेवासीत्।

नात्र संदेहो यत् सामान्येन प्रवृत्तय एताः स्वस्वपरिधौ मनुष्यस्याध्यात्मिकसमुन्नतौ साहाय्यं कर्तुं शक्नुवन्ति; तथापि संसारस्य विभिन्नधर्माणामितिहासस्यात्र साक्ष्यं यद्रजस्तमोभ्यामभिभूतेषु मनुष्येषु अतिमात्रं लब्धप्रसरा एता एव प्रवृत्तयः स्वार्थबुद्ध्यविवेकदम्भमानप्रमादालस्यहेतुभ्यः शनैः शनैर्विकृतं रूपमुपाददते।

भारतवर्षस्यैवेतिहासे तावत्पातनीया दृष्टिर्यज्ञादिकर्मकाण्डस्य प्रारम्भातिरेकयोः।

योऽयं कर्मकाण्डः प्रारम्भावस्थायां मानवजीवनस्य यावत्कर्तव्यकर्मणां प्रतीकरूपेणैव समाजे उदात्तानामार्यभावनानां पोषक आसीत्, स एव कालक्रमेण यजमानानामृत्विजां च निम्नानाम्, गीतानुसारम् 'आसुरीणाम्' वा, वासनानां तृप्तेः साधनभूते नीरसे निष्प्राणे शुष्के च क्रियाकलापे परिवर्तितोऽभूत्।

एतस्मिन् शुष्क आदर्शहीने च कर्मकाण्डेऽन्धश्रद्धाया एवैष दुष्परिणामो यच्चिराय विश्वविजयिन्यामार्यजातौ वीरता, कर्तव्यनिष्ठा, पराक्रमः, आशावादः—इत्येतादृशीनामुदात्तभावनानां स्थानं क्लैव्यम्, कर्तव्यभीरुता, दैन्यम्, निराशावादः—एतत्सदृशीभिरनार्यभावनाभिरपहृतम्, यत्रापि जनतायां मूढग्राहाणामन्धविश्वासानां च साम्राज्यमभितः प्रवर्तते।

नूनमुपनिषदां बहूनि प्रमाणानि एतस्मादेव निष्प्राणक्रियाकलापात्समुद्भूतामुद्विग्नतां सुस्पष्टं प्रकटीकुर्वन्ति। तथा हि—

प्लवा ह्येते अदृढा यज्ञरूपा
अष्टादशोक्तमवरं येषु कर्म।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा
जरामृत्युं ते पुनरेवापि यन्ति॥

अविद्यायां बहुधा वर्तमाना
वयं कृतार्था इत्यभिमन्यन्ति बालाः।
यत्कर्मिणो न प्रवेदयन्ति रागात्
तेनातुराः क्षीणलोकाश्च्यवन्ते॥

(मुण्डकोपनिषदि १।२।७,६)

अविद्यायामन्तरे वर्तमानाः
स्वयं धीराः पण्डितं मन्यमानाः।
दन्द्रम्यमाणाः परियन्ति मूढा
अन्धेनैव नीयमाना यथान्धाः॥

(कठोपनिषदि १।२।५)

अर्थात्, आदर्शहीनः खल्वयं यज्ञादिकर्मकाण्डः अदृढनौकया समानः। अविवेकिनो हि जना एनमेव जीवनस्य लक्ष्यत्वेन मन्यमानाः स्वकीयान्धवासनानामावर्तेषु पतिता आध्यात्मिकोन्नतिपदमासादयितुं न शक्नुवन्ति। मूढा आत्मानं पण्डितं मन्यमानाः, परं वस्तुतोऽज्ञानवशेन आदर्शहीने क्रियाविशेषबहुले कर्मकाण्डे निमग्नाः, आध्यात्मिकोन्नतेः सरलेऽकण्टके च मार्गेऽग्रेसरा नैव भवन्ति। दम्भमोहमोनानां कुटिलेन मार्गेण गच्छन्तो भ्रान्तास्ते स्वजीवनमपि व्यर्थतां नयन्ति। नूनं तेषां दशा वस्तुतोऽन्धेनैव नीयमानस्यान्धस्य समाना भवति।

एतादृशमादर्शहीनमतिमात्रतां गतं कर्मकाण्डं लक्ष्यीकृत्यैव नूनं गीताया उपरिष्टान्निर्दिष्टानां विचाराणां प्रवृत्तिरासीदिति स्पष्टं प्रतीयते।

अपरतस्तस्या एतस्या प्रवृत्तेः प्रतिक्रियारूपेण देशे शुष्कज्ञानप्रवृत्तेः प्रारम्भोऽभूत्। सापि क्रमशः प्रवर्धमाना कालान्तरेण, अतिमात्रताया हेतोः, प्रमाद आलस्येऽकर्मण्यतायां[1] च परिणतासीदिति गीताया एव प्रतीयते।

एवमेव तृतीयापि प्रवृत्तिः सामान्यजनतायां सुतरां बद्धमूला प्रभाववती च स्वेच्छया विविधशारीरघोरयातनानां सहन एवात्मानं

१. तु० "मा कृत कर्माणि शान्तिर्वः श्रेयसीत्याह। अतो मस्करी परिव्राजकः।" (महाभाष्ये ६।१।१५४)।

कृतकृत्यं मन्यमानानां तपस्विनामधारिणां चिराय भारतवर्षस्येतिहासे लब्धपदा दृश्यते। वाल्मीकिरामायणे—

अश्मकुट्टाश्च बहवः पत्राहाराश्च तापसाः॥
दन्तोलूखलिनश्चैव तथैवोन्मज्जकाः परे।
गात्रशय्या अशय्याश्च तथैवानवकाशिकाः॥
मुनयः सलिलाहारा वायुभक्षास्तथापरे।
आकाशनिलयाश्चैव तथा स्थण्डिलशायिनः॥
तथोर्ध्ववासिनो दान्तास्तथार्द्रपटवाससः।
(३।६।२—५)

(अश्मकुट्टाः = अपक्वकुट्टितान्नभक्षकाः। दन्तोलूखलिनः = दन्तातिरिक्तावहननसाधनरहिताः। उन्मज्जकाः = कण्ठदघ्ने जले स्थित्वा तपः कुर्वन्तः। गात्रशय्याः = अनास्तरणशायिनः। अशय्याः = निद्राहीनाः। अनवकाशिकाः = एकपादस्य स्थित्यवकाशदानरहिताः। एकपादस्थितिमन्त इति यावत्। आकाशनिलयाः = अनावृतप्रदेशस्थायिनः।) इत्येवं नानाविधघोरशारीरयातनाः सहमानानां तापसानां वर्णनेन भारत एतस्याः प्रवृत्तेश्चिरन्तनत्वं सुतरां स्पष्टम्।

पूर्वोक्तप्रवृत्तित्रयस्यातिमात्रतां नीतेनाविचारमूलेन च प्रचारेणैव उत्साहसाहसपराक्रमभावनाभिराशावादेन च ओतप्रोतायामार्यजातौ आदर्शैर्विहीनायाः कर्तव्याकर्तव्यविवेकेन शून्याया अनेकैर्मूढग्राहैरभिभूताया निष्प्रभाया अकर्मण्याया अत एव मृतकल्पाया जातेर्लक्षणानि शनैः शनैर्दृष्टिगोचरतामागच्छन्।

न केवलं पूर्वोद्धृतप्रमाणेभ्य एव, किन्तु गीताया विचारधारायाः साकल्येन विवेचनादपि सुस्पष्टमेतत्प्रतीयते यदुक्तप्रवृत्तीनां हानिकराद् दुष्प्रभावाद् देशमार्यजातिं च त्रातुमेव भगवता वासुदेवेन "सर्वशास्त्रमयी", "सर्वज्ञानप्रयोजिका", "धर्ममयी", "सर्वतीर्थमयी" च गीतेयमिह भुवने प्रवर्तिता।

तस्याः सर्वकल्याणमयस्योपदेशस्यायमेवाभिप्राय आसीद् यत्पूर्वोक्तप्रवृत्तिष्वादर्शहीनतायाः कारणेन समुत्पन्नं पारस्परिकविरोधं मौलिकस्यादर्शस्य भावनया अपनीय कथमपि सामञ्जस्यं स्थाप्यतामिति।

## गीताया दुरुपयोगः

परमेवं प्रतीयते यत्पूर्वं प्रतिपादितस्य गीताया ऐतिहासिकस्याधारस्याज्ञानादेव तस्या दुरुपयोगश्चिराय भारते क्रियते। अत एव गीताया विषये भावनैषा चिरकालादेव देशेऽस्मिन् प्रसृता दृश्यते यत्सा केवलं सांसारिकजीवनादुपरतानां 'साधूनां' (= भिक्षूणाम्) संन्यासिनां चैव पुस्तकम्, यद्वा, तदेतादृशं शास्त्रं यस्योपयोगः, भवतु नाम स वृद्धानां कृते, सांसारिकव्यापारेषु व्यापृतानां गृहस्थानां यूनां च कृते न विद्यत एव। समानरूपेणैव एषा मिथ्याभावना मूढेषु पण्डितेषु च प्रायेण कृतपदा समुपलभ्यते।

एतस्याः परिस्थितेः कटुरनुभवोऽस्माकं वाराणसेयराजकीयसंस्कृतमहाविद्यालयपरीक्षापाठ्यक्रमे सामान्यपत्रेषु सोत्साहम् इदंप्रथमत्वेन समावेशिताया अपि गीतायाः संस्कृतपण्डितानामनेकेष

विरोधकारणादेव ततः पृथक्करणावसर एव प्रथमवारमजायत। गीतायाः सन्निवेशः कस्मिन्नपि सर्वसाधारणे पाठ्यक्रमे नैव समुचित इत्येव तेषां पण्डितानामासीदाघोषः।

कुतः कथं वा गीताया विषये पूर्वोक्ता मिथ्याभावना प्रवृत्त इति वक्तुं दुःशकमिव प्रतीयते। तथापि निश्चितमेतद् यदस्य प्रायेणोत्तरदायित्वं भारतेतिहासस्य निराशामयस्य आर्यभावनाभिश्च शून्यस्य मध्यकालस्य टीकाकारेषु भाष्यकारेषु चावतिष्ठते। तैरेव नूनं वेदान्तशास्त्रेण सह गीताया गाढं संबन्धः स्थापितः।

परं स्वयं गीताया एवात्र किमुत्तरमिति तावद्विचार्यतामस्माभिः—

## गीताया उपक्रमोपसंहारौ

नात्र विवादः केषाञ्चित् यत्कस्यापि ग्रन्थस्य संदर्भस्य वा वास्तविकतात्पर्यस्य निर्धारणे तदुपक्रमोपसंहारावेव प्रधानं कारणम्। तत्र **शस्त्रास्त्रसज्जैर्युयुत्सुभिर्वीरैराचिते युद्धक्षेत्रे "प्रवृत्ते शस्त्रसंपाते" तावद् गीताया उपक्रमः।** तादृशे ह्यवसरे विचारसंघर्षे लीनम्, विषादगर्ते च पतितम्, किंकर्तव्यविमूढं संशयात्मानमर्जुनं प्रति वै भगवतः कृष्णस्य सर्वतः प्रथमम् एषा उक्तिः—

कुतस्त्वा कश्मलमिदं विषमे समुपस्थितम्।
अनार्यजुष्टमस्वर्ग्यमकीर्त्तिकरमर्जुन ! ॥
क्लैब्यं मा स्म गमः पार्थ ! नैतत्त्वय्युपपद्यते।
क्षुद्रं हृदयदौर्बल्यं त्यक्त्वोत्तिष्ठ परन्तप ! ॥
(२।२–३)

अर्थात्, हे अर्जुन! एतस्मिन्ननवसरे कुत एतदार्यैर्गर्हितम्, आत्मनः पतनकारणम्, अपयशसो हेतुश्चाविद्यं तव हृदये समुपस्थितम्? त्वं हि वीरः शत्रूणां हन्ता चासि; क्षुद्रां हृदयस्य दुर्बलतामेतामुत्सृज्य युद्धाय कृतनिश्चयः समुत्तिष्ठ।

स एष गीताया उपक्रमः।

अथ तदुपसंहारोऽपि विचार्यताम्।

तत्र गीताया अन्तिमः श्लोको भवति—

यत्र योगेश्वरः कृष्णो यत्र पार्थो धनुर्धरः।
तत्र श्रीर्विजयो भूतिर्ध्रुवा नीतिर्मतिर्मम॥
(१८।७८)

संजयः कथयति यद् यत्रापि विशुद्धकर्तव्यभावनाया उपदेष्टु-र्भगवतः श्रीकृष्णस्य वीरस्य चार्जुनस्य संवादरूपाया गीताया उपदेशस्यानुसरणं क्रियते तत्र श्रियो विजयस्यैश्वर्यस्य सत्यादन-पायिन्या नीतेश्च स्थितिर्भवतीति मदीया धारणा।

शब्दान्तरेष्वस्यायमेवाभिप्रायो यद्युद्धक्षेत्रेऽवस्थितं वीरमर्जुन-मुद्दिश्योपदिष्टा गीता खलु श्रियो विजयस्य भूतेःसन्नीतेश्च प्रतिपादकं शास्त्रम्। नियतं नैषां किमपि स्थानं संभवति वेदान्तशास्त्रे। नैव कश्चिद् वेदान्तशास्त्रविषयको ग्रन्थो वेदान्तस्य जिज्ञासोः पुरस्ताद् श्रीविजयादिकमादर्शरूपेण स्थापयिष्यति।

किन्त्वेतदपि विभावनीयं यद्गीताया उपदेशेन प्रभावितोऽप्य-र्जुनो न हि युद्धात्पराङ्मुखो बभूव, न च वनं गत्वा तपस्यामा-

श्रितवान्, न चापि किमपि देवमन्दिरं प्रविश्य भगवतो भक्त्याराधनेन च कालं निनाय। प्रत्युत स प्राणपणेन शत्रुभिः सह युध्वा विजयलक्ष्मीमधिगतवान्।

गीताया उपदेशं साकल्येन श्रुत्वा अर्जुनस्य हृदयोद्गारः खल्वेवम्—

नष्टो मोहः स्मृतिर्लब्धा त्वत्प्रसादान्मयाच्युत।
स्थितोऽस्मि गतसन्देहः करिष्ये वचनं तव॥
(१८।७३)

अर्थात्, हे अच्युत! भवत उपदेशेन मम मोहो भ्रमश्च निर्मूलतां गतौ यद्वशाद्धि एतस्योपदेशस्य प्रारम्भे शोकसंविग्नमानसेनाश्रुपूर्णाकुलेक्षणेन विषीदता मया सशरं चापं विसृज्य (१।४६) 'न योत्स्ये' (२।९) इत्येवमुक्तो भवानासीत्। अधुना गतसन्देहोऽहं

तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः॥
सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि॥
(२।३७-३८)

इत्येतद्भगवतो वचनं करिष्ये।

**एवमुपक्रमोपसंहाराभ्यां** स्पष्टमेतद् यद् गीता न केवलं भिक्षूणां संन्यासिनां जराजर्जरितगात्राणां वृद्धानामेव वा शास्त्रम्। न चापि तत्कर्मभीरूणां प्रमादिनामलसानां मिथ्यावैराग्यव्याजेन स्वकर्तव्येभ्यः पराङ्मुखानां शास्त्रम्।

सा हि खलु

ममाग्ने! वर्चो विहवेष्वस्तु
वयं त्वेन्धानास्तन्वं पुषेम।
मह्यं नमन्तां प्रदिशश्चतस्रस्
त्वयाध्यक्षेण पृतना जयेम॥[१]
(ऋग्० १०।१२८।१)

इन्द्र त्वोतास आ वयं वज्रं घना ददीमहि।
जयेम सं युधि स्पृधः॥[२] (ऋग्० १।८।३)

(अर्थात्, भगवन्! वर्चस्विनस्तेजस्विनो बलवन्तश्च सन्तो वयं भवतां साहाय्येन स्वशत्रून्=स्वकीयोन्नतेर्बाधिकाः शत्रूञ्जयेम। समस्ताश्च दिशोऽस्माकं समक्षे नतमस्तका भवेयुः। भगवन्! भवतां रक्षायां वर्तमाना आत्मरक्षाया उपकरणैश्च सन्नद्धा वयं विघ्नान् बाधाश्चापघ्नन्त उन्नतिमार्गेऽनवरतमग्रेसरा भवेम) एवमुदात्त-वैदिकप्रार्थनापराणां कर्मशीलानां सत्यनिष्ठावतां विजयिनामार्याणां कर्मशास्त्रम्।

## गीताया वास्तविकं स्वरूपम्

गीताया वास्तविकं स्वरूपं कीदृशं कश्च तत्प्रतिपाद्यो विषय इति मीमांसायामेतत्तावदवगन्तव्यं यद् गीतया नहि कस्यापि धर्म-

१. ११५ तमपृष्ठमत्र द्रष्टव्यम्।

२ त्वोतासः=त्वया रक्षिताः। घना घनमत्यन्तदृढम्। आ ददीमहि=स्वीकुर्मः। स्पृधः=स्पर्धमानान् शत्रून्।

विशेषस्य संप्रदायविशेषस्य वा प्रतिपादनं क्रियते, न चापि तया कस्यापि संप्रदायस्य खण्डनं तिरस्कारो वा विधीयते। सा वै कर्म-विषयकमौलिकसत्यस्य प्रतिपादकं शास्त्रम्। अत एव चास्माकं मते सा सार्वकालिकं सार्वदेशिकं च महत्त्वमावहति। मनुष्यस्य धार्मिकप्रवृत्तीरालोचयन्ती सा तदर्थं सत्यमादर्शमपि प्रदर्शयति। **वस्तुत एव गीता कर्मशास्त्रं नीतिशास्त्रं कर्तव्याकर्तव्यशास्त्रं चेति वक्तुं शक्यते।** यावद्धर्मकर्मणां वैज्ञानिकदृष्ट्या परीक्षणे प्रवृत्ता सा स्पष्टमेव 'धर्मशास्त्राणामपि धर्मशास्त्रम्'। तदत्र पारम्प-र्यागतौ श्लोकौ भवतः—

गीतागीतं न यज्ज्ञानं तद्विद्ध्यासुरसंमतम्।
तन्मोघं धर्मरहितं वेदवेदान्तगर्हितम्॥
तस्माद् धर्ममयी गीता सर्वज्ञानप्रयोजिका।
सर्वशास्त्रमयी यस्मात्तस्माद् गीता विशिष्यते॥

अस्माकं त्वेष विचारो यद् भारतस्य प्राचीनतमां रूपकोन्मुख-प्रवृत्तिमनुसृत्य महाभारतीययुद्धक्षेत्रेऽवस्थितयोर्वासुदेवार्जुनयोः संवादव्याजेन सांसारिकसंघर्षमयजीवनस्य क्षेत्रे उद्योगशीलं प्रत्येकं मनुष्यमुद्दिश्यैव तद्धिताय भगवता कृष्णेन प्रदर्शितस्य कर्तव्यपथस्योपदेश एव गीतायाः परमोऽभिप्राय इति।

गीतासदृशस्य शास्त्रस्य महत्त्वं हृदयंगमं कर्तुमयमपरः सिद्धान्तोऽपि सम्यगवगन्तव्यः। स चैवम्। **आध्यात्मिकानां**

दार्शनिकानां च तत्त्वानां परिशीलने भाषा केवलं परिभाषारूपेणैव कार्यकरी भवति। यथा हि तत्तच्छास्त्रेषु व्यवहारसौकर्यार्थं पारिभाषिकशब्दानां कल्पना संकेतो वा क्रियते, तथैव खल्वाध्यात्मिके दार्शनिके च जगति समाजगतशाब्दिकरूढीनामाश्रयेण तत्तत्प्रमेयाणां प्रतिपादनं क्रियते।

एवं भाषा तात्त्विकस्वरूपे कमपि भेदमनादधती केवलं तस्य विभिन्नपक्षानेव प्रतिपादयति। अतश्च "शब्दब्रह्मातिवर्त्तते" इत्यनुसारं भाषायाः स्तरम् (लोकं, पदवीं वा) अतिक्रान्तस्य तत्त्वदर्शिनः स्थितप्रज्ञस्य दृष्टौ वेदान्तस्य 'ब्रह्म', नीतिशास्त्रस्य 'सत्यम्', बौद्धदर्शनस्य 'धर्मः' (=धम्मो), मीमांसादर्शनस्य 'कर्म', तन्त्रशास्त्रस्य 'शक्तिः', स्वयं गीताशास्त्रस्य च 'अहम्' अथवा 'वासुदेवः'—सर्व एते पारिभाषिकाः शब्दा वस्तुत एकस्यैव मौलिकस्य तत्त्वस्य तत्तद्दृष्टिभेदेन प्रतिपादकाः।[१]

श्रुतिविप्रतिपन्ना ते यदा स्थास्यति निश्चला।
समाधावचला बुद्धिस्तदा योगमवाप्स्यसि॥
(२।५३)

गीतायाः श्लोकेऽस्मिन्नेतस्यैव सिद्धान्तस्य संकेतो विद्यते।

मनुष्येण रचिता हि भाषा, या खलु
"वाग्वै मनसो ह्रसीयसी। अपरिमिततरमिव हि मनः। परिमिततरेव हि वाक्" (शतपथब्राह्मणे १।४।४।७)

---

१. अत्र ग्रन्थकृतो रश्मिमालायां तत्त्वमीमांसेति प्रकरणं द्रष्टव्यम्।

एतच्छ्रुत्यनुसारं विचाराणां प्रकटीकरणार्थमपूर्वमेकं साधनम्, स्वतःसिद्धस्य मौलिकतत्त्वस्य प्रतिपादिकैव भवितुमर्हति, न तूत्पादिका।

उपरिनिर्दिष्टसिद्धान्तस्य दृष्ट्यैव तत्त्वदर्शी विपश्चिद् निम्नवासनानिरोधपूर्वकं मनुष्यस्योच्चानामाध्यात्मिकीनां नैतिकीनां च प्रवृत्तीनां प्रबोधनपोषणयोरुद्देश्येन विभिन्नधर्मप्रतिपादितेषु विभिन्नकर्मकाण्डेषु, विभिन्नदेवोपासनापद्धतिषु, अथवा अधिकारिभेदस्य प्रवृत्तिभेदस्य वा हेतोर्विभिन्नशाब्दिकपरिभाषाणामाश्रयेण मौलिकतत्त्वस्य प्रतिपादकेषु विभिन्नदर्शन ( =दृष्टि ) शास्त्रेषु भेदं नैव पश्यति।

अतः शाब्दिकपरिभाषाकृतभ्रान्त्या अप्रभावितैरस्माभिर्यदि तात्त्विकदृष्ट्या गीताया अध्ययनं क्रियते तर्हि नियतमेव सा समस्तमानवजातेरनर्घधर्मशास्त्रत्वेन प्रतीयेत।

## गीतायाः कर्मणो यज्ञस्य च स्वरूपम्

कर्तव्याकर्तव्यशास्त्रं कर्मशास्त्रं वा गीतेत्युपरिष्टात्प्रतिपादितमस्माभिः। तस्या विशिष्टप्रतिपाद्यविषय एष एव यन्मनुष्येण कर्म, न केवलं कर्तव्यबुद्ध्यैव अनासक्तबुद्ध्यैव वा, किन्तु ईश्वरार्पणबुद्ध्या अथवा भक्तिभावनयापि विधेयमिति। तथा हि

तस्मादसक्तः सततं कार्यं कर्म समाचर।
असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः॥
कर्मणैव हि संसिद्धिमास्थिता जनकादयः। (३।१९-२०)
यत्करोषि यदश्नासि यज्जुहोषि ददासि यत्।
यत्तपस्यसि कौन्तेय तत्कुरुष्व मदर्पणम्॥ (९।२७)

एवमनासक्तबुद्ध्या तथेश्वरार्पणबुद्ध्या विहितस्य कर्मणो महिमा गीतायामसकृद् वर्णितः। किञ्च,

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक्॥ (३।१०)
यज्ञशिष्टामृतभुजो यान्ति ब्रह्म सनातनम्।
नायं लोकोऽस्त्ययज्ञस्य कुतोऽन्यः कुरुसत्तम॥ (४।३१)

एवं यज्ञस्यापि गुणगरिम्णो भूयो भूयः संकीर्तनं तत्र क्रियते।

परंतु गीताया मौलिकसिद्धान्तो याथार्थ्येन बुद्ध्यारूढो भवेदित्येतदर्थं कर्मणो यज्ञस्य च वास्तविकस्वरूपस्यावबोधोऽत्यन्तमावश्यकः। शब्दविषयकरूढिवादस्य प्रभावेणैव, तपोदानदयास्वर्गवर्णश्रद्धाप्रभृतिशब्दानामिव, कर्मयज्ञेतिशब्दयोरपि अर्थविषयेऽस्माकं समाजो वास्तविकताया अतिदूरं नीतो वर्तते। अस्माकं धर्मशास्त्राण्यपि नात्र विषयेऽपवादाः। रूढिमूलकस्यैतस्यैव परम्पराप्राप्तस्य भ्रमस्यापाकरणार्थं गीतायां श्रद्धादानतपःप्रभृतिशब्दैः सह कर्मयज्ञेतिशब्दयोरपि वास्तविकमर्थं स्पष्टयितुं सुमहत् प्रयतितम्।

तत्र कर्मविषये गीता स्पष्टमुद्घोषयति—

किं कर्म किमकर्मेति कवयोऽप्यत्र मोहिताः। (४।१६) इति।

अर्थात्, कर्मणोऽकर्मणश्च वास्तविकस्वरूपस्यावगमे कवयो विद्वांसोऽपि भ्रान्ता दृश्यन्ते, सामान्यजनानां तु का कथा।

सामान्यरूपेण कर्मशब्दो यज्ञादिकर्मकाण्डस्य देवार्चनादिकर्मणो वा वाचकत्वेनैव गृह्यते। परन्तु गीतायां यस्य कर्मणः स्वरूपं विचार्यते तेन तु जीवनस्य विभिन्नक्षेत्रेषु पितापुत्र, जायापति, गुरुशिष्य, सेव्यसेवक, नागरिकतादिसांसारिकसंबन्धैः प्रेरितेन मनुष्येण क्रियमाणानां सर्वविधकर्मणां संग्रहोऽभीप्सितः। यज्ञादिकर्मकाण्डं तु तस्यैव व्यापकजीवनस्य साधनरूपः संभारः, अथवा प्रतीकमेव।

यथा ह वै स्वल्पकालमपि प्रत्यहं कृतः शारीरो व्यायामो यावद्दिवसं कर्मकरणाय शरीरस्य स्वास्थ्यसंरक्षणद्वारैवोपयोगी, एवमेव खलु सर्वस्यापि धार्मिककर्मकाण्डस्योपयोगः साफल्यं च मनुष्यस्योच्चभावनानां परिपुष्टौ तद्द्वारा च जीवनस्य पवित्रता-सच्चरित्रतयोः संपादन एव विद्यते।[1] एतादृश्या भावनया विरहितं हि कर्मकाण्डं देवार्चनादि वा, स्वयमेव जीवनस्य लक्ष्यं सत्, वाहुल्येन दम्भमानलोभपाषण्डपरप्रतारणभावैः संचालितम्, शनैः-शनैरादर्शहीनजटिलक्रियाकलापरूपेण च परिणमत्, व्यक्तिगतानां

१. अत्र ग्रन्थकृतो रश्मिमालायां कर्मदर्शनमित्याख्यं प्रकरणम् द्रष्टव्यम्।

समाजगतानां वा उदात्तभावनानां नैतिकतायाश्च नैव परिपोषकं भवितुमर्हति, किन्तु घातकमेव संजायते।

तस्यामवस्थायां हि किञ्चिन्मात्रेणैव पूजापाठादिना मनुष्यः कृतकृत्यतामासादयितुं शक्नोति, तस्य प्रात्यहिकजीवनस्य कर्तव्य-कर्मणाम् आध्यात्मिकेन नैतिकेन वा जीवनेन नहि कोऽपि संबन्धः—इत्येष विचार एव जनतायाः संजायते। एतादृशमेवा-दर्शहीनं यज्ञादिकर्मकाण्डं गीतायां तामसत्वेन राजसत्वेन वा वर्ण्यते, नैकप्रकारेण च तस्य भर्त्सना क्रियते। एतादृशे एव निरुद्देश्यके कर्मकाण्डे रतानां विषय उच्यते—

नैनं छन्दांसि वृजिनात्तारयन्ति
मायाविनं मायया वर्तमानम्।
नीडं शकुन्ता इव जातपक्षाश्
छन्दांस्येनं प्रजहत्यन्तकाले॥
( विदुरनीतौ ३।४२ ) इति।

सर्वस्यापि, लौकिकस्य धार्मिकस्य वा, कर्तव्यस्य कर्मणो महत्त्वं केवलं तस्मिन् कर्मणि प्रवृत्तस्य मनुष्यस्य भावनाधीनम्। कर्मकरणे प्रवृत्तो हि मनुष्यो विद्वान् वा, पण्डितो वा, ब्राह्मणो वा, संपत्ति-शाली वा, साधारणासाधारणकर्मकरः 'शूद्रो वा 'हरिजनो' वा भवतु, तस्योच्चताया नीचतायाश्च निर्णयो गीतया एतयैव दृष्ट्या विधास्यते। नूनं धर्मन्यायादिकथानामस्मत्पुराणादिसाहित्य उपवर्णितानामेष एवाभिप्रायः।

समानैव कथा यज्ञशब्दस्यापि वर्तते। तस्यापि वास्तविकमर्थं विस्मृत्य वयं चिराय संकुचित एवार्थे प्रयोगं कुर्मः। अग्नावाहुतीनां प्रक्षेप एव नहि तस्य मौलिकोऽर्थः। वास्तविकयज्ञभावनायाः समयभेदेन केवलमेकं प्रतीकं तत्कामं भवतु।

यज्ञस्य नानाभेदान् प्रदर्शयन्ती गीतैव स्वयमाह—

दैवमेवापरे यज्ञं योगिनः पर्युपासते।
ब्रह्माग्नावपरे यज्ञं यज्ञेनैवोपजुह्वति॥
श्रोत्रादीनीन्द्रियाण्यन्ये संयमाग्निषु जुह्वति।
शब्दादीन् विषयानन्य इन्द्रियाग्निषु जुह्वति॥
सर्वाणीन्द्रियकर्माणि प्राणकर्माणि चापरे।
आत्मसंयमयोगाग्नौ जुह्वति ज्ञानदीपिते॥
द्रव्ययज्ञास्तपोयज्ञा योगयज्ञास्तथापरे।
स्वाध्यायज्ञानयज्ञाश्च यतयः संशितव्रताः॥
अपाने जुह्वति प्राणं प्राणेऽपानं तथापरे।
प्राणापानगती रुद्ध्वा प्राणायामपरायणाः॥
अपरे नियताहाराः प्राणान् प्राणेषु जुह्वति।
...................................
एवं बहुविधा यज्ञा वितता ब्रह्मणो मुखे॥
(४।२५-३०, ३२)

अल्पज्ञस्य, स्वभावत इन्द्रियपरायणस्य तथा स्वार्थ-साधने तत्परस्य मनुष्यस्य स्वकीयनिम्नप्रवृत्तीनां विजयो-

द्देश्येन जगतः पोषणकर्त्रीभिः स्वभावतः परार्थप्रवृत्ताभिर्दैवीभिः शक्तिभिरथवा दैव्या शक्त्या स्वसंपर्कस्य स्थापनमेव यज्ञस्य वास्तविकोऽर्थः ।

"यज देवपूजासंगतिकरणदानेषु" इत्येषामर्थानामप्यत्र संगतिः संजायते । दानेन खलु वस्तुतो महत्याः शक्तेः समक्षमात्मनः समर्पणमेवाभिप्रेयते । उपर्युक्तसंपर्कश्च निःस्वार्थलोकसेवाद्वारैव स्थापयितुं शक्यते । अयमेवार्थो गीतायामेवमुपवर्ण्यते—

सहयज्ञाः प्रजाः सृष्ट्वा पुरोवाच प्रजापतिः ।
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् ॥
देवान्भावयतानेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयः परमवाप्स्यथ ॥
(३।१०।११)

ऐतरेयब्राह्मणादिग्रन्थेषु[1] अस्मिन्नेवार्थे 'श्रद्धाहोमः' (=भावनायज्ञः) इति शब्दः प्रयुक्तो दृश्यते । भवति चात्र श्लोकः—

भावनाकुसुमैरीडे तत्तेजः शाश्वतं महत् ।
आत्मा सवितृरूपेण जगतस्तस्थुषश्च यत् ॥
(अस्मत्कृतौ रश्मिमालायाः)

एतादृशेन हि यज्ञेन गीताया मते
भोक्तारं यज्ञतपसां सर्वलोकमहेश्वरम् । (५।२९)

---

१. तु० ऐतरेयब्राह्मणे ३।११; ५।२७-२८; ७।१० ।

श्रेयान् द्रव्यमयाद्यज्ञाज् ज्ञानयज्ञः परन्तप। (४।३३)

इत्यनुसारं यज्ञतपसां भोक्तुर्भगवतः परमेश्वरस्य भक्तिः पूजा च कर्तुं शक्येते। **वस्तुतस्तु गीतानुसारं कर्तव्यबुद्ध्या ईश्वरार्पण-बुद्ध्या च कृतं कर्मैव तात्त्विको यज्ञः।**

स्पष्टमेवैतादृशो यज्ञोऽन्धश्रद्धया स्वकीयस्य दरिद्रदेशस्य दीन-हीनसमाजस्य च वास्तविकीरावश्यकता अनपेक्ष्य अग्नौ लक्ष-लक्षाणां रूप्यकाणामन्नादिसामग्र्या भस्मसात्करणं नापेक्षते।

## गीताया भक्तिः

गीतायां भक्तिरिति शब्दस्यातिमहत्त्वम्। परन्तु भक्ति-शब्दस्य प्रचलितादर्थाद् गीताया भक्तिर्नितरां भिन्ना। **गीतानुसारं हि योऽसौ विश्वप्रपञ्चस्य संचालकः सर्वेषां प्रेरकः सर्वस्योत्तारको यज्ञतपसामुपभोक्ता सर्वलोकमहेश्वरो भगवान् तस्य प्रीत्यर्थमेव कर्मकरणं परमा भक्तिः।**

यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम्।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः॥
(१८।४६)

एतदनुसारं हि मनुष्यजीवनस्य सफलताया रहस्यं कर्मद्वारा ईश्वरभक्तावेव विद्यते। उपयुक्तं चैतत्, यतो व्यष्टेर्व्यक्तेर्वा कर्तव्यस्य पर्यवसानं समष्ट्या सह तस्याः सामञ्जस्य एवास्ते।

**एवंप्रकारेण भक्तिवादः कर्तव्यबुद्धेरादर्शवादस्यैव वा परा काष्ठा ।**

एष भक्तिवादो वै कर्तव्यबुद्धेर्भावनायां नूतनमाधुर्यरसस्य संचारं करोति । न हि तस्मिन्वर्तते कश्चिदवकाशो दैन्यस्य, आलस्यस्य, प्रमादस्य, अकर्मण्यताया वा। न स प्रकृतेर्विरुद्धं पुरुषं स्त्रीवदाचरणं शिक्षयति, नाप्यत्याचारिणोऽत्याचारस्य सहनमुपेक्षां वा। "वज्रादपि कठोराणि मृदूनि कुसुमादपि" इत्युक्तिमनु नम्रतायाः शौर्यस्य चादृष्टपूर्वं सामञ्जस्यमत्र विद्यते । किं बहुना, गीताया भक्तिवादस्य दृष्ट्या स्वकर्तव्यपालनार्थं सर्वस्वमप्यर्पयन्तो महाराणाप्रताप-गुरुगोविन्दसिंह-प्रभृतयस्तादृशा एव भक्ता यादृशा गोस्वामी तुलसीदासो महात्मा नानकः कबीरो वा ।

गीताया भक्तेरादर्शमनुसरन् हि भक्त आशाया आत्मविश्वासस्य च प्रतिमूर्त्तिरेव भवति । महत्स्वपि संकटेषु समापतितेषु

उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥
(गी० ६।५)

इति सिद्धान्ते विश्वसन्नविचलितधैर्यः स तेषां स्वागतमेव करोति। तस्य मानसिकावस्थायाः सुन्दरं वर्णनं गीतायामेवं दृश्यते—

यदृच्छया चोपपन्नं स्वर्गद्वारमपावृतम् ।
सुखिनः क्षत्रियाः पार्थ लभन्ते युद्धमीदृशम् ॥ (२।३२)

सुखदुःखे समे कृत्वा लाभालाभौ जयाजयौ ।
ततो युद्धाय युज्यस्व नैवं पापमवाप्स्यसि ॥ (२।३८)

वस्तुतस्तु गीताया एव प्रक्रियाया अनुसारेण यज्ञदानतप-आदिवद् भक्तिरपि सात्त्विकराजसतामसभेदेन त्रिविधेति व्याख्यातुं शक्यते । तथा हि—

( १ )

योऽन्तरात्मा जगत् साक्षी सृष्टवानिदमद्भुतम् ।
कल्याणार्थाय जीवानां तत्प्रसादाय केवलम् ॥१॥
कर्तव्यमिति यत्कर्म क्रियते नियतात्मभिः ।
सिद्ध्यसिद्ध्योः समैर्भूत्वा भक्तिः सा सात्त्विकी मता ॥२॥
मनःप्रसादः सौम्यत्वं समुत्साहः स्वकर्मसु ।
श्रेयोऽभ्युदयसिद्धिश्च तस्याः फलमिहोच्यते ॥३॥

( २ )

सत्कारमानपूजार्थं प्रतार्य सकलं जगत् ।
जीविकासाधनार्थं वा प्रेयोमार्गपरायणैः ॥४॥
'लोकेशस्य प्रसादार्थम्' एवमुद्घोष्य सर्वतः ।
क्रियते यः समारम्भो भक्तिः सा राजसी मता ॥५॥
दम्भो दर्पोऽभिमानश्च समुद्वेगः स्वकर्मसु ।
चित्तचञ्चलता चैव तस्याः फलमिहोच्यते ॥६॥

( ३ )

समुत्सृज्य स्वकं कर्म सदालस्यपरायणैः ।
कर्मण्यकर्म पश्यद्भिरकर्मणि च कर्म यत् ॥७॥
नाम्नः संकीर्तनेनैव न तु कर्मसमाश्रयात् ।
पूज्यते भगवान्नित्यं **भक्तिः सा तामसी मता** ॥८॥
निरुद्यमा निरुत्साहा हीनसत्त्वपराक्रमाः ।
अनार्यजुष्टमार्गस्था जायन्ते तां समाश्रिताः ॥९॥
(ग्रन्थकर्तुः रश्मिमालायाः)

अर्थात्, जगतः साक्षिभूतो योऽन्तरात्मा भगवानिदमद्भुतं भुवनं जीवानां कल्याणार्थमेव सृष्टवान् केवलं तस्य प्रसन्नतायै कार्यस्य सिद्धिमसिद्धिं च समं जानद्भिः संयतात्मभिर्यत्कर्म कर्तव्यमेतदिति बुद्ध्यैव क्रियते **सा वै सात्त्विकी भक्तिरुच्यते**। तया च भक्त्या मनःप्रसादः सौम्यत्वं स्वकर्मसु समुत्साहो निःश्रेयसस्याभ्युदयस्य च प्राप्तिरित्येतानि फलरूपेण भवन्ति।

केवलं स्वार्थसाधनतत्परैः 'ईश्वरस्य प्रसन्नतायै एव कार्यमिदं क्रियते' प्रत्यक्षत एवं सर्वत्र घोषयित्वा, वस्तुतस्तु आत्मन एव सत्कारमानपूजार्थं जीविकाप्राप्त्यै वा, जगत्प्रतार्य यत्कार्यं क्रियते **सा राजसी भक्तिरुच्यते**। तया च मनुष्ये केवलं दम्भस्य दर्पस्याभिमानस्य स्वकार्येष्वशान्तेश्चित्तचञ्चलतायाश्च वृद्धिरेव फलरूपेण दृश्यते।

कर्मण्यकर्मेति अकर्मणि च कर्मेति पश्यद्भिः, सर्वदा आलस्य-प्रमादपरैर्जनैः स्वकर्तव्यस्योपेक्षया केवलं भगवन्नामसंकीर्तनेन, न तु स्वार्थरहितकर्मद्वारा, यल्लोकेशस्य पूजा क्रियते **सा तामसी भक्तिरुच्यते**। तामसीं भक्तिमाश्रिता हि जना निरुद्यमा निरुत्साहा हीनसत्त्वपराक्रमा अनार्यसेवितमार्गगामिनश्च जायन्ते।

तदेवं भक्तेः सात्त्विकराजसतामसरूपेण विवेकः।

## आत्मपरीक्षणमन्तरवेक्षणं वा

गीतया नहि कस्यापि धर्मविशेषस्य संप्रदायविशेषस्य वा प्रतिपादनं क्रियत इति पूर्वमवोचाम। सा हि मनुष्यमात्रस्य समक्षम्, तस्य संप्रदायविशेषस्य धर्मविशेषस्य वानुयायित्व-मनपेक्ष्य, कर्मणोऽनुष्ठानस्योच्चतममादर्शं स्थापयति। प्रत्येकं कर्मणश्च स्वरूपपरीक्षणं तस्य भावात्मिकाया भित्तेर्दृष्ट्या कर्तुं शक्यते, यतो हि प्रत्येकं धार्मिकस्य नैतिकस्य वा कर्मणो महत्त्व-मस्माकं भावेष्वाश्रितम्। भावसंशुद्धिर्हि मानसतपःसु एकतमद् गीताया अभिमतम्[१]। एतच्चात्मपरीक्षणमन्तरवेक्षणं वा नितरा-मपेक्षते। एतदन्तरवेक्षणं गीताया उपदेशस्य एकं महद्वैशिष्ट्यम्।

तच्चैतदन्तरवेक्षणं प्रकृतिसिद्धस्य सत्त्वं रजस्तम इति गुण-त्रयस्याधारेणैव कर्तुं शक्यते। सामान्यरूपेण अविवेको मोहो जडता आलस्यं प्रमादश्चेति तमोगुणस्य लक्षणानि; परम्परा-

१. तथा हि—मनःप्रसादः सौम्यत्वं मौनमात्मविनिग्रहः। भावसंशुद्धि-रित्येतत्तपो मानसमुच्यते॥ (गी० १७।१६)। इति।

गतानामन्धरूढीनां तथा चिरप्ररूढानां स्वकीयानामेव वासनानां दासता रजोगुणस्य लक्षणम्; प्रत्येकं स्वकार्यस्य परीक्षणे सावधानता अमोहः, तथा प्रमादेन वासनाभिश्चासंपृक्तायाः शुद्धबुद्धेः स्थिरता चेति सत्त्वगुणस्य लक्षणमिति वक्तुं शक्यते। गीतया स्वयमेवोदाहरणरूपेण यज्ञश्रद्धातपोदानप्रभृतेः सात्त्विक-राजसतामसभेदेन त्रैविध्यं प्रतिपादितम्। एतेनैव निकषेणास्माकं प्रत्येकं कर्मणः परीक्षणं विधातुं शक्नुमो वयम्।

"अन्धेनैव नीयमाना यथान्धाः" इत्यनुसारमन्धरूढिप्रवाहेणोह्यमाना आर्यजनता साम्प्रतं स्वस्य जीवनस्य प्रायः प्रत्येकं क्षेत्रे नितराम् एतदन्तरवेक्षणम् अपेक्षत इति नैव तिरोहितं विपश्चिताम्। अस्माकं दानं यज्ञस्तपस्तथा धर्मनाम्ना क्रियमाणमन्यच्चापि कर्म प्रायेण सात्त्विकरूपतां विहाय लोकाचारप्रभावेण मानेन दम्भेनाविवेकेन वा क्रियमाणं विकृतरूपतामापन्नं दृश्यते।

गीतायाः शिक्षायाः प्रथमः प्रभावोऽस्माकमुपरि एष भवतु यद्वयमस्माकं रूढीनां कर्मणां चान्तःपरीक्षणद्वारा वास्तविकं स्वरूपमवगन्तुं शक्ता भवेम। एतदात्मपरीक्षणमेव गीतायाममोह इति शब्देनोच्यते। "गच्छन्त्यमूढाः पदमव्ययं तत्" (१५।५) इत्येष वै गीताया उद्घोषः। कठोपनिषदि अयमेवार्थो हृदयग्राहिण्या भाषया एवं प्रतिपाद्यते—

कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्।

(२।१।१)

अर्थात्, लोके कश्चिद्धीरवीरमनुष्य एवात्मकल्याणकामनया आत्मपरीक्षणपरो भवति।

## गीताया आशावादः

आशावादो हि आर्यधर्मस्यैकतमद् मुख्यं वैशिष्ट्यम्। आशावादस्यौजःपूर्णभावैरोतप्रोतं हि नः प्राचीनं वाङ्मयम्, विशेषतश्च वैदिकं साहित्यम्। यथा हि—

ओजोऽस्योजो मयि धेहि ( यजु० १९।९ )

( परमात्मन्! त्वमोजःस्वरूपोऽसि, मामप्योजस्विनं विधेहि )

अदीनाः स्याम शरदः शतम् (यजु० ३६।२४)

( भगवन्! वयमाजीवनं दैन्यरहिता एव भवेम )

मदेम शतहिमाः सुवीराः (ऋग्० ६।१।८)

( वयं वीरसन्तानवन्तः पूर्णमायुः प्रसन्नतयैव यापयेमहि )

कृधी न ऊर्ध्वाञ्चरथाय जीवसे ( ऋग्० १।३६।१४ )

(भगवन्! भवतामनुग्रहेण वयं समुन्नतजीवनाय सदा सप्रयत्ना भवेम) इति।

प्राचीनाया आर्यजातेरेतस्य आशावादस्य आधार एकत आत्मविश्वासः, अपरतश्च जगन्नियन्तुर्भगवतः सृष्टावत्यन्तव्यापकेऽर्थे सत्यस्य साम्राज्यं विद्यत इत्येष विश्वास आसीत्। "असतो मा सद् गमय" (बृहदारण्यकोपनिषदि १।३।२८), "सत्येन लभ्यस्तपसा ह्येष आत्मा" (मुण्डकोपनिषदि ३।१।५), "सत्ये सर्वं प्रति-

ष्ठितम्" (तैत्तिरीयारण्यके १०।६३), श्रुतय एता आर्याणां गम्भीर-व्यापकसत्यभावनामेव स्पष्टीकुर्वन्ति।

गीतायामप्येष प्राचीन आर्याणामादर्श ओतप्रोतः।

उद्धरेदात्मनात्मानं नात्मानमवसादयेत्।

(६।५)

इत्येवमात्मनैवात्मन उद्धरणम्, आत्मग्लानेश्चात्मनो रक्षण-मुपदिशन्त्यपि सा अपरतो भगवतः कृष्णस्य प्रेमरसाप्लुतैः शब्दै-र्विश्वासमपि ददाति—

कौन्तेय! प्रतिजानीहि न मे भक्तः प्रणश्यति।

(९।३१)

न हि कल्याणकृत्कश्चिद् दुर्गतिं तात गच्छति।

(६।४०)

नेहाभिक्रमनाशोऽस्ति प्रत्यवायो न विद्यते।

(२।४०)

अर्थात्, हे तात अर्जुन! कर्तव्यबुद्ध्या कर्म कुर्वन् कल्याण-मार्गानुयायीश्वरभक्तः पथिको नहि कदापि दुर्गतिं गच्छतीति विश्वासं कुरु। कोऽपि सत्प्रयत्नो निष्फलतां गच्छेदिति नैव संभवति।

एषा हि कल्याणभावना भोगैश्वर्यप्रसक्तानाम्, इन्द्रिय-लोलुपानाम्, अवसरानुकूलं स्वकार्यसाधकानामादर्शहीनानां जनानां नैव विषयः। एतत्स्वरूपं तु स एव वेत्तुमलं यस्यैष

विश्वासो यत्सत्यभाषणं संयतजीवनम् आपत्तीनामागमनेऽपि स्वकर्तव्यपालनादपराङ्मुखत्वं तस्य स्वभावस्य, स्वव्यक्तित्वस्य अन्तस्तमस्वरूपस्य, आवश्यकतैव। यथा हि खलु कस्यापि पुष्पस्य सौन्दर्यं सुगन्धश्च कमपि बाह्यहेतुमन्तरेण तस्य स्वरूपस्यैवाङ्गम्, एवमेव कल्याणमार्गस्थस्य पथिकस्य यन्नैरपेक्ष्येणानासक्तभावेन च कर्तव्यपालनं तद्धि तस्य स्वरूपस्यैवाङ्गम्। तेनैव तस्य जीवनस्य सार्थक्यं पूर्णाङ्गता च। एषैव गीतायाः सात्त्विकी श्रद्धा। गीताया भक्तेर्निष्कामकर्मणश्च मूले एषैव आशामयी श्रद्धामयी च कल्याणभावनावतिष्ठते।

आशावादमूला गीताया एषा कल्याणभावना, "यद्भद्रं तन्न आसुव" ( यजु० ३०।३ ) (=भगवन्! यद्भद्रं कल्याणं वा वर्तते तदस्मान् प्रापय), "भद्रं जीवन्तो जरणामशीमहि" ( ऋग्० १०।३७।६ ) (=कल्याणमार्गेण गच्छन्तो वयं जीवनं यापयेमहि), "भद्रं कर्णेभिः शृणुयाम देवा भद्रं पश्येमाक्षभिर्यजत्राः" ( यजु० २५।२१ ) (=कल्याणमेव कर्णैः शृण्वन्तः पश्यन्तश्च वयं धार्मिकं कृत्यं सम्पादयेम ) इत्येवमनेकत्र वैदिकमन्त्रेषु वर्णिता भद्रभावना च वस्तुतोऽनर्थान्तरमेव। उभयोरपि मूले आशावादः, उभयोरपि च लक्ष्यं मनुष्ये कर्तव्यबुद्धेरुद्बोधनमेव।

## उपसंहारः

अनन्तो वै महिमा गीतायाः। नूनं सास्माकं प्राचीनाया आर्य-जातेरेकमनर्घं समुज्ज्वलं रत्नम्। अपेक्ष्यते एतद् यद्वयं तस्या

वास्तविकं स्वरूपं महत्त्वमुपयोगं चावगच्छन्तस्तद्द्वारा आय-जनतायां तन्द्रां क्लान्तिं दैन्यं निराशावादमालस्यं प्रमादं दम्भं पाखण्डं चापसार्य तेषां स्थाने स्फूर्तेः उत्साहस्य उल्लासस्य आशाया आत्मसम्मानस्य कर्तव्यपरायणतायाः सत्यनिष्ठायाश्च स्थापनया नवजीवनं संचारयेमेति।

गीताऽस्मदीया। नूनं सास्माकं गौरवस्य गर्वस्य च विषयः। परं सममेव तस्याः सार्वदेशिकं सार्वकालिकं च महत्त्वम्। समस्त-मानवसमाजस्य कल्याणस्य रहस्यं तस्यां निहितम्। कर्तव्यबुद्धे-र्भावनायां मधुररसस्य संचारं कुर्वत्या गीताया भक्तिवाद आत्म-परीक्षणं चैव संसारस्य संतप्तायोद्विग्नाय च मानवसमाजाय शान्तिप्रदानं कर्तुमलम्।

गीताया जीवनप्रदस्योपदेशस्य संदेशस्य च, स्वकीयाचरणेन, भारते सर्वत्र प्रसारणमेव नः प्रथमं कर्तव्यम्। एवं कृत एव स समयः शीघ्रमागच्छेद् यदा प्रबुद्धं भारतं मानवजातेः कल्याण-भावनया गीताया अनुपमं शुभ्रं प्रकाशमासंसारं प्रवर्त्तयितुं समर्थं भवेत्।

अन्ते योऽसावतीन्द्रियग्राह्योऽपि

विश्वमूर्त्तिर्महामूर्त्तिर्दीप्तमूर्त्तिरमूर्त्तिमान्।
अनेकमूर्त्तिरव्यक्तः शतमूर्त्तिः शताननः॥

(विष्णुसहस्रनामतः)

स एव प्रार्थ्यतेऽस्माभिः—

कर्तव्यं कर्म कुर्वन्तो भक्त्युत्साहसमन्विताः ।
सर्वे भद्राणि पश्यन्तु पीत्वा गीतामृतं महत् ॥१॥
वासनाद्वासुदेवस्य वासितं भुवनत्रयम् ।
स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दन्तु मानवाः ॥२॥

इति ।

( पृ० २७९ )



म० म० डाक्टर गंगानाथ झा,
प्रिंसिपल, गवर्नमेंट संस्कृत कालेज, बनारस
(१९१८–१९२३)

काशिक-राजकीय-संस्कृत-महाविद्यालयस्य

द्वितीयोपाधिवितरणोत्सवस्य

प्रसङ्गेन

अनुसन्धानमन्दिरप्रारम्भोत्सवे

महाविद्यालयप्रधानाचार्यस्य

ग्रन्थकर्तुः

# भाषणम्

माघकृष्ण ५, २००४ वै०

( ३०।१।१९४८ )

९८

# मातृभूमेरभिनन्दनम्

सा नो माता भारती भूर्विभासताम् ।

येयं देवी मधुना तर्पयन्ती
तिस्रो भूमीरुद्धृता द्योरुपस्थात् ।
कामान् दुग्धे विप्रकर्षत्यलक्ष्मीं
मेधां श्रेष्ठां सा सदास्मासु दध्यात् ॥१॥

सर्वे वेदा उपनिषदश्च सर्वा
धर्मग्रन्थाश्चापरे निधयो यस्याः ।
मृत्योर्मर्त्यानमृतं ये दिशन्ति वै
सा नो माता भारती भूर्विभासताम् ॥२॥

यां प्रच्युतामनु यज्ञाः प्रच्यवन्ते
उत्तिष्ठन्ते ते भूय उत्तिष्ठमानाम् ।
यस्या व्रते प्रसवे धर्म एजते
सा नो माता भारती भूर्विभासताम् ॥३॥

यां रक्षन्त्यनिशं प्रतिबुध्यमाना
देवा ऋषयो मुनयो ह्यप्रमादम् ।
राजर्षयोऽपि ह्यनघाः साधुवर्याः
सा नो माता भारती भूर्विभासताम् ॥४॥

महान्तोऽस्यां महिमानो निविष्टा
देवा गातुं यां क्षमन्ते न सद्यः ।
सा नो वन्द्या भ्राजसा भ्राजमाना
माता भूमिः प्रणुदतां सपत्नान् ॥५॥

( मेधातिथेर्मङ्गलदेवशास्त्रिणः )

[1] माननीयसभापतिमहोदयाः, देव्यः, सज्जनाश्च !

अद्वितीयो ह वा एष शुभावसरः काशिकराजकीयसंस्कृतमहाविद्यालयस्य दैर्घ्यकालिक इतिहासे यद्यमद्य, सहैव तस्य द्वितीयेनोपाधिवितरणोत्सवेन, तदीयानुसन्धानमन्दिरस्य प्रारम्भोत्सवमपि संभावयितुं समवेताः स्मः।

वर्षमिदं हि भारतवर्षस्येतिहासेऽभूतपूर्वम्। अनन्तरं हि बह्वीनां शताब्दीनां तस्य सुदिनं भूयः समुपस्थितम्, वयं च स्वकीयभाग्यविधातारः संवृत्ताः स्मः। एतादृशे सुयोगे संभाव्यमान एष प्रारम्भोत्सवोऽपि नूनं किमप्यद्वितीयं वैशिष्ट्यमावहति। सत्यमागामिनो भव्यभारतस्य शुभसंकेत एषः।

तदेतस्मिन् चिरायाविस्मरणीये शुभावसरे अहमात्मनो महाविद्यालयस्य च हेतोर् भवतः सर्वेषां महानुभावानां हार्दिकं सुस्वागतं ब्रवीमि।

प्रसन्नताया विषयो यदुक्तनवीनसंस्थाया उद्घाटनार्थमस्मत्प्रार्थना माननीयैः शिक्षामन्त्रिभिः स्वीकृता। तदर्थं सर्वेऽपि वयं तेषामतीव कृतज्ञाः। नूनमस्या नूतनसंस्थाया उपक्रमे त

---

१—२०।१।१९४८ ईस्वीतिथौ (माघ कृ० ५, २००४ वै०) काशिकराजकीयसंस्कृतमहाविद्यालयस्य द्वितीयोपाधिवितरणोत्सवेन सहैव प्रान्तीयशिक्षामन्त्रिणो माननीयश्रीसंपूर्णानन्दस्य सभापतित्वे निर्वृत्तस्यानुसंधानमन्दिरप्रारम्भोत्सवस्यावसरे महाविद्यालयस्याध्यक्षत्वेन ग्रन्थकर्त्रा प्रदत्तं भाषणम्।

एव हेतवः। अतस्तानेव पुरस्कृत्य तस्याः प्रारम्भोत्सवो निर्वर्त्त्यतामिति सर्वथा समुचितम्। परं तदर्थं तेषामर्थनायाः प्रागिदमावश्यकं प्रतीयते यत्प्रकृतप्रसङ्गदृष्ट्या महाविद्यालयस्यास्य ऐतिहासिकपर्यवेक्षणेन प्रस्तुतानुसन्धानमन्दिरस्य आधारभित्तेः स्वरूपं विशदीक्रियताम्।

## ऐतिहासिक-पर्यवेक्षणम्

### सरस्वतीभवनम्

यान्युद्देश्यान्यवलम्ब्य एष महाविद्यालयः १७९१ ई० वर्षे स्थापित आसीत् तेषु खलु **संस्कृतवाङ्मयस्य संरक्षणं प्रचारः समुन्नतिश्चेति** मुख्यान्यासन्। एषामुद्देश्यानां पूर्त्तये विशुद्धमहाविद्यालयविभागेन समवेत्र पुस्तकालयस्याप्येकस्य स्थापनमावश्यकत्वेनामन्यत। वर्तमानस्य विशालस्य सरस्वतीभवनस्य प्रारम्भस्तस्मादेव पुस्तकालयाद्जायत। तत्कालादारभ्यैव पुस्तकालय एव विशेषदृष्टेः पात्रमभूत्। आदौ महाविद्यालयप्रधानाध्यापक एव पुस्तकालयकार्यभारोऽपि न्यस्त आसीत्। प्रायेण १८१२ ई० संवत्सरे पुस्तकालयस्यापि कृते विशिष्टस्थानमेकं निर्मातव्यमित्येष निश्चयः क्रियते स्म। तस्मिन्नेव काले शतरूप्यकमासिकवेतनस्य पुस्तकालयाध्यक्षस्य नियुक्तिः संजाता, पञ्चाशद्रूप्यकवेतनौ च द्वौ सहायकौ नियुक्तौ।

संस्थापकानामभिप्रेतमासीद् यत्प्राग्वर्तिराजनीतिकविप्लववशात् कालकवलितानां प्राचीनपुस्तकालयानां यत्र तत्र विच्छिन्नै-

विलुप्तप्रायैश्च पुस्तकैः सहैव काश्यां बहिश्च निवसतां प्रसिद्धप्राचीन-पण्डितकुलानां पुस्तकसंग्रहाणामेकत्रीकरणं संरक्षणं चोक्तपुस्तका-लयद्वारा सुशकं भविष्यति।

अस्मिन् विषये सरस्वतीभवनेन प्रभूता सफलता समधिगतेत्यत्र नास्ति संदेहः। अथ मुगलशासनकाले सुप्रसिद्धस्य विदुषः पुस्तकसंग्रहीतुश्च सर्वविद्यानिधानकवीन्द्राचार्यसरस्वती-महोदयस्य नामाङ्कितानि उपशतं पुस्तकानि, भट्टभट्ट-शेष-धर्माधि-कारिप्रभृतिसुप्रसिद्धपण्डितकुलानां चानेके हस्तलिखितपुस्तक-संग्रहाः सरस्वतीभवने सुरक्षितानि विद्यन्ते। किं बहुना, नास्त्यत्र संदेहो यद् अद्यत्वे पृथिव्यामतिप्रसिद्धेषु हस्तलिखितसंस्कृतपुस्त-कालयेषु सरस्वतीभवनस्याप्येकं प्रमुखं स्थानमस्ति।

भारतीयसंस्कृतिसाहित्यविषयकः सरस्वतीभवनस्थो विभिन्न-भाषासु मुद्रितानां पुस्तकानां संग्रहोऽपि स्वकीयं वैशिष्ट्यं भजते। वस्तुतः सरस्वतीभवनं, यदीयभव्यभवननिर्माणं डाक्टरवेनिस (Dr. A. Venis) महोदयस्य प्रभावेण १९१४ ई० वर्षे संपन्नम्, स्वत एव महाविद्यालयस्यास्य अमूल्या संपत्तिरस्ति।

## ग्रन्थ-प्रकाशनम्

अनेन महाविद्यालयेन संस्कृतवाङ्मयस्य विलुप्तप्रायाणां दुर्लभानां च ग्रन्थानां संरक्षणेन सहैव एतद्वाङ्मयप्रकाशनविषये यत्कार्यं कृतं तदपि महत्त्वपूर्णमेव। चिरादेव महाविद्यालयोऽयं संस्कृतक्षेत्रे साहित्यिककार्यस्य प्रधानकेन्द्रत्वेनैव स्थितः। अस्य

दीर्घे इतिहासे एतदध्यक्षैरध्यापकैश्च स्वयमेव स्वप्रेरणया वा अस्यां दिशि यावत्कार्यं संपादितं तदुपरि पर्यवेक्षणात्मकदृष्टिपातनमिहाप्रासङ्गिकं न भवेत्।

तच्च कार्यं वयं स्थूलदृष्ट्या तिसृषु कोटिषु विभजामः।

प्रथमकोटौ तावद् वयं विभिन्नदृष्टिभिरद्य यावन्निष्पन्नं नवीनग्रन्थनिर्माणात्मकं तत्कार्यं स्थापयामो येन महाविद्यालयस्य संस्कृतसाहित्यसमुन्नतिविषयकमूलोद्देश्यस्य केनचिदंशेन पूर्त्तिर्जातेति कथयितुं शक्यते। एवंविधकार्यस्य प्रारम्भः प्रथमतो महाविद्यालयप्रधानाध्यक्षयोः श्री जे० म्यौर (J. Muir, Esq. C. S., १८४४-१८४५), डाक्टर जे० आर० वैलण्टाइन (Dr. J. R. Ballantyne, १८४६-१८६१) महोदययोः समये समजनि। एताभ्यां हि महोदयाभ्यां न केवलं तात्कालिकपाठ्यक्रमे गणितेतिहासपदार्थविज्ञानप्रभृतीनां नवीनविषयाणां समावेशार्थमेव प्रयतितम्, किन्तु तेषु विषयेषु संस्कृतभाषायां नूत्नोदन्तोदोत्स ( = नूत्न + उदन्त + उदन् + उत्स = इंग्लैण्डेतिहासः )-इतिहासतमोमणि ( = भारतवर्षस्येतिहासः )-पदार्थविद्यासार-मानसधर्म ( = Mental & Moral Philosophy )- विज्ञानसारसंग्रह ( = Synopsis of Science ) - प्रभृतीनां नवीनग्रन्थानां निर्माणमपि कृतम्।

ततः परं डा० वैलण्टाइनमहोदयस्य प्रयत्नेन स्थापितस्य तदानीन्तनस्य ऐंग्लोविभागस्य पर्यवेक्षणे पं० विट्ठल-

शास्त्रिप्रभृतिभिर्विद्वद्भिः कारिताः 'नोवुम् आर्गेनुम' (Novum Organum) सदृशपाश्चात्यग्रन्थानां संस्कृतेऽनुवादा अपि अस्यामेव कोटौ निपतन्ति। खेदावहमेतद् यत्तदानीं प्रवर्तितमेतन्नूतनग्रन्थनिर्माणकार्यं कतिपयप्रकारकत्रुटिवशात् स्थायित्वं न लेभे। परन्तु महाविद्यालयसंबन्धवशाद्वा तत्संबन्धस्योपयोगं विधाय वा यद् ग्रन्थनिर्माणकार्यं श्रीग्रिफिथ-थीवो (R. T. H. Griffith, Dr. G. Thibaut) प्रभृतिमहाविद्यालयाध्यक्षैः, म० म० पं० बापूदेवशास्त्रि, म० म० पं० सुधाकरद्विवेद, म० म० पं० गङ्गाधरशास्त्रिप्रभृतिसुप्रसिद्धाध्यापकैश्च कृतं तस्य महत्त्वम् कस्याविदितम्? एतदपि सुस्पष्टं महाविद्यालयस्यैव गौरवं ख्यापयति।

**द्वितीयकोटौ** महाविद्यालयस्य तन्महत्त्वपूर्णं कार्यं वर्त्तते यस्य सूत्रपातः श्रीग्रिफिथमहोदयस्य कार्यकाले १८६६ ई० वर्षे स्थापितस्य पण्डितपत्रापराभिधानस्य **काशीविद्यासुधानिधिनाम**कसंस्कृतपत्रस्य रूपेण जातः। अस्य पत्रस्य मुख्यमुद्देश्यं हि दुर्लभसंस्कृतग्रन्थानां तेषाम् इंग्लिशभाषानुवादानां च प्रकाशनमासीत्। एतत्पत्रद्वारा, १८६६ वर्षादारभ्य १९१७ पर्यन्तम्, राजकीयमहाविद्यालयीयप्रसिद्धाध्यापकैः सम्पादितानां शतासन्नप्राचीनदुर्लभसंस्कृतग्रन्थानां (यथासंभवम् इंग्लिशभाषानुवादसहितानाम्) प्रथमवारं मुद्रया प्रकाशनं च जातम्। कालेन प्रयत्नेऽस्मिन् शैथिल्यमुपागते, १९२० वर्षे म० म० डा० गङ्गानाथझामहो-

दयस्य प्रयत्नेन **'सरस्वतीभवनग्रन्थमाला,' 'सरस्वतीभवनानुशीलनपत्रिका'** च प्रारभ्येताम्। अद्यापि तत्कार्यं प्रायस्तेनैव रूपेण प्रचलति; पत्रिकयैव केवलमिदानीं **'सारस्वती सुषमा'** इति प्रसिद्धायाः प्राधान्येन संस्कृतपत्रिकाया रूपं धृतमास्ते। अस्यां नवीनग्रन्थमालायामद्य यावत् ८२ ग्रन्था इदंप्रथमं मुद्रिताः प्रकाशिताश्च। अनेके च ग्रन्था अद्यापि मुद्रणालय एव वर्त्तन्ते।

इत्थं पण्डितपत्र-सरस्वतीभवनग्रन्थमालाद्वारा अद्य यावद् **ग्रन्थानां प्रायेण द्विशती** प्रथमतः प्रकाशिता। कस्या अपि संस्थायाः कृते एतत् साहित्यिक कार्यं गर्वस्य विषयो भवितुमर्हति।

**तृतीयकोटौ** तत्साहित्यिकं कार्यमागच्छति यस्य प्रकाशनं तु संस्थान्तरैः कृतम्, परन्तु यदर्थं न केवलम् प्रेरणैव, किन्तु प्रधानसामग्र्यपि अनेन महाविद्यालयेनैव प्रदत्ता। अस्मिन् हि विभागे **विजयनगरग्रन्थमाला', 'बनारस संस्कृत सीरीज़', चौखम्भा संस्कृत सीरीज़'** प्रभृतिग्रन्थमालाः, एतन्महाविद्यालयसम्बद्ध म० म० पं० विन्ध्येश्वरीप्रसादद्विवेदप्रभृतिविद्वद्भिर्वैयक्तिकरूपेण सम्पादितान् ग्रन्थांश्चान्तर्भावयामः। अस्यामपि कोटौ शतशो महत्त्वपूर्णा ग्रन्थाः समापतन्ति।

## अनुसन्धानच्छात्रवृत्तयः

महाविद्यालये परीक्षार्थिनां छात्राणां कृते वृत्तीनां प्रबन्धे

सत्यपि, अनुसंधानकार्यार्थं छात्रवृत्तिप्रबन्ध ऊनविंशशताब्दीपर्यन्तं नासीदेव। अस्या न्यूनतायाः पूर्तिः १६०५ ई० वत्सरासन्नकाले डा० वेनिसमहोदयस्य प्रेरणया 'राजा मुंशी माधोलाल' प्रदत्त-४२००० रूप्यकात्मकनिधिद्वारा स्थापिताभिः माधोलालच्छात्रवृत्तिभिः संजाता। प्राधान्येन आधुनिकपद्धत्या अनुसन्धानशिक्षाप्रदानार्थमेव एतासां वृत्तीनां स्थापनमक्रियत। एता अद्यापि प्रचलन्त्येव। १६२० ई० वर्षे म० म० डा० गङ्गानाथझा महोदयप्रेरणया वर्षत्रयस्थायिन्यो विंशतिरूप्यकमासिकात्मिकाः षट् 'पोस्ट-आचार्य'च्छात्रवृत्तयः प्रतिवर्षं दातव्या इत्यधिकारिभिर्योपितम्। प्रौढपाण्डित्यप्रवर्धनमेव वृत्तीनामासां लक्ष्यत्वेन निर्दिष्टमासीत्।

## अनुसन्धान-मन्दिरस्यावश्यकता

उपरिनिर्दिष्टेन ऐतिहासिकपर्यवेक्षणेन स्पष्टमिदं यदेनेन महाविद्यालयेन अद्य यावद् यद् वाङ्मयप्रकाशनसंबन्धि अनुसन्धानसंबन्धि च कार्यं कृतं तत् स्वसमयदृष्ट्या सन्तोषावहमिति कथयितुं शक्यते। तथापीदं सत्यमस्ति यद् महाविद्यालयसंबन्धिकार्यक्रमे तेन कार्येणाद्य यावत् कदापि प्रमुखस्थानं न लब्धम्। अत इदं स्वाभाविकमेव यत् संस्कृतजगतः साहित्यिकानुसन्धानकार्ययोर्वर्त्तमानमानदृष्ट्या तत्कार्यमसाम्प्रतिकं प्रतीयते। अत आधुनिकपरिस्थितिं निभालयता इदमेव वक्तव्यं यदवसरोऽयमुपस्थितो यदा उपर्युक्तं सर्वकार्यं वास्तविकताया आधारेणैव संपादनीयम्।

शब्दान्तरेषु, सरस्वतीभवनस्य विशिष्टानुसन्धान-मन्दिर-रूपेण संवर्धनं विकासश्च प्राप्तकालत्वेनात्यावश्यकं संजातम्। शासकैः १९३८ ई० वर्षे स्थापितया 'महाविद्यालयपुनःसंघटनसमित्या' एष एव प्रस्तावस्तेषां पुरः सुदृढं स्थापित आसीत्। प्रसन्नता-स्पदमेतद् यदधिकारिभिः स प्रस्तावः स्वीकृतः, तत्परिणामरूपश्च संस्कृतज्ञलोकेन चिराय सोत्कण्ठमुदीक्षितो वासरो लोकविदित-वैदुष्याणां संस्कृतविषयकप्रगाढानुरागाणां च एतत्प्रा-न्तीयमाननीयशिक्षामन्त्रिणां तत्परतया समुत्साहेन चाद्य समुपस्थितः।

## अनुसन्धान-मन्दिरस्य रूपरेखा

पूर्वोक्ताधारभित्तौ निर्मीयमाणाम्, चिरन्तनकालात् संस्कृत-विद्याया अद्वितीयप्रतिष्ठानभूतायामस्यां वाराणस्यां च स्थाप्यमान-मेतदनुसन्धानमन्दिरं स्वभावत एव सर्वेषामाशाबाहुल्यस्य केन्द्रं भविष्यतीति न प्रतिपादनमपेक्षते। तथापि केनापि मानदण्डेन एतस्य कार्यं स्वक्षेत्रेऽनुसन्धानमन्दिरान्तरस्य कार्याद्, उच्चकोटिकं न चेद्, निम्नकोटिकमपि भवितुं नार्हति। एतदनुसन्धानमन्दिरस्याप-कानामधिकारिणामपि ईदृश एवाभिप्राय इति नो विश्वासः।

अनया दृष्ट्या एतस्यानुसन्धानमन्दिरस्य लक्ष्याणि वयं तात्का-लिकदैर्घकालिकभेदाभ्यां विभजामः। प्रारम्भिककाले अस्य कार्यक्षेत्रं स्वभावत एव तात्कालिककार्यक्रमेण सीमाबद्धमेव तिष्ठेत्, दैर्घका-लिकः कार्यक्रमस्तु कालान्तरेणैव व्यवहर्तुं शक्यते।

## तात्कालिककार्यक्रमः

अनुसन्धानमन्दिरस्य तात्कालिककार्यक्रमस्तावदधोनिर्दिष्टप्रकारेण चतुर्विधो भवेत्—

(१) ग्रन्थमाला

(२) अनुसन्धानपत्रिका

(३) उत्तराध्ययन(=Post-graduate Study)स्य अनुशीलनानुसन्धानयोश्च प्रबन्धः

(४) हस्तलिखितपुस्तकानां प्रामाणिकसूचीपत्राणि च।

एतेषां विवरणमधो निर्दिश्यते—

## ग्रन्थमाला अनुसन्धानपत्रिका च

स्वनामानुरूपमस्यानुसन्धानमन्दिरस्य सर्वतो मुख्यमिदमेव लक्ष्यं यदेतन्महाविद्यालयसंसृष्टाः, अनुसन्धानमन्दिरसम्पर्किणश्च विद्वांसः स्वविशिष्टविषयेषु वैज्ञानिकप्रक्रियानुसारम् अनुसन्धानकार्यं कर्तुं प्रेरिताः प्रोत्साहिताश्च भवेयुः, तेषामनुसन्धानकार्यस्य च समुचितप्रकाशनप्रबन्धो विधेय इति। तदर्थं तावन्महाविद्यालयस्य 'सारस्वती सुषमा' पत्रिकैव त्रैमासिकानुसन्धानपत्रिकारूपेण प्रकाशनीयेति निर्धारितम्। एवमेव सरस्वतीभवनग्रन्थमालामपि उत्कृष्टग्रन्थमालारूपं ग्राहयित्वा, तस्यां वैज्ञानिकपद्धत्या सम्पादितानां प्राचीनानाम्, अद्यावधि अमुद्रितानाम्, ग्रन्थानामेव सामान्यतः प्रकाशनं भवेदित्यपि अस्मदीयो विचारः। प्राधान्येन

नैकशताब्दीतो वाराणस्यामध्ययनाध्यापन-परम्परायां प्रचलितेषु वेदव्याकरणदर्शनतन्त्रधर्मशास्त्रविषयेष्वेव विशिष्टग्रन्था महाविद्यालयस्थैरन्यैश्च विद्वद्भिः सम्पाद्य ग्रन्थमालायामस्यां प्रकाशिता भवेयुः। महत्त्वभाजो मौलिकग्रन्था अप्यत्र प्रकाश्येरन्।

प्राचीनग्रन्थसम्पादनविषये वैज्ञानिकपद्धतेः परमावश्यकतेति न तिरोहितं विदुषाम्।

परमेतत् खेदास्पदं यदद्यापि अस्मद्देशे तन्महत्त्वं प्रायेण नावगम्यते। यः कोऽपि, नितरां ग्रन्थसम्पादनकलया अपरिचितोऽपि, स्वेच्छानुरूपं सम्पादकार्यं कर्तुमारभते। नासौ संपादनकार्यार्थमाधारपुस्तकानां तत्पाठान्तराणां वा परस्परसंबन्धमवगन्तुं पारयति, न च तेषां प्रामाणिकतामप्रामाणिकतां वा परीक्षितुं शक्नोति। एतस्या अनास्थाया एवैष दुष्परिणामो यदनेकेषां प्रकाशितग्रन्थानां पाठाः प्रायेणोत्तरोत्तरं भ्रंशमाना दृश्यन्ते; अनेकेषां च तेषां प्रामाणिकता, संपादकानामसावधानतावशाद्वा मूलग्रन्थे मनःकल्पितपाठपरिवर्तनादिहेतुभिर्वा, साधारणमूलादर्शपुस्तकापेक्षयापि, न्यूनतरैव दृष्टिपथमागच्छति।

एतस्या दुष्परिस्थितेः प्रतीकारार्थं यत्रैकतोऽद्यावध्यमुद्रितानां ग्रन्थानां प्रकाशनमावश्यकम्, तत्रैव परतस्तेषां सम्पादने वैज्ञानिक-प्रक्रियाया अवलम्बनमपि सविशेषमावश्यकम्। एतासामावश्यकतानां पूर्त्तिरेव प्रथमं लक्ष्यं भवेदुक्तग्रन्थमालाया इत्येष नो विचारः।

## अनुसन्धानार्थं छात्रवृत्तयः

आशास्महे यदियं संस्था किञ्चित्कालानन्तरमेव अनुसन्धानेन सहैव उत्तराध्ययनस्यानुशीलनस्य च केन्द्रत्वपदमाप्स्यति। इद-मेवाभिलक्ष्य अद्यत्वे छात्रेभ्य आकर्षणरहिता महाविद्यालयस्य पोस्ट-आचार्यवृत्तीरपास्य तत्स्थाने कतिपयास्तद्विशिष्टाश्छात्र-वृत्तयः स्थापिताः सन्त्यधिकारिभिः। एता वृत्तयो 'विशिष्टाचार्य'-'वाचस्पति' नामकविशिष्टपरीक्षयोः कृते दास्यन्ते। एतदध्य-यनकालश्च क्रमेण द्वे त्रीणि च वर्षाणि यावद् भविष्यति। वाच-स्पतेः पदं विश्वविद्यालयानां 'डाक्टर' इत्युपाधेः समानं भवेदित्य-स्माकमभिवाञ्छितम्। दृढमाशास्महे यदेताभिर्वृत्तिभिः संस्कृतवा-ङ्मयविषये मौलिकानुसन्धानस्य नूतनग्रन्थनिर्माणस्य च प्रवृत्तिरभीष्टमुत्साहं लभेत।

स्पष्टमिदं यदनुसन्धानानुशीलनयोः क्षेत्रस्य विस्तारेण सहैव संस्थायां विभिन्नविषयेषु विशेषज्ञानां विदुषामावश्यकता भविष्यति। नूनमत्र विषयेऽधिकारिणो यथावसरं दत्तावधाना भवि-ष्यन्तीत्याशास्यते।

## हस्तलिखितपुस्तकानां प्रामाणिक्यः सूचयः

अनुसन्धान-मन्दिरस्यान्तिमस्तु तात्कालिककार्यक्रमः सरस्वतीभवने संगृहीतानां पञ्चाशत्सहस्रासन्नानां हस्तलिखितपुस्तकानां परीक्षणपुरस्सरं विषयानुसारिवर्गीकरणं प्रामाणिकसूचीनिर्माणं च भविष्यति ।

कस्यापि पुस्तकालयस्य सदुपयोगाय तत्रत्यपुस्तकानां प्रामाणिकं सूचीपत्रमपेक्ष्यते। तत्र हस्तलिखितपुस्तकानां कस्यापि विशालसंग्रहस्य विषये तु, यत्र अद्यावधि अमुद्रितानां परःसहस्रं ग्रन्थानां संभावना भवेत्, सूचीपत्राण्यतितरामावश्यकानि। एतत्सूचीपत्रनिर्माणप्रसङ्गेन कियन्ति तिरोहितानि अमूल्यानि ग्रन्थरत्नानि पुनर्लभ्येरन्निति न वक्तुं शक्यते। तानि ग्रन्थरत्नानि अन्वेषयितुम्, तेषां यथार्थं मूल्यं विनिश्चेतुम्, अपूर्णग्रन्थानां स्वरूपं निर्धारयितुञ्च विशेषज्ञ एव विद्वानपेक्ष्यते निरीक्षकत्वेनास्य कार्यस्य। भारते यूरोपीयदेशेषु च सुप्रसिद्धहस्तलिखितसंस्कृतपुस्तकसंग्रहाणां सूचीपत्राणि म० म० डा० हरप्रसादशास्त्रि-वेबर-कीथ-एग्लिंग-आउफ्रेक्ट्प्रभृतिसुप्रसिद्धविद्वद्भिरेव सम्पादितानि सन्ति ।

एतादृशप्रामाणिकसूचीपत्रद्वारैव देश्या वैदेशिकाश्च विद्वांस एतादृशसंग्रहाणामुपयोगं कर्तुं शक्नुवन्ति ।

अलमेतत्प्रतिपादनेन यदुपर्युक्तं तात्कालिकं कार्यक्रममेव तावद्

यथाविधि सफलतापूर्वकं सम्पादयदिदमनुसन्धानमन्दिरं नूनं देश-देशान्तरीयसंस्कृतानुसन्धानसंस्थासु प्रमुखमेकं स्थानमासादयितुं प्रभविष्यति। स्मरणीयन्त्विदमेव यत् कस्मिन्नपि कार्ये सफलताया रहस्यं तत्संपादनप्रकार एव निहितं भवति।

## दैर्घकालिकः कार्यक्रमः

पूर्वं प्रतिपादितं यत्तात्कालिककार्यक्रमातिरिक्तो दैर्घकालिक-कार्यक्रमोऽप्येकोऽस्यानुसन्धानमन्दिरस्य भविष्यति। अस्माकं विचारेण तस्य कार्यक्रमस्य स्वरूपेण तथा व्यापकेन भाव्यं यथैतन्न केवलं महाविद्यालयस्यास्य साम्प्रतिकदेशव्यापिप्रभावस्य, भाविनो वा तस्य विस्तारस्य, किन्तु भारतीयसंस्कृतेः प्रमुखप्रतिष्ठानत्वेन विश्वविख्यातायाः अस्याः वाराणस्या गौरवस्याप्यानुरूप्यं भजेत। अस्यायमेव निष्कृष्टोऽर्थो यदिदमनुसन्धानमन्दिरं तथा विकासमाप्नुयात् यथेदम्, न केवलमेशियाखण्डे, अपि तु सर्वस्मिन्संसारे, वास्तविकदृष्ट्या भारतीयसंस्कृतेः, साहित्यस्य, दर्शनस्य चोच्चराध्ययनार्थम् अनुसन्धानार्थम् अनुशीलनार्थं च प्रमुखं केन्द्रं भवितुं शक्नुयात्। अस्य दृष्टिर्विशालभारतीया भवेत्, वैदिकबौद्धजैनादिरूपेण विस्तृताया भारतीयसंस्कृतेरपेक्षया चास्य महत्त्वमान्ताराष्ट्रिकं भवेत्।

अष्टादशशताब्द्या अन्तिमभागमारभ्य यन्महत्त्वयुक्तं कार्यं प्रायेण वैदेशिकैर्विद्वद्भिर्भारतीयवाङ्मयस्य, विशेषतः संस्कृतसा-

हित्यस्य तद्द्वारार्थं कृतं तत्सर्वथा श्लाघनीयमेव। एतस्मिन्नेव काले भारतीयसंस्कृतेर्हृदयमन्तरात्मानं वा अवबोद्धुं तैर्बाढं प्रयतितम्। परन्तु सर्वोऽप्ययं तेषां प्रयत्नः, सर्वथा श्लाघ्योऽपि, भारतीयदृष्ट्या वस्तुतः सफलः सन्तोषावहश्चेति वक्तुं न शक्यते।

वस्तुतस्तु भारतीयसंस्कृतेर्वास्तविकं स्वरूपं तस्यामास्थावन्तो भारतीया एव विद्वांसो बोद्धुं बोधयितुं च प्रभवन्ति। तया संस्कृत्या हि इतिहासे एकदा मानवसमाजाय, न केवलं विशालभारतक्षेत्र एव, अपि तु मेक्सिकोपर्यन्तं विस्तृतेषु देशदेशान्तरेष्वपि, वास्तविकशान्तेः, सुखस्य, सहिष्णुतायाः, प्रेम्णश्च सन्देशो दत्त आसीत्। निखिलेऽपि जगति इयमेवैका संस्कृतिर्या लोकपरलोकयोर्भुक्तिमुक्त्योरभ्युदयनिःश्रेयसयोर्जातिव्यक्त्योर्विभिन्नधार्मिकसम्प्रदायानां च द्वन्द्वे परस्परं समन्वयं सामञ्जस्यं च स्थापयितुं शक्नोति, सन्तप्तमुद्विग्नं च मानवसमाजं वास्तविकीं शान्तिं परस्परं सौहार्दं चोपदेष्टुं पारयति।

इत्थञ्च अस्यानुसन्धानमन्दिरस्य सर्वप्रधानं मौलिकं वा लक्ष्यन्तु भारतीयसाहित्यदर्शनयोरनुशीलनानुसन्धानाभ्यां भारतीयसंस्कृतेरन्तरात्मनो दर्शनं, तदीयवास्तविकसन्देशस्य च संसारे प्रचारणमेव भवितुमर्हति। निस्सन्देहमेतद् यदिदानीमनेकशताब्द्यनन्तरं दास्यबन्धनादुन्मुक्तेऽस्मिन्वातावरणे भारतीया एव कार्यमिदं कर्तुं शक्नुयुः। एतत् प्रधानं लक्ष्यमभिलक्ष्यैव अस्यानुसन्धानमन्दिरस्य दैर्घकालिककार्यक्रमो निर्धारणीयः।

अस्मन्मते लक्ष्येऽस्मिन् सफलताप्राप्त्यै अस्माकं दैर्घकालिकी योजना अधोलिखितानुसारं भवितुमर्हति।

## विशेषज्ञानां विदुषां नियुक्तिः

दैर्घकालिकयोजनां कार्यान्वितां कर्तुम्, विभिन्नविषयेषु अनुशीलनानुसन्धानानुकूलां परिस्थितिं च संपादयितुं सर्वप्रथममनुसन्धानमन्दिरे तुलनात्मिकया ऐतिहासिक्या च दृष्ट्या भारतीयपुरातत्त्वे भाषाविज्ञाने वेदादिवाङ्मये दर्शनविषये च विशेषज्ञानां विदुषां नियुक्तेरावश्यकता भविष्यति।

ईदृशान्विदुषो विना विभिन्नविषयेषु वाचस्पतिसदृशपरीक्षायां कृते समुचितप्रबन्धोऽपि न कर्तुं शक्यते।

किञ्च प्रौढिदृष्ट्या विस्तारदृष्ट्या च महाविद्यालयेऽध्ययनाध्यापनयोर्दशायां क्रमशोऽभ्युन्नतिरप्यपेक्षिता भविष्यति। तत्रापि पूर्वोक्तनियुक्तिभिर्नूनं साहाय्यं लभ्येत।

## नूतनग्रन्थनिर्माणाय प्रोत्साहनम्

तात्कालिककार्यक्रमप्रसङ्गेन प्राचीनानामसुद्रितानां ग्रन्थानां प्रकाशनस्योल्लेखोऽस्माभिरुपरिष्टात् कृत एव।

सहैव तेन इदमप्यावश्यकं यत्प्राचीनविभिन्नविषयेषु गम्भीरव्यापकाध्ययनानन्तरं नूतना निबन्धा लेखनीया इति। दृष्ट्यन्तरेणापि नूतनग्रन्थनिर्माणमावश्यकं प्रतीयते।

अतिरोहितमेतद्विदुषां यदस्माकं चैरकालिकराजनीतिकदास्यवशात् संस्कृतसाहित्यस्य विभिन्नविषयेषु प्रगतिरनेकशताब्दीतोऽवरुद्धैव तिष्ठति। तेषां सर्वं दृष्टिक्षेत्रं मध्यकालीनमेव। या पुनः स्वतन्त्रेषु देशान्तरेषु विद्यायाः साम्प्रतमभ्युन्नतिः सम्पन्ना तयास्माकं संस्कृतवाङ्मयमद्यापि अस्पृष्टमेवास्ते। अत एव संस्कृताध्ययनाध्यापने वर्तमानजगति अद्यापि प्राचीनवस्तुसंग्रहालयरूपेणैव दृश्येते। न तयोः सांप्रतिकता अद्यावधिकता वा विद्यते। अत्यन्तमावश्यकमेतद् यदियं स्थितिः परिवर्तेत, अस्माकं संस्कृतज्ञा विद्वांसश्च स्वस्वविषयेषु साम्प्रतिकज्ञानस्य समकक्षतामानेतुं प्रयतेरन्निति।

अनया दृष्ट्यापि नूतनग्रन्थनिर्माणप्रवृत्त्यै प्रोत्साहनदानमस्यानुसन्धानमन्दिरस्य विशिष्टं लक्ष्यं भवितुमर्हति।

## वैदेशिकभाषाणां शिक्षणस्य प्रबन्धः

आधुनिकजगति जातैराविष्कारविशेषैरद्यत्वे संसारोऽयमतिसङ्कुचित इव प्रतीयते। गमनागमनयोः सौकर्यकारणेन अद्यत्वे तस्य विस्तारो व्यावहारिकदृष्ट्या प्राचीनकालिकैकप्रान्ततोऽप्यल्पीयानेव। अत एव देशदेशान्तरेषु परस्परं विचाराणामादानप्रदानं प्रात्यहिकं वृत्तम्। अत एव च ज्ञानस्य प्रत्येकं क्षेत्रे क्रमशो लब्धपदा

सार्वभौमता समालोच्यते। अस्यां परिस्थितौ संसारस्य समुन्नतज्ञान-विज्ञानेन सह वास्तविकसंपर्कस्थापनार्थम्, वैदेशिकैर्विद्वद्भिर्यदद्भुतं गवेषणात्मकं कार्यमैतिहासिकतुलनात्मकप्रक्रिययोरवलम्बेन प्राचीनसंस्कृतीनां विषये कृतं तस्योपयोगार्थम्, भारतीयसंस्कृतिसन्देशं च देशान्तरेषु नेतुं संस्कृतज्ञानां विदुषां कृते तत्तद्देशीयसमुन्नतप्रधानभाषाणाम्, विशेषतस्तु प्राचीनविशालभारतक्षेत्रस्य मुख्यभाषाणाम्, ज्ञानमत्यन्तमावश्यकम् ।

अत एव अस्मन्मते काशीहिन्दुविश्वविद्यालय-काशीविद्यापीठयोः सहयोगेन अनेनानुसन्धानमन्दिरेण इंग्लिशभाषया सार्धं जर्मनी-फ्रांस-रूस-चीन-तिब्बतदेशीयभाषाणामपि शिक्षायास्य समुचितः प्रबन्धः करणीयः ।

अस्मदीय एष विश्वासो यद् यदीदमनुसन्धानमन्दिरं पूर्णविकासाय अवसरं लभते, तर्हि कतिपयवर्षानन्तरमेव तथाविधः समयः समुपस्थितो भविष्यति यदा, प्राचीनकाले काश्यपमातङ्ग-उपाध्यायदीपङ्कर-श्रीज्ञान-कुमारजीव-परमार्थ-प्रभृतिभारतीयविद्वांस इव, पुनरप्यस्माकं संस्कृतज्ञा विद्वांसोऽस्माकं संस्कृतेः सन्देशवाहका भूत्वा विदेशेषु गमिष्यन्ति, वैदेशिकविश्वविद्यालयैश्च सह महोपाध्यायानां परिवर्तनञ्च प्रारप्स्यते ।

## वैदेशिकानां विदुषामुत्तराध्ययनस्य प्रबन्धः

अनुसन्धानमन्दिरेण आत्मन उपरिनिर्दिष्टकार्यक्रमे सफलता लभ्यते चेत्तर्हि न तद्दिनं दूरे यदा प्राचीनकालिक-इत्सिंग-फाहियान-

युश्रांग्च्वांग्-अलुबरूनीप्रभृतिविद्वांस इव अनेके वैदेशिका विद्वांसो भूयोऽपि भारतीयज्ञानस्य उत्तराध्ययनाय अनुशीलनाय च इहागन्तुं समुत्सुका भविष्यन्ति। तस्यामवस्थायां तादृशानां विदुषां कृते इह निवासस्थानविद्याध्ययनादिसौलभ्यस्यापि प्रबन्ध आवश्यकत्वेन करणीयो भविष्यति।

## उपसंहारः

संक्षेपेणानुसन्धानमन्दिरस्य दैर्घकालिककार्यक्रमस्य इयमेव रूपरेखा। परमस्य महाविद्यालयस्य यादृशे विकासे सर्वमेतत् सम्भाव्यते तादृशो विकासो नूनं विश्वविद्यालयरूपेण तस्य समुन्नतिमपेक्षते। अत एतन्महाविद्यालयस्य एतन्महाविद्यालयसंबद्धानां परःशतानां विद्यालयानां च प्रातिनिध्येन प्रान्तीयाधिकारिवर्गस्य पुरस्तादस्माकमियमेवाभ्यर्थना यद्, यथासंभवम् भारतीयस्वतन्त्रताया ऐतिहासिकेऽस्मिन् वर्षे एव, संस्कृतविश्वविद्यालयस्थापनासमारम्भस्य घोषणावश्यं क्रियताम्।

सौभाग्येन प्रान्तेऽस्मिन् संस्कृतशिक्षायाः प्रधानस्तम्भभूता अस्माकं माननीयाः शिक्षामन्त्रिमहोदया अद्यैव विराजन्ते। संस्कृतस्य संस्कृतविदुषां च प्रोत्साहनाय प्रभूतं प्रयतितमत्रभवद्भिः। तदर्थं न पारयामो वयं पर्याप्तान् धन्यवादान् प्रदातुं श्रीमद्भ्यः। दृढमाशास्महे यन्नूनं श्रीमतां द्वारैवास्माकं विश्वविद्यालयस्यापि स्थापना भविष्यति। पर्यवसाने श्रीमन्तोऽनुसन्धान-मन्दिरस्य प्रारम्भणीयं भाषणम् आरभन्तामिति प्रार्थ्य विरमामि॥

---

( पृ० २९३ )



विद्यामार्तण्डः डा० मंगलदेव शास्त्री
वाराणसेय संस्कृत विश्वविद्यालयस्य उपकुलपतिः
(१९६१–      )

# समावर्तनसत्रपद्धतिः[१]

[ १९४७ तमख्रिस्तवत्सरे 'गवर्नमेन्ट संस्कृत कालेज, बनारस' इत्याख्य-सुप्रसिद्धसंस्थायाः सार्धशताब्दीपूर्त्तिस्मारको महोत्सव उत्तरप्रदेश-राज्यस्य ( तदा संयुक्तप्रान्तस्य ) मुख्यमन्त्रिणः श्रीगोविन्दवल्लभ-पन्तमहोदयस्य सभापतित्वे महता समारम्भेणोत्साहेन च संपन्न आसीत् । ततः कालादारभ्यैव उपाधिपरीक्षोत्तीर्णस्नात-केभ्यः सविधि प्रमाणपत्रादिसमर्पणनिमित्तं प्रतिवर्षं समावर्तनसत्रस्य व्यवस्था प्रचलिता । महाविद्या-लयस्यास्य दैर्घकालिक इतिहासे न केवलमिदं-प्रथमतया,किन्तु स्नातकानां पुरस्तात्तेषां शिक्षा-या विशिष्टानामादर्शानामुद्बोधकत्वेनापि सत्रस्यास्य विशेषमहत्त्वम् । तदस्मिन् सत्रे प्रतिवर्षमनुष्ठियमाणा पद्धति-रधः प्रकाश्यते । पद्धतिरियमन्य-संस्कृतशिक्षासंस्थाभिरपि यत्र तत्रानुष्ठियत इति नः संतोषस्य विषयः ]

( १ ) सदसस्पतिः = सभापतिः

( २ ) कुलपतिः = महाविद्यालयाध्यक्षः ( प्रिंसिपल )

---

१. प्रथमोल्लासस्य परिशिष्टरूपेणेयं समावर्तनसत्रपद्धतिरत्र प्रकाश्यते ।

( ३ ) प्रस्तोता = स्नातकानामुपस्थापयिता

( ४ ) प्रवक्ता = दीक्षान्त-भाषणकर्ता

( सत्रमण्डपे* कुलपतेर्भाषणानन्तरम् )

**सदसस्पतिः**—अथातः समावर्त्तनसत्रमारभध्वम् ।

**कुलपतिः**—भो ब्रह्मन्! पुरःस्वस्त्ययनमन्त्रान् ब्रूहि ।

( वेदाचार्यः स्वशिष्यगणेन सह अधोनिर्दिष्टान् मन्त्रान् पठेत् )

(१) भद्रं कर्णेभिः शृणुयाम देवा
भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवा ँसस्तनूभि-
र्व्यशेमहि देवहितं यदायुः ॥
( यजु० २५।२१ )

(२) यत् प्रज्ञानमुत चेतो धृतिश्च,
यज्ज्योतिरन्तरमृतं प्रजासु ।
यस्मान्न ऋते किञ्चन कर्म क्रियते,
तन्मे मनः शिवसंकल्पमस्तु ॥
( यजु० ३४।३ )

(३) यस्मिन् ऋचः साम यजू ँषि,
यस्मिन् प्रतिष्ठिता रथनाभाविवाराः ।

---

* प्रथमसमावर्तनसत्रे कुलपतिस्तत्समये महाविद्यालयाध्यक्षः श्रीमङ्गलदेवशास्त्री एतद्ग्रन्थकर्ता ।

यस्मिंश्चित्त ँ॒ सर्वमोतं प्रजानां
तन्मे मनः शिवसंकल्पमस्तु ॥
(यजु० ३४।५)

(४) अग्ने नय सुपथा राये अस्मान्
विश्वानि देव वयुनानि विद्वान्।
युयोध्यस्मज्जुहुराणमेनो
भूयिष्ठां ते नमउक्ति विधेम ॥
(यजु० ४०।१६)

(५) असतो मा सद्गमय। तमसो मा ज्योतिर्गमय।
मृत्योर्माऽमृतं गमय ॥
(बृहदारण्यकोपनिषदि १।३।२८)

(६) यश्छन्दसामृषभो विश्वरूपः। छन्दोभ्योऽध्यमृतात्संबभूव। स मेन्द्रो मेधया स्पृणोतु। अमृतस्य देव धारणो भूयासम्। शरीरं मे विचर्षणम्। जिह्वा मे मधुमत्तमा। कर्णाभ्यां भूरि विश्रुवम्। ब्रह्मणः कोशोऽसि मेधया पिहितः। श्रुतं मे गोपाय ॥
(तैत्तिरीयोपनिषदि १।४।१)

(७) मन्द्रा कृणुध्वं धिय आतनुध्वं
नावमरित्रपरणीं कृणुध्वम्।
इष्कृणुध्वमायुधारं कृणुध्वं
प्राञ्चं यज्ञं प्रणयता सखायः ॥
(ऋग्० १०।१०१।२)

कुलपतिः—भोः स्नातकाः ! साधु भवन्तोऽवहिताः शृण्वन्तु ।

( श्रुत्वैतत् सर्वे स्नातकाः समुत्तिष्ठेयुः )

कुलपतिः—( १ ) स्नातकाः ! अपि प्रतिजानते भवन्तो यत्सर्वदा स्मृतिमास्थाय आर्यवृत्तमनुतिष्ठद्भिः पाण्डित्य-प्रकर्षार्थं च प्रयतमानैर्भवद्भिः काशिकराजकीयसंस्कृतमहाविद्यालयीयपरीक्षायां गौरवस्य मर्यादायाश्च संरक्षणं विधास्यते ?

स्नातकाः—आम् , नूनम् ।

कुलपतिः—(२) स्नातकाः ! अपि प्रतिजानते भवन्तो यद् भारतीयशीलसदाचारपरम्पराया आदर्शमभिलक्ष्य मनसा वाचा कर्मणा च सदा तथा प्रयतिष्यते भवद्भिर्यथा भारतीयसंस्कृतेः सुयशो जगद्व्यापि भवेत् ?

स्नातकाः—आम, नूनम् ।

कुलपतिः—(३) स्नातकाः ! अपि प्रतिजानते भवन्तो यत् परहितसाधन एवात्महितं समीक्षमाणैर्भवद्भिरज्ञानस्यान्यायस्य दैन्यस्य दारिद्र्यस्य च प्रतीकारेण ज्ञानस्य, न्यायस्य, आत्मगौरवस्य, समृद्धेश्च स्थापनया मातृभूमिर्भारतं सबलं, सम्पन्नं, सम्मानास्पदं च यथा सम्पद्येत तथैव प्रयतिष्यते ?

स्नातकाः—आम, नूनम् ।

( ततः परं स्नातकैः संभूयाधोनिर्दिष्टा प्रतिज्ञा कर्तव्या )

ॐ अग्ने व्रतपते व्रतं चरिष्यामि ।

तच्छकेयं तन्मे राध्यताम् ।

इदमहमनृतात् सत्यमुपैमि ॥ ( यजु० १।५ ) ।

( ततः परं सर्वे स्नातका उपविशेयुः )

—

कुलपतिः—भोः प्रस्तोतः! अथ स्नातका यथाक्रममुपस्थाप्यन्ताम् ।

प्रस्तोता—माननीयाः सदसस्पतयः ! अहं खलु भवतां समक्षं·········उपस्थापयामि । एभिः / एनेन यथाविधि गुरुशुश्रूषया······विद्या समधिगता, परीक्षाद्वारा च स्वकीया·········उपाधियोग्यता प्रमाणिता । प्रार्थये यत्प्रमाणपत्रवितरणेन एनान् / एनम् उक्तोपाधिनालंकुर्वन्तु अत्रभवन्त इति ।

—

( उपाधिप्रमाणपत्रदानोत्तरं पदकप्रदानार्थमपि स्नातका अधोलिखितप्रकारेण उपस्थापयिष्यन्ते )

प्रस्तोता—माननीयाः! अहं खलु भवतां समक्षं·········उपस्थापयामि । एनेन·········शास्त्रे परीक्षाद्वारा विशेषयोग्यता प्रमाणिता । प्रार्थये यत् स्वर्ण / रजतपदकप्रदानेन एनमलंकुर्वन्तु अत्रभवन्त इति ।

—

( ततः परं कुलपतेरादेशः )

( १ )

ॐ सह नाववतु। सह नौ भुनक्तु। सह वीर्यं करवावहै। तेजस्वि नावधीतमस्तु। मा विद्विषावहै।

( कठोपनिषद्। शान्तिपाठः )

( २ )

संगच्छध्वं सं वदध्वं
सं वो मनांसि जानताम्।
देवा भागं यथा पूर्वे,
संजानाना उपासते॥

( ऋ० १०।१९१।२ )

( ३ )

समानी व आकूतिः समाना हृदयानि वः।
समानमस्तु वो मनो यथा वः सुसहासति॥

( ऋ० १०।१९१।४ )

( ४ )

वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति—

सत्यं वद। धर्मं चर। स्वाध्यायान्मा प्रमदः। आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः।

सत्यान्न प्रमदितव्यम्। धर्मान्न प्रमदितव्यम्। कुशलान्न प्रमदितव्यम्। भूत्यै न प्रमदितव्यम्। स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम्।

देवपितृकार्याभ्यां न प्रमदितव्यम्। मातृदेवो भव। पितृदेवो भव। आचार्यदेवो भव। अतिथिदेवो भव।

यान्यनवद्यानि कर्म्माणि तानि सेवितव्यानि, नो इतराणि। यान्यस्माकं सुचरितानि तानि त्वयोपास्यानि, नो इतराणि। ये के चास्मच्छ्रेयांसो ब्राह्मणास्तेषां त्वयासनेन प्रश्वसितव्यम्।

श्रद्धया देयम्। अश्रद्धयाऽदेयम्। श्रिया देयम्। ह्रिया देयम्। भियाऽदेयम्। संविदा देयम्।

अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्, ये तत्र ब्राह्मणाः संमर्शिनो युक्ता आयुक्ता अलूक्षा धर्म्मकामाः स्युः, यथा ते तत्र वर्तेरन् तथा तत्र वर्तेथाः। अथाभ्याख्यातेषु ये तत्र ब्राह्मणाः संमर्शिनो युक्ता आयुक्ता अलूक्षा धर्मकामाः स्युः, यथा ते तेषु वर्तेरन् तथा तेषु वर्तेथाः।

एष आदेशः। एष उपदेशः। एषा वेदोपनिषत्। एतदनुशासनम्। एवमुपासितव्यम्। एवमु चैतदुपास्यम्॥

( तैत्तिरीयोपनिषत् १।११ )

( ततः परं प्रवक्तृमहोदयस्य* भाषणं भविष्यति )

---

* प्रथमसमावर्तनसत्रे महामहोपाध्यायः श्रीविधुशेखरशास्त्रिभट्टाचार्यः प्रवक्तासीत्।

# सुविचार-माधुकरी

—:०:—

सन्तो मधुव्रताः सान्द्रं
पीत्वा शास्त्ररसामृतम् ।
लोकोत्तरं तथाक्षय्य-
मानन्दमुपभुञ्जते ॥

इदँ सत्यँ सर्वेषां भूतानां मधु ।
अस्य सत्यस्य सर्वाणि भूतानि मधु ।
(बृहदारण्यकोपनिषद् २।५।१२)

मधु नो द्यावापृथिवी मिमिक्षतां
मधुश्चुता मधुदुघे मधुव्रते । (ऋ० ६।७०।५।)

## ऋग्वेदसंहितायाः

अप्स्वन्तरमृतमप्सु भेषजम्। (१।२३।१६)।

आपश्च विश्वभेषजीः। (१।२३।२०)।

सविता······अपामीवां बाधते। (१।३५।६)।

(सविता अमीवां रोगादिबाधामपबाधतेऽपाकरोतीत्यर्थः)

न दुरुक्ताय स्पृहयेत्। (१।४१।६)

(दुष्टं वाक्यं न कामयेदित्यर्थः)।

न दुष्टुतिर्द्रविणोदेषु शस्यते। (१।५३।१)।

(द्रविणोदेषु = धनदातृषु)

नभो न रूपं जरिमा मिनाति। (१।७१।१०)।

( = नभ इव जरा रूपं हिनस्ति)।

ऋतमर्षन्ति सिन्धवः

सत्यं तातान सूर्यः। (१।१०५।१२)।

पश्यदक्षण्वान् न वि चेतदन्धः। (१।१६४।१६)।

(ज्ञानदृष्ट्युपेत एव वस्तुतत्त्वं जानाति, अन्धः स्थूलदृष्टिस्तु न विजानातीत्यर्थः)

बहुप्रजा निर्ऋतिमा विवेश (१।१६४।३२)।

माता पृथिवी महीयम्। (१।१६४।३३)।

एकं सद् विप्रा बहुधा वदन्ति। (१।१६४।४६)।

पुलुकामो हि मर्त्यः। (१।१७६।५)।

(मनुष्यः खलु कामेन निरुद्ध एव वर्तत इत्यर्थः)।

नकिरस्य तानि व्रता देवस्य सवितुर्मिनन्ति। (२।३८।७)।

पुरुद्रुहो हि क्षितयो जनानाम् (३।१८।१)।

जायेदस्तम्। (३।५३।४)।

(=जाया इत अस्तम्=जायैव गृहं भवतीत्यर्थः)। तु० "गृहिणी गृहमुच्यते"।

न ऋते श्रान्तस्य सख्याय देवाः। (४।३३।११)।

(श्रमयुक्तादृते परिश्रममन्तरेणेति यावद् देवाः सख्याय न भवन्तीत्यर्थः)।

यादृश्मिन् धायि तमपस्यया विदत्। (५।४४।८)

(यादृशे कामे मनो धत्ते तादृशं काममपस्यया कर्मणा विन्दत इत्यर्थः)।

य उ स्वयं वहते सो अरं करत्। (५।४४।८)।

(य एव स्वयमनन्यप्रेरितोऽनुतिष्ठति सोऽत्यर्थं कुर्यात्। न ह्यन्येन कारितं फलवद्भवतीत्यर्थः)।

अनुब्रुवाणो अध्येति, न स्वपन्। (५।४४।१३)।

(अनुसंकीर्तयन्नेव स्मरति न तु स्वपन्नित्यर्थः)।

यो जागार तमृचः कामयन्ते यो जागार तमु सामानि यन्ति। (५।४४।१४)।

विद्वान् पथः पुरएता ऋजु नेषति। (५।४६।१)।

(विद्वान् मार्गाभिज्ञ एव पुरएता पुरतो गन्ता सन् पथो मार्गान् ऋजु यथा स्यात्तथा प्रापयतीत्यर्थः)।

न दुष्टुती मर्त्यो विन्दते वसु। (७।३२।२१)।

(मर्त्यो दुष्टुत्या धनं न विन्दत इत्यर्थः)।

न स्रेधन्तं रयिर्नशत्। (७।३२।२१)।

(स्रेधन्तं हिंसन्तं स्वकर्मापक्कुर्वन्तमिति यावत् रयिर्धनं न नशत् न प्राप्नोतीत्यर्थः)।

स्त्रिया अशास्यं मनः। (८।३३।१७)।

ऋतस्य श्रृङ्गमुर्विया वि पप्रथे। (८।८६।५)।

(उर्विया=उरु विस्तीर्णं यथा भवति तथा)

मन्त्रन्त्यविचेतसः। (६।६४।२१)

सत्येनोत्तभिता भूमिः। (१०।८५।१)।

न वै स्त्रैणानि सख्यानि सन्ति। (१०।६५।१५)

न स सखा यो न ददाति सख्ये। (१०।११७।४)।

केवलाघो भवति केवलादी। (१०।११७।६)।

## (सरस्वती)

पावका नः सरस्वती वाजेभिर्वाजिनीवती।

यज्ञं वष्टु धियावसुः॥ (१।३।१०)।

चोदयित्री सूनृतानां चेतन्ती सुमतीनाम्।

यज्ञं दधे सरस्वती॥ (१।३।११)

---

कृधी (अग्ने!) न ऊर्ध्वाञ्चरथाय जीवसे। (१।३६।१४)

( दीर्घायुः )

विश्वं चिदायुर्जीवसे। (१।३७।१५)

उत पश्यन्नश्नुवन्दीर्घमायु-

रस्तमिवेज्जरिमाणं जगम्याम्। (१।११६।२५)।

( अस्तम् = गृहम्। जरिमाणम् = वृद्धावस्थाम् )

भद्रं जीवन्तो जरणामशीमहि। (१०।३७।६)।

---

स्वस्ति पन्थामनु चरेम सूर्याचन्द्रमसाविव॥ (५।५१।१५)।

शं नः क्षेमे शमु योगे नो अस्तु। (७।८६।८)।

मा गामनागामदितिं वधिष्ट। (८।१०१।१५)

सा मा सत्योक्तिः परि पातु विश्वतः। (१०।३७।२)।

जगृम्भा ते दक्षिणमिन्द्र हस्तम्। (१०।४७।१)।

( ज्ञानम् )

उत त्वः पश्यन्न ददर्श वाच-

मुत त्वः शृण्वन्न शृणोत्येनाम्।

उतो त्वस्मै तन्वं वि सस्रे

जायेव पत्य उशती सुवासाः॥ (१०।७१।४)।

(तन्वं वि सस्रे = आत्मानं विवृणुते। वाक् स्वरहस्यं प्रकाशयतीत्यर्थः।)

उत त्वं सख्ये स्थिरपीतमाहुर्

नैनं हिन्वन्त्यपि वाजिनेषु।

अधेन्वा चरति माययैष
वाचं शुश्रुवाँ अफलामपुष्पाम् ॥ (१०।७१।५)

( त्वम् = वाग्विदम् । स्थिरपीतम् = विपीतार्थम्, विज्ञातार्थम् । वाजिनेषु = रहस्यमयवाग्विषयेषु । न हिन्वन्ति = अविद्वांसो न प्राप्नुवन्ति )

## ( विराट् पुरुषः )

ब्राह्मणोऽस्य मुखमासीद् बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रो अजायत ॥
( १०।९०।१२ ) ।

## ( वाङ् महिमा )

अहमेव स्वयमिदं वदामि
जुष्टं देवेभिरुत मानुषेभिः ।
यं कामये तं तमुग्रं कृणोमि
तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥ (१०।१२५।५)

## ( श्रद्धा )

श्रद्धयाग्निः समिध्यते श्रद्धया हूयते हविः ।
श्रद्धां भगस्य मूर्धनि वचसा वेदयामसि ॥ (१०।१५१।१)

## ( संज्ञानम् )

सं गच्छध्वं सं वदध्वं सं वो मनांसि जानताम् ।
देवा भागं यथा पूर्वे संजानाना उपासते ॥ (१०।१९१।२)।

— —

## शुक्लयजुर्वेदसंहितायाः

देवो वः सविता प्रार्पयतु श्रेष्ठतमाय कर्मणे। ( १।१ )

( प्रार्पयतु समर्पयतु )

धूर्व धूर्वन्तं, धूर्व तं योऽस्मान् धूर्वति ( १८ )

( धुर्वी हिंसार्थः। धूर्वन्तं हिंसन्तम धूर्व विनाशय हिन्धि। )

मा भेः, मा संविक्थाः। ( १२३ )

( =त्वं मा भैषीः। मा च त्वमुद्विग्नतां यासीः। ओविजी भयचलनयोः। )

अस्माकं सन्त्वाशिषः, सत्या नः सन्त्वाशिषः। ( २।२० )

सं वर्चसा पयसा सं तनूभिरगन्महि मनसा सꣳ शिवेन।
( २।२४ )

( समगन्महि संगता भवामः। तनूभिः कार्यक्षमैः शरीरैः)

येषामध्येति प्रवसन् येषु सौमनसो बहुः। गृहानुपह्वयामहे।
( ३।४२ )

(=देशान्तरं गच्छन्मनुजो येषां गृहाणां स्मरति। इक् स्मरणे। येषु च प्रीत्यतिशयो लभ्यते। तादृशान् गृहान् वयमभिलषामः। )

परि माग्ने दुश्चरिताद् बाधस्वा मा सुचरिते भज ( ४।२८ )

( परिबाधस्व = परितो निवारय। भज = स्थापय)

सुप्रजाः प्रजाभिः स्याम सुवीरा वीरैः सुपोषाः पोषैः।
( ८।५३ )

वयं राष्ट्रे जागृयाम पुरोहिताः। (९।२३)

(जागृयाम = अप्रमत्ता भवाम)

व्रतेन दीक्षामाप्नोति दीक्षयाप्नोति दक्षिणाम्।
दक्षिणा श्रद्धामाप्नोति श्रद्धया सत्यमाप्यते॥ (१९।३०)

दृष्ट्वा रूपे व्याकरोत् सत्यानृते प्रजापतिः।
अश्रद्धामनृतेऽदधाच्छ्रद्धां सत्ये प्रजापतिः॥ (१९।७७)

(=सत्यानृतयो रूपे उपलभ्य प्रजापतिस्तयोः पृथक्त्वं कृतवान्। अनृते नास्तिक्यमस्थापयत्। अनृतस्याश्रद्धानिमित्तत्वात्। सत्ये च श्रद्धामास्तिक्यमदधात्।

विशि राजा प्रतिष्ठितः। (२०।९)। (विशि = प्रजायाम्)।

## राष्ट्रियप्रार्थना

आ ब्रह्मन् ब्राह्मणो ब्रह्मवर्चसी जायताम्। आ राष्ट्रे राजन्यः शूर इषव्योऽतिव्याधी महारथो जायताम्। दोग्ध्री धेनुर्वोढानड्वानाशुः सप्तिः पुरन्धिर्योषा जिष्णू रथेष्ठाः सभेयो युवास्य यजमानस्य वीरो जायताम्। निकामे निकामे नः पर्जन्यो वर्षतु। फलवत्यो न ओषधयः पच्यन्ताम्। योगक्षेमो नः कल्पताम्।

(२२।२२)

(ब्रह्मवर्चसी = यज्ञाध्ययनशीलः। इषव्यः = इषुभिर्विध्यतीति। वा, इषौ कुशलो वा। अतिव्याधी = अत्यन्तं विध्यतीति। सप्तिः = अश्वः। पुरन्धिः = पुरं शरीरं सर्वगुणसंपन्नं दधातीति। निकामे = नितरां कामनायाम्)।

---

ब्रह्म सूर्यसमं ज्योतिः। (२३।४८)। (ब्रह्म = वेदः)

अश्मा भवतु नस्तनूः। (२६।४६)। (अश्मा = पाषाण-तुल्यदृढा)।

विश्वानि देव सवितर्दुरितानि परा सुव। यद्भद्रं तन्न आ सुव।
(३०।३)

(दुरितानि पापानि। परासुव दूरे गमय। आसुव आगमय)

तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय
(३१।१८)।

तदेवाग्निस्तदादित्यस्तद्वायुस्तदु चन्द्रमाः।
तदेव शुक्रं तद् ब्रह्म ता आपः स प्रजापतिः॥ (३२।१)

इदं मे ब्रह्म च क्षत्रं चोभे श्रियमश्नुताम्। (३२।१६)

मित्रस्याहं चक्षुषा सर्वाणि भूतानि समीक्षे (३६।१८)

अदीनाः स्याम शरदः शतम्। भूयश्च शरदः शतात् (३६।२४)

ईशा वास्यमिदꣳ सर्वं यत्किं च जगत्यां जगत्।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम्॥ (४०।१)

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे॥ (४०।२)

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम्। (४०।१७)

---

## सामवेदसंहितायाः

सखायस्त्वा ववृमहे देवं मर्तास ऊतये॥ (पूर्वार्चिके १।६।८)

अग्ने सख्ये मा रिषामा वयं तव। (पू० १।७।४)।

भद्रं भद्रं न आ भरेषमूर्जं शतक्रतो ॥ ( पू० २।८।६ ) ।
इन्द्र त्वादातमिद्यशः । ( पू० ३।१।२ )
नकि इन्द्र त्वदुत्तरं न ज्यायो अस्ति वृत्रहन् ।
नक्येवं यथा त्वम् ॥ ( पू० ३।१ १० ) ।
जीवा ज्योतिरशीमहि । ( पू० ३।७।७ ) ।
यत इन्द्र भयामहे ततो नो अभयं कृधि ॥ ( पू० ३।६।२ )
अप ध्वान्तमूर्णु हि पूर्धि चक्षुः । ( पू० ४।३।७ ) ।
देवस्य पश्य काव्यम् । ( पू० ४।४।३ ) ।
भद्रं नो अपि वातय मनः । ( पू० ५।४।४ ) ।

(वायोः स्वास्थ्यसंरक्षणे यक्ष्मादिरोगनिवारणे च महिमा)

वात आ वातु भेषजं शंभु मयोभु नो हृदे ।
प्र न आयूँषि तारिषत् ॥
उत वात पितासि न उत भ्रातोत नः सखा ।
स नो जीवातवे कृधि ॥
यददो वात ते गृहेऽमृतं निहितं गुहा ।
तस्य नो धेहि जीवसे ॥( उत्त० ६।२।११ )

—

## अथर्ववेदसंहितायाः

सं श्रुतेन गमेमहि मा श्रुतेन वि राधिषि । ( १।१।४ )
ब्रह्म वर्म ममान्तरम् । ( १।१६।४ )
ब्रह्मद्विषं द्यौरभिसंतपाति । ( २।१२।६ )
सर्वांश्चण्डस्य नप्त्यो नाशयामः । ( २।१४।१ )

उद्यन्नादित्यः क्रिमीन्हन्तु निम्रोचन्हन्तु रश्मिभिः । (२।३२।१)
आप इद्वा उ भेषजीरापो अमीवचातनीः । (३।७।५)

## ( सांमनस्यम् )

अनुव्रतः पितुः पुत्रो मात्रा भवतु संमनाः ।
जाया पत्ये मधुमतीं वाचं वदतु शन्तिवाम् (३।३०।२)
मा भ्राता भ्रातरं द्विक्षन्मा स्वसारमुत स्वसा ।
सम्यञ्चः सव्रता भूत्वा वाचं वदत भद्रया ॥ (३।३०।३)
समानी प्रपा सह वोऽन्नभागः
समाने योक्त्रे सह वो युनज्मि ॥ (३।३०।६)

---

## ( गावः )

यूयं गावो मेदयथा कृशं चिद्
अश्रीरं चित्कृणुथा सुप्रतीकम् ।
भद्रं गृहं कृणुथ भद्रवाचो
बृहद्वो वय उच्यते सभासु ॥ (४।२१।६)

---

## ( वाङ्महिमा )

अहमेव स्वयमिदं वदामि जुष्टं देवानामुत मानुषाणाम् ।
यं कामये तं तमुग्रं कृणोमि तं ब्रह्माणं तमृषिं तं सुमेधाम् ॥
(४।३०।३)

---

सच्चासच्च वचसी पस्पृधाते । (८।४।१२)

## ( अतिथिसत्कारः )

सर्वो वा एष जग्धपाप्मा यस्यान्नमश्नन्ति । ( ६।७।८ )

सर्वो वा एषोऽजग्धपाप्मा यस्यान्नं नाश्नन्ति । ( ६।७।६ )

कीर्तिं च वा एष यशश्च गृहाणामश्नाति यः पूर्वोऽतिथे-रश्नाति । ( ६।८।५ )

अशितवत्यतिथावश्नीयात् यज्ञस्य सात्मत्वाय यज्ञस्याविच्छे-दाय तद् व्रतम् । ( ६।८।८ )

ये पुरुषे ब्रह्म विदुस्ते विदुः परमेष्ठिनम् । ( १०।७।१७ )

## ( ब्रह्मचर्यम् )

ब्रह्मचर्येण तपसा राजा राष्ट्रं वि रक्षति ।

आचार्यो ब्रह्मचर्येण ब्रह्मचारिणमिच्छते ॥ ( ११।७।१७ )

ब्रह्मचर्येण कन्या युवानं विन्दते पतिम् । ( ११।७।१८ )

ब्रह्मचर्येण तपसा देवा मृत्युमुपाघ्नत । ( ११।७।१६ )

---

तस्माद्वै विद्वान् पुरुषमिदं ब्रह्मेति मन्यते ।

सर्वा ह्यस्मिन् देवता गावो गोष्ठ इवासते ॥ ( ११।१०।३२ )

माता भूमिः पुत्रो अहं पृथिव्याः । ( १२।१।१२ )

न तिष्ठन्ति न नि मिषन्त्येते

देवानां स्पश इह ये चरन्ति ॥ ( १८।१।६ )

प्रियं मा कृणु देवेषु प्रियं राजसु मा कृणु ।

प्रियं सर्वस्य पश्यत उत शूद्र उतार्ये ॥ ( १६।६२।१ )

---

## ( दीर्घायुः )

पश्येम शरदः शतम् । जीवेम शरदः शतम् ।
बुध्येम शरदः शतम् । रोहेम शरदः शतम् ।
पूषेम शरदः शतम् । भवेम शरदः शतम् ।
भूयेम शरदः शतम् । भूयसीः शरदः शतात् ॥
( १९।६७।१—८ )

——

इच्छन्ति देवाः सुन्वन्तं न स्वप्नाय स्पृहयन्ति ।
यन्ति प्रमादमतन्द्राः ॥ ( २०।१८।३ )
न दुष्टुतिर्द्रविणोदेषु शस्यते । ( २०।२१।१ )

## ( वेदमाता )

स्तुता मया वरदा वेदमाता
प्र चोदयन्तां पावमानी द्विजानाम् । ( १९।७१।१ )

——

# शतपथब्राह्मणात्

अमेध्यो वै पुरुषो यदनृतं वदति । ( १।१।१।१ )

सत्यमेव देवा अनृतं मनुष्याः । ( १।१।१।४ )

यशो ह भवति य एवं विद्वान् सत्यं वदति । ( १।१।१।५ )

देवान्वा एष उपावर्तते यो व्रतमुपैति । ( १।१।१।११ )

एते वा उत्पवितारो यत्सूर्यस्य रश्मयः । ( १।१।३।६ )

तद्धि समृद्धं यत्रात्ता कनीयान्, आद्यो भूयान् । ( १।३।२।१२ )

वाग्वै मनसो ह्रसीयसी । अपरिमिततरमिव हि मनः । परिमिततरेव हि वाक् । ( १।४।४।७ )

मत्स्य एव मत्स्यं गिलति ( १।८।१।१३ )

न श्वःश्वमुपासीत । को हि मनुष्यस्य श्वो वेद ( २।१।३।९ )

द्वया वै देवाः । देवाः अहैव देवाः । अथ ये ब्राह्मणाः शुश्रुवांसोऽनूचानास्ते मनुष्यदेवाः । ( २।२।२।६ )

छाययेव वा अयं पुरुषः पाप्मनानुषक्तः । ( २।२।३।१० )

यज्ञो ह्येवेयम् । नो ह्यृते गोर्यज्ञस्तायते ( २।२।४।१३ )

अद्धा हि तद्यद् भूतम् ।...अनद्धा हि तद् यद्भविष्यत् । ( २।३।१।२५ )

( अद्धा निश्चितम् )

अद्धा हि तद्यदद्य ।...अनद्धा हि तद् यच्छ्वः । ( २।३।१।२८ )

पुरुषो वै प्रजापतेर्नेदिष्ठम् । ( २।५।१।१ )

पयो ह्येव विर्यं प्रतिष्ठा। ( २।६।२।१४ )

सुवासा एव बुभूषेत्।...अप्यश्लीलं सुवाससं दिदृक्षन्ते।

( अश्लीलमसुन्दरम् ) ( ३।१।२।१६ )

पराभवस्य हैतन्मुखं यदतिमानः। ( ५।१।१।१ )

अन्नं वै विशः ( ६।७।३।७ )

श्रीर्वै राष्ट्रम् ( ६।७।३।७ )

---

## ऐतरेयब्राह्मणात्

अथो खल्वाहुः। कोऽर्हति मनुष्यः सर्वं सत्यं वदितुम्। सत्यसंहिता वै देवा अनृतसंहिता मनुष्या इति। ( १।६ )

शिरो वा एतद्यज्ञस्य यदातिथ्यम्। ( १।२५ )

अशनाया वै पाप्मामतिः। ( २।२ )

( अशनाया क्षुधा, अमतिर्बुद्धिभ्रंशः )

यां वै दृप्तो वदति यामुन्मत्तः सा वै राक्षसी वाक्। ( २।७ )

(तथोत्तररामचरिते–"ऋषयो राक्षसीमाहुर्वाचमुन्मत्तदृप्तयोः")

यो वै भवति यः श्रेष्ठतामश्नुते तस्य वाचं प्रोदितामनुप्रवदन्ति। ( २।१५ )

ब्रह्म च क्षत्रं च संश्रिते। ( ३।११ )

प्रजा वै तन्तुः। ( ३।११ )

परोक्षप्रिया इव हि देवाः। ( ३।४३ )

ईश्वरा हास्य वित्ते देवा अरन्तोर्यद्वा अयमात्मनेऽन्नमंस्तेति। ( ३।४८ )

( अरन्तोरीश्वराः = अक्रीडितुं समर्था भवन्ति । एतस्य वित्तं द्विपन्तीत्यर्थः । स्ववर्तमानावस्थायामसंतुष्टो यः समुत्कृष्टतरावस्थावाप्तये यतते तस्यैव देवाः सहाया भवन्तीति हृदयम् )

व्यतिषक्त इव वै पुरुषः पाप्मना । ( ४।४ )

( व्यतिषक्तो मिश्रितः ) ।

परिमितं वै भूतम्, अपरिमितं भव्यम् । ( ४।६ )

सं वै गुरुर्भारः शृणाति । ( ४।१३ )

( संशृणाति भारवाहकान् विनाशयति )

सखा ह जाया, कृपणं ह दुहिता, ज्योतिर्हं पुत्रः परमे व्योमन् । ( ७।१३ )

यावन्तः पृथिव्यां भोगा यावन्तो जातवेदसि ।
यावन्तो अप्सु प्राणिनां भूयान्पुत्रे पितुस्ततः ॥ ( ७।१३ )

एतद्वै वाचो जितं यद्दामीत्याह । ( ८।६ )

राष्ट्राणि वै विशः । ( ८।२६ )

---

## गोपथब्राह्मणात्

स मनसा ध्यायेद्—यद्वा अहं किञ्चन मनसा ध्यास्यामि तथैव तद्भविष्यति । तद्ध स्म तथैव भवति । ( १।१।६ )

रूपसामान्यादर्थसामान्यं नेदीयः । ( १।१।२६ )

व्रतेन वै ब्राह्मणः संशितो भवति । ( १।१।३४ )

उत्तमे वयसि पुत्रान् पितोपजीवति । ( १।४।१७ )

ऋतुसन्धिषु वै व्याधिर्जायते । ( २।१।१६ )

एतद्वै यज्ञस्य समृद्धं यद्रूपसमृद्धम्। यत्कर्म क्रियमाणमृग्य-जुर्वाभिवदति। (२।२।६)

यजमानेऽधः शिरसि पतिते स देशोऽधःशिराः पतति (२।२।१५)

एतद्वै मनुष्येषु सत्यं यच्चक्षुः। तस्मादाहुराचक्षाणमद्रागिति। स यदाहाद्राक्षमिति तथा हास्य श्रद्दधति। यद्यु वै स्वयं वै दृष्टं भवति न बहूनां जनानामेष श्रद्दधाति (२।२।२३)



# ईशावास्योपनिषदः

ईशावास्यमिदꣳ सर्वं यत्किञ्च जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा मा गृधः कस्य स्विद्धनम् ॥१॥

कुर्वन्नेवेह कर्माणि जिजीविषेच्छतꣳ समाः ।
एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ॥२॥

असुर्या नाम ते लोका अन्धेन तमसावृताः ।
ताꣳस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः ॥३॥

कविर्मनीषी परिभूः स्वयम्भूर्
याथातथ्यतोऽर्थान् व्यदधाच्छाश्वतीभ्यः समाभ्यः ॥८॥

हिरण्मयेन पात्रेण सत्यस्यापिहितं मुखम् ।
तत्त्वं पूषन्नपावृणु सत्यधर्माय दृष्टये ॥१५॥

अग्ने नय सुपथा राये अस्मान्
विश्वानि देव वयुनानि विद्वान् ।
युयोध्यस्मज्जुहुराणमेनो
भूयिष्ठां ते नमउक्तिं विधेम ॥१८॥

(वयुनानि = प्रज्ञानानि कर्माणि वा । युयोधि = पृथक् कुरु । जुहुराणम् = कुटिलम्, प्रतिबन्धकम् । नमउक्तिम् = नमस्कार-वचनम् )

## केनोपनिषदः

[ ॐ आप्यायन्तु ममाङ्गानि वाक् प्राणश्चक्षुः श्रोत्रमथो बलमिन्द्रियाणि च। सर्वाणि सर्वं ब्रह्मोपनिषदं माहं ब्रह्म निराकुर्यां मा मा ब्रह्म निराकरोदनिराकरणमस्त्वनिराकरणमस्तु तदात्मनि निरते य उपनिषत्सु धर्मास्ते मयि सन्तु ते मयि सन्तु। ॐ शान्तिः शान्तिः शान्तिः ॥ ]

न तत्र चक्षुर्गच्छति न वाग्गच्छति नो मनो न विद्मो न विजानीमो यथैतदनुशिष्यादन्यदेव तद्विदितादथो अविदितादधि इति शुश्रुम पूर्वेषां ये नस्तद् व्याचचक्षिरे ॥ १ । ३ ॥

यस्यामतं तस्य मतं मतं यस्य न वेद सः।
अविज्ञातं विजानतां विज्ञातमविजानताम् ॥२।३॥

इह चेदवेदीदथ सत्यमस्ति
न चेदिहावेदीन्महती विनष्टिः।
भूतेषु भूतेषु विचित्य धीराः
प्रेत्यास्माल्लोकादमृता भवन्ति ॥२।५॥

---

## कठोपनिषदः

न वित्तेन तर्पणीयो मनुष्यः ॥१।१।२७॥

अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्
ते उभे नानार्थे पुरुषँ सिनीतः।
तयोः श्रेय आददानस्य साधु भवति
हीयतेऽर्थाद् य उ प्रेयो वृणीते ॥१।२।१॥

श्रेयश्च प्रेयश्च मनुष्यमेतस्
तौ संपरीत्य विविनक्ति धीरः ।
श्रेयो हि धीरोऽभि प्रेयसो वृणीते
प्रेयो मन्दो योगक्षेमाद् वृणीते ॥१।२।२॥

अविद्यायामन्तरे वर्तमानाः
स्वयंधीराः पण्डितं मन्यमानाः ।
दन्द्रम्यमाणाः परियन्ति मूढा
अन्धेनैव नीयमाना यथान्धाः ॥१।२।५॥

तं दुर्दर्शं गूढमनुप्रविष्टं
गुहाहितं गह्वरेष्ठं पुराणम् ।
अध्यात्मयोगाधिगमेन देवं
*मत्वा धीरो हर्षशोकौ जहाति ॥१।२।१२॥*

## ( ओंकारमहिमा )

सर्वे वेदा यत्पदमामनन्ति
तपाँसि सर्वाणि च यद्वदन्ति ।
यदिच्छन्तो ब्रह्मचर्यं चरन्ति
तत्ते पदं संग्रहेण ब्रवीम्योमित्येतत् ॥१।२।१५॥

एतद्ध्येवाक्षरं ब्रह्म एतदेवाक्षरं परम् ।
एतद्ध्येवाक्षरं ज्ञात्वा यो यदिच्छति तस्य तत् ॥१।२।१६॥

एतदालम्बनँ श्रेष्ठमेतदालम्बनं परम् ।
एतदालम्बनं ज्ञात्वा ब्रह्मलोके महीयते ॥१।२।१७॥

---

नायमात्मा प्रवचनेन लभ्यो
न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्यस्
तस्यैष आत्मा विवृणुते तनूँ स्वाम् ॥१।२।२२॥

नाविरतो दुश्चरितान् नाशान्तो नासमाहितः ।
नाशान्तमानसो वापि प्रज्ञानेनैनमाप्नुयात् ॥१।२।२३॥

---

आत्मानं रथिनं विद्धि शरीरँ रथमेव च ।
बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥१।३।३॥
इन्द्रियाणि हयानाहुर्विषयाँ स्तेषु गोचरान् ।
आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः ॥१।३।४॥
यस्तु विज्ञानवान् भवति युक्तेन मनसा सदा ।
तस्येन्द्रियाणि वश्यानि सदश्वा इव सारथेः ॥१।३।६॥
विज्ञानसारथिर्यस्तु मनःप्रग्रहवान्नरः ।
सोऽध्वनः पारमाप्नोति तद्विष्णोः परमं पदम् ॥१।३।९॥

उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत ।
क्षुरस्य धारा निशिता दुरत्यया
दुर्गं पथस्तत्कवयो वदन्ति ॥१।३।१४॥

---

पराञ्चि खानि व्यतृणत्स्वयम्भू-
स्तस्मात्पराङ् पश्यति नान्तरात्मन् ।
कश्चिद्धीरः प्रत्यगात्मानमैक्ष-
दावृत्तचक्षुरमृतत्वमिच्छन् ॥२।१।१॥

---

न प्राणेन नापानेन मर्त्यो जीवति कश्चन ।
इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ ॥२।२।५॥

---

यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह ।
बुद्धिश्च न विचेष्टति तामाहुः परमां गतिम् ॥२।३।१०॥
तां योगमिति मन्यन्ते स्थिरामिन्द्रियधारणाम् ।
अप्रमत्तस्तदा भवति योगो हि प्रभवाप्ययौ ॥२।३।११॥

---

## मुण्डकोपनिषदः

द्वे विद्ये वेदितव्ये इति ह स्म यद् ब्रह्मविदो वदन्ति परा चैवापरा च। तत्रापरा ऋग्वेदो यजुर्वेदः सामवेदोऽथर्ववेदः शिक्षा कल्पो व्याकरणं निरुक्तं छन्दो ज्योतिषमिति । अथ परा-यया तदक्षरमधिगम्यते ॥१।१।४-५॥

प्लवा ह्येते अदृढा यज्ञरूपा
अष्टादशोक्तमवरं येषु कर्म ।
एतच्छ्रेयो येऽभिनन्दन्ति मूढा
जरामृत्युं ते पुनरेवापि यन्ति ॥१।२।७॥
अविद्यायां बहुधा वर्तमाना
वयं कृतार्था इत्यभिमन्यन्ति बालाः ।
यत्कर्मिणो न प्रवेदयन्ति रागात्
तेनातुराः क्षीणलोकाश्च्यवन्ते ॥१।२।९॥

इष्टापूर्तं मन्यमाना वरिष्ठं
नान्यच्छ्रेयो वेदयन्ते प्रमूढाः ॥१।२।१०॥

---

प्रणवो धनुः शरो ह्यात्मा ब्रह्म तल्लक्ष्यमुच्यते ।
अप्रमत्तेन वेद्धव्यं शरवत्तन्मयो भवेत् ॥२।२।४॥
न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः ।
तमेव भान्तमनु भाति सर्वं
तस्य भासा सर्वमिदं विभाति ॥२।२।१०॥
द्वा सुपर्णा सयुजा सखाया
समानं वृक्षं परिषस्वजाते ।
तयोरन्यः पिप्पलं स्वाद्वत्त्य-
नश्नन्नन्यो अभिचाकशीति ॥३।१।१॥

---

## ( सत्यस्य महिमा )

सत्येन लभ्यस्तपसा ह्येष आत्मा
सम्यग्ज्ञानेन ब्रह्मचर्येण नित्यम् ॥३।१।५॥
सत्यमेव जयते नानृतं
सत्येन पन्था विततो देवयानः ।
येनाक्रमन्त्यृषयो ह्याप्तकामा
यत्र तत्सत्यस्य परमं निधानम् ॥३।१।६॥

---

यं यं लोकं मनसा संविभाति
विशुद्धसत्त्वः कामयते यांश्च कामान् ।
तं तं लोकं जायते तांश्च कामांस्
तस्मादात्मज्ञं ह्यर्चयेद् भूतिकामः ॥३।१।१०॥

कामान्यः कामयते मन्यमानः
स कामभिर्जायते तत्र तत्र ।
पर्याप्तकामस्य कृतात्मनस्तु
इहैव सर्वे प्रविलीयन्ति कामाः ॥३।२।२॥

---

नायमात्मा प्रवचनेन लभ्यो
न मेधया न बहुना श्रुतेन ।
यमेवैष वृणुते तेन लभ्य-
स्तस्यैष आत्मा विवृणुते तनुं स्वाम् ॥३।२।३॥
नायमात्मा बलहीनेन लभ्यो
न च प्रमादात्तपसो वाप्यलिङ्गात् ॥३।२।४॥

स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति नास्याब्रह्मवित्कुले भवति । तरति शोकं तरति पाप्मानं गुहाग्रन्थिभ्यो विमुक्तोऽमृतो भवति ॥३।२।९॥

---

## माण्डूक्योपनिषदः

ओमित्येतदक्षरमिदꣳ सर्वं तस्योपव्याख्यानं भूतं भवद्भविष्य-दिति सर्वमोङ्कार एव । यच्चान्यत्त्रिकालातीतं तदप्योङ्कार एव ॥१॥

---

# तैत्तिरीयोपनिषदः

वेदमनूच्याचार्योऽन्तेवासिनमनुशास्ति । सत्यं वद । धर्म्मं चर । स्वाध्यायान्मा प्रमदः । आचार्य्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सीः ।

सत्यान्न प्रमदितव्यम् । धर्मान्न प्रमदितव्यम् । कुशलान्न प्रमदितव्यम् । भूत्यै न प्रमदितव्यम् । स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् । देवपितृकार्याभ्यां न प्रमदितव्यम् । मातृदेवो भव । पितृदेवो भव । आचार्यदेवो भव । अतिथिदेवो भव ।

यान्यनवद्यानि कर्म्माणि तानि सेवितव्यानि, नो इतराणि । यान्यस्माकँ सुचरितानि तानि त्वयोपास्यानि, नो इतराणि । ये के चास्मच्छ्रेयाँसो ब्राह्मणाः तेषां त्वयाऽऽसनेन प्रश्वसितव्यम् ।

श्रद्धया देयम् । अश्रद्धयाऽदेयम् । श्रिया देयम् । ह्रिया देयम् । भियाऽदेयम् । संविदा देयम् ।

अथ यदि ते कर्मविचिकित्सा वा वृत्तविचिकित्सा वा स्यात्, ये तत्र ब्राह्मणाः संमर्शिनो युक्ता आयुक्ता अलूक्षा धर्मकामाः स्युः, यथा ते तत्र वर्तेरन् तथा तत्र वर्तेथाः । अथाभ्याख्यातेषु ये तत्र ब्राह्मणाः संमर्शिनो युक्ता आयुक्ता अलूक्षा धर्मकामाः स्युः, यथा ते तेषु वर्तेरन् तथा तेषु वर्तेथाः ।

एष आदेशः । एष उपदेशः । एषा वेदोपनिषत् । एतदनुशासनम् । एवमुपासितव्यम् । एवमु चैतदुपास्यम् ॥१।११॥

---

रसो वै सः । रसꣳ ह्येवायं लब्ध्वानन्दी भवति ॥२।७॥

यतो वा इमानि भूतानि जायन्ते । येन जातानि जीवन्ति । यत्प्रयन्त्यभिसंविशन्ति । तद्विजिज्ञासस्व । तद् ब्रह्मेति ॥३।१॥

---

## छान्दोग्योपनिषदः

त्रयो धर्मस्कन्धा यज्ञोऽध्ययनं दानमिति प्रथमः, तप एव द्वितीयः, ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन् । सर्वे एते पुण्यलोका भवन्ति ब्रह्मसंस्थोऽमृतत्वमेति ॥२।२३।१॥

अन्नमशितं त्रेधा विधीयते । तस्य यः स्थविष्ठो धातुस्तत्पुरीषं भवति, यो मध्यमस्तन्माꣳसम्, योऽणिष्ठस्तन्मनः ।...... अन्नमयꣳ हि सोम्य मनः ॥६।५।१,४॥

अधीहि भगव इति होपससाद सनत्कुमारं नारदः । तꣳ होवाच यद्वेत्थ तेन मोपसीद ततस्त ऊर्ध्वं वक्ष्यामीति । स होवाच ऋग्वेदं भगवोऽध्येमि यजुर्वेदꣳ सामवेदमाथर्वणं चतुर्थमितिहासपुराणं पञ्चमं वेदानां वेदं पित्र्यꣳ राशिं दैवं निधिं वाकोवाक्यमेकायनं वेदविद्यां ब्रह्मविद्यां भूतविद्यां क्षत्रविद्यां नक्षत्रविद्याꣳ सर्पदेवजनविद्यामेतद्भगवोऽध्येमि ॥७।१।१-२॥

---

मनो वाव वाचो भूयः ॥७।३।१॥

संकल्पो वाव मनसो भूयान् । यदा वै संकल्पतेऽथ मनस्यत्यथ वाचमीरयति ॥७।४।१॥

चित्तं वाव संकल्पाद् भूयः। यदा वै चेतयतेऽथ संकल्पयतेऽथ मनस्यत्यथ वाचमीरयति ॥७।५।१॥

ध्यानं वाव चित्ताद् भूयः ॥७।६।१॥

विज्ञानं वाव ध्यानाद् भूयः ॥७।७।१॥

---

यो वै भूमा तत्सुखं नाल्पे सुखमस्ति भूमैव सुखं भूमा त्वेव विजिज्ञासितव्यः ॥७।२३।१॥

यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा। अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पम्। यो वै भूमा तदमृतम्, अथ यदल्पं तन्मर्त्यम् ॥७।२४।१॥

---

आहारशुद्धौ सत्त्वशुद्धिः, सत्त्वशुद्धौ ध्रुवा स्मृतिः। स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः ॥७।२६।२॥

---

## बृहदारण्यकोपनिषदः

असतो मा सद् गमय। तमसो मा ज्योतिर्गमय। मृत्योर्मामृतं गमय ॥ १।३।२८ ॥

द्वे वाव ब्रह्मणो रूपे मूर्त्तं चैवामूर्त्तं च मर्त्यं चामृतं च स्थितं च यच्च सच्च त्यच्च ॥ २।३।१ ॥

अमृतत्वस्य नाशास्ति वित्तेनेति ॥ २।४।२ ॥

न वा अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवति। आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेद ँ सर्वं विदितम् ॥ २।४।५ ॥

अरेऽस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेदोऽथर्वाङ्गिरस इतिहासः पुराणं विद्या उपनिषदः श्लोकाः सूत्राण्यनुव्याख्यानानि व्याख्यानान्यस्यैवैतानि सर्वाणि निःश्वसितानि ॥ २।४।१० ॥

अयमात्मा सर्वेषां भूतानां मधु। अस्यात्मनः सर्वाणि भूतानि मधु। यश्चायमस्मिन्नात्मनि तेजोमयोऽमृतमयः पुरुषो यश्चायमात्मा तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा। इदममृतमिदं ब्रह्मेदं सर्वम् ॥ २।५।१४ ॥

स वा अयमात्मा सर्वेषां भूतानामधिपतिः सर्वेषां भूताना ँ राजा। तद्यथा रथनाभौ च रथनेमौ चाराः सर्वे समर्पिता एवमेवास्मिन्नात्मनि सर्वाणि भूतानि सर्वे देवाः सर्वे लोकाः सर्वे प्राणाः सर्व एत आत्मानः समर्पिताः ॥ २।५।१५ ॥

एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति ॥ ३।५।१ ॥

यः सर्वेषु भूतेषु तिष्ठन् सर्वेभ्यो भूतेभ्योऽन्तरो य ँ सर्वाणि भूतानि न विदुर्यस्य सर्वाणि भूतानि शरीरं यः सर्वाणि भूतान्यन्तरो यमयत्येष त आत्मान्तर्याम्यमृत इत्यधिभूतम् ॥ ३।७।१५ ॥

यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति यजते तपस्तप्यते बहूनि वर्षसहस्राण्यन्तवदेवास्य तद्भवति। यो वा एतदक्षरं गार्ग्यविदित्वास्माल्लोकात्प्रैति स कृपणः। अथ य एतदक्षरं गार्गि विदित्वास्माल्लोकात्प्रैति स ब्राह्मणः ॥३।८।१०॥

---

## श्वेताश्वतरोपनिषदः

स्वदेहमरणिं कृत्वा प्रणवं चोत्तरारणिम्।
ध्याननिर्मथनाभ्यासाद् देवं पश्येन्निगूढवत् ॥१।१४॥
यदा चर्मवदाकाशं वेष्टयिष्यन्ति मानवाः।
तदा देवमविज्ञाय दुःखस्यान्तो भविष्यति ॥६।२०॥

---

## नारायणोपनिषदः

यथा वृक्षस्य संपुष्पितस्य दूराद् गन्धो वात्येवं पुण्यस्य कर्मणो दूराद् गन्धो वाति ॥११॥

मेधा देवी जुषमाणा न आगाद्
विश्वाची भद्रा सुमनस्यमाना।
त्वया जुष्टा नुदमाना दुरुक्तान्
बृहद्वदेम विदथे सुवीराः ॥४१॥

सत्यं परं पर ँ॒ सत्य ँ॒ सत्येन न सुवर्गाल्लोकाच् च्यवन्ते कदाचन। सता ँ॒ हि सत्यं तस्मात्सत्ये रमन्ते।......मानसमिति विद्वा ँ॒ सस्तस्माद् विद्वा ँ॒ स एव मानसे रमन्ते ॥७८॥

---

# मुक्तिकोपनिषदः

लोकवासनया जन्तोः शास्त्रवासनयापि च ।
देहवासनया ज्ञानं यथावन्नैव जायते ॥२।२॥
शुभाशुभाभ्यां मार्गाभ्यां वहन्ती वासना सरित् ।
पौरुषेण प्रयत्नेन योजनीया शुभे पथि ॥२।५-६॥
द्वे बीजे चित्तवृक्षस्य प्राणस्पन्दनवासने ।
एकस्मिंश्च तयोः क्षीणे क्षिप्रं द्वे अपि नश्यतः ॥२।२७॥
हस्तं हस्तेन संपीड्य दन्तैर्दन्तान् विचूर्ण्य च ।
अङ्गान्यङ्गैः समाक्रम्य जयेदादौ स्वकं मनः ॥२।४२॥
तद्विष्णोः परमं पदं सदा पश्यन्ति सूरयः ।
दिवीव चक्षुराततम् ॥२।७७॥



## निरुक्तात्

(वेदानामर्थज्ञानस्य प्रशंसा अज्ञानस्य निन्दा च)

स्थाणुरयं भारहारः किलाभू-
दधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते
नाकमेति ज्ञानविधूतपाप्मा ॥

यद् गृहीतमविज्ञातं निगदेनैव शब्द्यते।
अनग्नाविव शुष्कैधो न तज्ज्वलति कर्हिचित् ॥१।१८॥

(स्थाणुर्वृक्षः। स हि पत्रपुष्पफलानामात्मीयानां धारणमात्रेणैव संवर्द्धयते, न तज्जैर्गन्धरसरूपस्पर्शोपभोगसुखैः। इत् =एव। गृहीतं गुरुमुखात्। अविज्ञातमर्थतः।)

(केऽध्यापनीयाः ?)

विद्या ह वै ब्राह्मणमा जगाम
गोपाय मा शेवधिष्टेऽहमस्मि।
असूयकायानृजवेऽयताय
न मा ब्रूया वीर्यवती तथा स्याम् ॥१॥

य आतृणत्त्यवितथेन कर्णा-
वदुःखं कुर्वन्नमृतं संप्रयच्छन्।

तं मन्येत पितरं मातरं च
तस्मै न द्रुह्येत्कतमच्चनाह ॥२॥
अध्यापिता ये गुरुं नाद्रियन्ते
विप्रा वाचा मनसा कर्मणा वा ।
यथैव ते न गुरोर्भोजनीया-
स्तथैव तान्न भुनक्ति श्रुतं तत् ॥३॥
यमेव विद्याः शुचिमप्रमत्तं
मेधाविनं ब्रह्मचर्योपपन्नम् ।
यस्ते न द्रुह्येत् कतमच्चनाह
तस्मै मा ब्रूया निधिपाय ब्रह्मन् ॥४॥
( २।४ )

( शेवधिः = सुखनिधानम् । आतृणत्ति = आभिनत्ति, अपिहिताविव सन्तौ कर्णौ विवृणोति । अवितथेन = सत्येन ब्रह्मणा । कतमच्चनाह = कदाचिदपि । भोजनीयाः = सेवनीयाः । भुनक्ति = पालयति । )

---

नैष स्थाणोरपराधो यदेनमन्धो न पश्यति । पुरुषापराधः स भवति । ( १।१६ )

यथा जानपदीषु विद्यातः पुरुषविशेषो भवति, पारोवर्यवित्सु तु खलु वेदितृषु भूयोविद्यः प्रशस्यो भवति । ( १।१६ )

कस्तद्वेद यदभूतम् ? ( १।६ )

बहुप्रजाः कृच्छ्रमापद्यत इति परिव्राजकाः । ( २।८ )

नित्यं ह्यविज्ञातुर्विज्ञानेऽसूया । ( २।३ )

साक्षात्कृतधर्माण ऋषयो बभूवुः। तेऽवरेभ्योऽसाक्षात्कृतधर्मभ्य उपदेशेन मन्त्रान्संप्रादुः। उपदेशाय ग्लायन्तोऽवरे बिल्मग्रहणायेमं ग्रन्थं समाम्नासिषुर्वेदं च वेदाङ्गानि च। (१।२०)

मनुष्या वा ऋषिषूत्क्रामत्सु देवानब्रुवन्को न ऋषिर्भविष्यतीति। तेभ्य एतं तर्कमृषिं प्रायच्छन्। (१३।१२)

यदेव किंचानूचानोऽभ्यूहत्यार्षं तद्भवति। (१३।१२)

आचार्य आचारं ग्राहयति। (१।४)

सैषा पुरुषगर्हा न शास्त्रगर्हा। (१।१४)

अप्येकः (अविद्वान्) पश्यन् न पश्यति वाचम्। अपि च शृण्वन् न शृणोत्येनाम्। (१।१६)

---

## पातञ्जलमहाभाष्यात्

सैषा महती वंशस्तम्बाल्लट्वानुकृष्यते।

(तु० हिन्दी—"पहाड़ खोदना और चूहे का पाना")

तद्यथा एकोऽन्धो दर्शनेऽसमर्थस्तत्समुदायश्च शतमपि असमर्थम्।

द्विगता अपि हेतवो भवन्ति। तद्यथा—आम्राश्च सिक्ताः पितरश्च प्रीणिताः।

तद्यथा समानमीहमानानामधीयानानां च केचिदर्थैर्युज्यन्ते, अपरे न। तत्र किमस्माभिः कर्तुं शक्यम्। स्वाभाविकमेतत्।

न खल्वप्यन्यत्प्रकृतमनुवर्तनादन्यद् भवति। नहि गोधा सर्पन्ती सर्पणादहिर्भवति।

नहि भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्ते, न च मृगाः सन्तीति यवा नोप्यन्ते।

अर्थगत्यर्थः शब्दप्रयोगः। अर्थं संप्रत्याययिष्यामीति शब्दः प्रयुज्यते।

यो हि भुक्तवन्तं ब्रूयान्मा भुङ्क्था इति किं तेन कृतं स्यात्।

नष्टाश्वदग्धरथवत् सह संप्रयोगो भवति। तद्यथा तवाश्वो नष्टो ममापि च रथो दग्ध उभौ संप्रयुज्यावहा इति।

सामान्यातिदेशे हि विशेषानतिदेशः।

श्वा कर्णे वा पुच्छे वा छिन्ने श्वैव भवति, नाश्वो न गर्दभः।

पर्जन्यो यावदूनं पूर्णं च सर्वमभिवर्षति।

क्वास्ताः क्व निपतिताः ?

अपि काकः श्येनायते !

अन्यत्पृष्टोऽन्यदाचष्टे। आम्रान् पृष्टः कोविदारानाचष्टे।

तद्यथा कश्चित्कान्तारे समुपस्थिते सार्थमुपादत्ते। स यदा निष्क्रान्तकान्तारो भवति तदा सार्थं जहाति।

पर्याप्तो ह्येकः पुलाकः स्थाल्या निदर्शनाय।

दृष्टस्य हि दोषस्य सुसुखः परिहारः।

न दोषाणां लक्षणमस्ति।

इतरेतराश्रयाणि च कार्याणि न प्रकल्पन्ते। तद्यथा नौर्नावि बद्धा नेतरत्राणाय भवति।

नौः शकटं वहति शकटं च नावं वहति (तु० "कभी नाव गाड़ी पर, कभी गाड़ी नाव पर")

द्विर्बद्धं सुबद्धं भवति।

द्वौ हि प्रतिषेधौ प्रकृतमर्थं गमयतः।

न वै कामानां तृप्तिरस्ति।

---

# वाल्मीकिरामायणात्

काव्यं रामायणं कृत्स्नं सीतायाश्चरितं महत् ॥१।४।७॥

असंकल्पितमेवेह यदकस्मात्प्रवर्तते ।
निवर्त्यारब्धमारम्भैर्ननु दैवस्य कर्म तत् ॥ २।२२।२४ ॥

---

विक्लवो वीर्यहीनो यः स दैवमनुवर्तते ।
वीराः संभावितात्मानो न दैवं पर्युपासते ॥
दैवं पुरुषकारेण यः समर्थः प्रबाधितुम् ।
न दैवेन विपन्नार्थः पुरुषः सोऽवसीदति ॥२।२३।१६-१७॥

---

आर्यपुत्र[1] ! पिता माता भ्राता पुत्रस्तथा स्नुषा ।
स्वानि पुण्यानि भुञ्जानाः स्वं स्वं भाग्यमुपासते ॥
भर्तुर्भाग्यं तु नार्येका प्राप्नोति पुरुषर्षभ ।
अतश्चैवाहमादिष्टा वने वस्तव्यमित्यपि ॥
न पिता नात्मजो वात्मा न माता न सखीजनः ।
इह प्रेत्य च नारीणां पतिरेको गतिः सदा ॥२।२७।४-६॥
श्रुतिर्हि श्रूयते पुण्या ब्राह्मणानां यशस्विनाम् ॥
इह लोके च पितृभिर्या स्त्री यस्य महाबल !
अद्भिर्दत्ता स्वधर्मेण प्रेत्यभावेऽपि तस्य सा ॥२।२९।१७-१८॥

---

---

१. आर्यपुत्रेति रामं प्रति सीतायाः संबोधनम् ।

( अराजकराष्ट्रस्य दुर्दशा )

नाराजके जनपदे बीजमुष्टिः प्रकीर्यते।
नाराजके पितुः पुत्रो भार्या वा वर्तते वशे॥
अराजके धनं नास्ति नास्ति भार्याप्यराजके।
इदमत्याहितं चान्यत्कुतः सत्यमराजके॥
नाराजके जनपदे कारयन्ति सभां नराः।
उद्यानानि च रम्याणि हृष्टाः पुण्यगृहाणि च॥
नाराजके जनपदे यज्ञशीला द्विजातयः।
सत्राण्यन्वासते दान्ता ब्राह्मणाः संशितव्रताः॥

॥ २।६७।१०-१३ ॥

नाराजके जनपदे प्रहृष्टनटनर्तकाः।
उत्सवाश्च समाजाश्च वर्धन्ते राष्ट्रवर्धनाः॥
नाराजके जनपदे सिद्धार्था व्यवहारिणः।
कथाभिरभिरज्यन्ते कथाशीलाः कथाप्रियैः॥
नाराजके जनपदे तूद्यानानि समागताः।
सायाह्ने क्रीडितुं यान्ति कुमार्यो हेमभूषिताः॥
नाराजके जनपदे धनवन्तः सुरक्षिताः।
शेरते विवृतद्वाराः कृषिगोरक्षजीविनः॥
नाराजके जनपदे वाहनैः शीघ्रवाहिभिः।
नरा निर्यान्त्यरण्यानि नारीभिः सह कामिनः॥

॥२।६७।१५-१६॥

नाराजके जनपदे शरान्संततमस्यताम् ।
श्रूयते तलनिर्घोष इष्वस्त्राणामुपासने ॥
नाराजके जनपदे वणिजो दूरगामिनः ।
गच्छन्ति क्षेममध्वानं बहुपण्यसमाचिताः ॥
नाराजके जनपदे चरत्येकचरो वशी ।
भावयन्नात्मनात्मानं यत्रसायंगृहो मुनिः ॥
नाराजके जनपदे योगक्षेमः प्रवर्तते ।
न चाप्यराजके सेना शत्रून्विषहते युधि ॥
नाराजके जनपदे हृष्टैः परमवाजिभिः ।
नरा संयान्ति सहसा रथैश्च प्रतिमण्डिताः ॥
नाराजके जनपदे नराः शास्त्रविशारदाः ।
संवदन्तोपतिष्ठन्ते वनेपूपवनेषु वा ॥
नाराजके जनपदे माल्यमोदकदक्षिणाः ।
देवताभ्यर्चनार्थाय कल्प्यन्ते नियतैर्जनैः ॥

॥२.६७।२१-२७॥

यथा ह्यनुदका नद्यो यथा वाप्यतृणं वनम् ।
अगोपाला यथा गावस्तथा राष्ट्रमराजकम् ॥

॥२।६७।२९॥

नाराजके जनपदे स्वकं भवति कस्यचित् ।
मत्स्या इव जना नित्यं भक्षयन्ति परस्परम् ॥२।६७।३१॥
यथा दृष्टिः शरीरस्य नित्यमेव प्रवर्तते ।
तथा नरेन्द्रो राष्ट्रस्य प्रभवः सत्यधर्मयोः ॥

राजा सत्यं च धर्मश्च राजा कुलवतां कुलम् ।
राजा माता पिता चैव राजा हितकरो नृणाम् ॥
॥२।६७।३३-३४॥

अहो तम इवेदं स्यान्न प्रज्ञायेत किंचन ।
राजा चेन्न भवेल्लोके विभजन्साध्वसाधुनी ॥
॥२।६७।३६॥

---

यदन्नः पुरुषो भवति तदन्नास्तस्य देवताः
॥२।१०३।३०॥

---

( रामः पितृवियोगदुःखितं भरतं सान्त्वयति )

नात्मनः कामकारो हि पुरुषोऽयमनीश्वरः ।
इतश्चेतरतश्चैनं कृतान्तः परिकर्षति ॥
सर्वे क्षयान्ता निचयाः पतनान्ताः समुच्छ्रयाः ।
संयोगा विप्रयोगान्ता मरणान्तं च जीवितम् ॥
यथा फलानां पक्वानां नान्यत्र पतनाद्भयम् ।
एवं नरस्य जातस्य नान्यत्र मरणाद्भयम् ॥
यथागारं दृढस्थूणं जीर्णं भूत्वोपसीदति ।
तथावसीदन्ति नरा जरामृत्युवशं गताः ॥
अत्येति रजनी या तु सा न प्रतिनिवर्तते ।
यात्येव यमुना पूर्णा समुद्रमुदकार्णवम् ॥
अहोरात्राणि गच्छन्ति सर्वेषां प्राणिनामिह ।
आयूंषि क्षपयन्त्याशु ग्रीष्मे जलमिवांशवः ॥

आत्मानमनुशोच त्वं किमन्यमनुशोचसि ।
आयुस्तु हीयते यस्य स्थितस्याथ गतस्य च ॥
सहैव मृत्युर्व्रजति सह मृत्युर्निषीदति ।
गत्वा सुदीर्घमध्वानं सह मृत्युर्निवर्तते ॥
गात्रेषु वलयः प्राप्ताः श्वेताश्चैव शिरोरुहाः ।
जरया पुरुषो जीर्णः किं हि कृत्वा प्रभावयेत् ॥
नन्दन्त्युदित आदित्ये नन्दन्त्यस्तमितेऽहनि ।
आत्मनो नावबुध्यन्ते मनुष्या जीवितक्षयम् ॥
हृष्यन्त्यृतुमुखं दृष्ट्वा नवं नवमिवागतम् ।
ऋतूनां परिवर्तेन प्राणिनां प्राणसंक्षयः ॥

यथा काष्ठं च काष्ठं च समेयातां महार्णवे ।
समेत्य तु व्यपेयातां कालमासाद्य कंचन ॥
एवं भार्याश्च पुत्राश्च ज्ञातयश्च वसूनि च ।
समेत्य व्यवधावन्ति ध्रुवो ह्येषां विनाभवः ॥
नात्र कश्चिद्यथाऽभावं प्राणी समतिवर्तते ।
तेन तस्मिन्न सामर्थ्यं प्रेतस्यास्त्यनुशोचतः ॥
यथा हि सार्थं गच्छन्तं ब्रूयात्कश्चित्पथि स्थितः ।
अहमप्यागमिष्यामि पृष्ठतो भवतामिति ॥
एवं पूर्वैर्गतो मार्गः पैतृपितामहैर्ध्रुवः ।
तमापन्नः कथं शोचेद्यस्य नास्ति व्यतिक्रमः ॥
वयसः पतमानस्य स्रोतसो वाऽनिवर्तिनः ।
आत्मा सुखे नियोक्तव्यः सुखभाजः प्रजाः स्मृताः ॥

धर्मात्मा सुशुभैः कृत्स्नैः क्रतुभिश्चाप्तदक्षिणैः ।
न स शोच्यः पिता तात स्वर्गतः सत्कृतः सताम् ॥
स जीर्णमानुषं देहं परित्यज्य पिता हि नः ।
दैवीमृद्धिमनुप्राप्तो ब्रह्मलोकविहारिणीम् ॥
तं तु नैवंविधः कश्चित्प्राज्ञः शोचितुमर्हति ।
त्वद्विधो मद्विधश्चापि श्रुतवान्बुद्धिमत्तरः ।
एते बहुविधाः शोका विलापरुदिते तथा ।
वर्जनीया हि धीरेण सर्वावस्थासु धीमता ॥
॥२।१०।१५-३५॥

---

प्रत्यक्षं यत्तदातिष्ठ परोक्षं पृष्ठतः कुरु ॥
॥२।१०८।१७॥

निर्मर्यादस्तु पुरुषः पापाचारसमन्वितः ।
मानं न लभते सत्सु भिन्नचारित्रदर्शनः ॥
कुलीनमकुलीनं वा वीरं पुरुषमानिनम् ।
चारित्रमेव व्याख्याति शुचिं वा यदि वाशुचिम्
॥२।१०९।३-४॥

सत्यमेवेश्वरो लोके सत्ये धर्मः सदाश्रितः ।
सत्यमूलानि सर्वाणि सत्यान्नास्ति परं पदम्
॥२।१०९।१३॥

एकः पालयते लोकमेकः पालयते कुलम् ।
मज्जत्येको हि निरय एकः स्वर्गे महीयते
॥२।१०९।१५॥

प्रत्यगात्ममिमं धर्मं सत्यं पश्याम्यहं ध्रुवम् ।
भारः सत्पुरुषैश्चीर्णस्तदर्थमभिनन्द्यते
॥ २।१०६।१६ ॥

भूमिः कीर्त्तिर्यशो लक्ष्मीः पुरुषं प्रार्थयन्ति हि ।
सत्यं समनुवर्तन्ते सत्यमेव भजेत्ततः ॥ २।१०६।२२ ॥
कर्मभूमिमिमां प्राप्य कर्तव्यं कर्म यच्छुभम् ॥२।१०६।२८॥
लक्ष्मीश्चन्द्रादपेयाद्वा हिमवान् वा हिमं त्यजेत् ।
अतीयात्सागरो वेलां न प्रतिज्ञामहं पितुः ॥२।११२।१८॥
देशधर्मस्तु पूज्यताम् ॥३।६।२७॥
आत्मानंनियमैस्तैस्तैः कर्षयित्वा प्रयत्नतः ।
प्राप्यते निपुणैर्धर्मो न सुखाल्लभते सुखम् ॥ ३।६।३१॥
अवश्यं लभते कर्ता फलं पापस्य कर्मणः ।
घोरं पर्यागते काले द्रुमः पुष्पमिवार्त्तवम् ॥३।२६।८॥
परेतकल्पा हि गतायुषो नरा
हितं न गृह्णन्ति सुहृद्भिरीरितम् ॥३।४१।२०॥
स भारः सौम्य भर्तव्यो यो नरं नावसादयेत् ।
तदन्नमपि भोक्तव्यं जीर्यते यदनामयम् ॥
यत्कृत्वा न भवेद्धर्मो न कीर्त्तिर्न यशो ध्रुवम् ।
शरीरस्य भवेत् खेदः कस्तत्कर्म समाचरेत् ॥३।५०।१८-१६॥
विनाशे वहवो दोषा जीवन्प्राप्नोति भद्रकम् ॥५।१३।४५॥
कल्याणी वत गाथेयं लौकिकी प्रतिभाति या ।
एति जीवन्तमानन्दो नरं वर्षशतादपि ॥५।३४।६॥

पुरुषस्य हि लोकेऽस्मिन् शोकः शौर्यापकर्षणः ॥६।२।१३॥

देशे देशे कलत्राणि देशे देशे च बान्धवाः

तं तु देशं न पश्यामि यत्र भ्राता सहोदरः ॥६।१०१।१४॥

पतिव्रतानां नाकस्मात् पतन्त्यश्रूणि भूतले ॥

॥६।१११।६७॥

मरणान्तानि वैराणि ॥६।१११।१००॥

रामो द्विर्नाभिभाषते ॥

# महाभारते

## विदुरनीतेः

### ( पण्डितलक्षणम् )

आत्मज्ञानं समारम्भस्तितिक्षा धर्मनित्यता ।
यमर्था नापकर्षन्ति स वै पण्डित उच्यते ॥ १ ॥
क्रोधो हर्षश्च दर्पश्च ह्रीः स्तम्भो मान्यमानिता ।
यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ॥ २ ॥
यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे ।
कृतमेवास्य जानन्ति स वै पण्डित उच्यते ॥ ३ ॥
यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः ।
समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते ॥ ४ ॥
यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्वते ।
न किञ्चिदवमन्यन्ते नराः पण्डितबुद्धयः ॥ ५ ॥
क्षिप्रं विजानाति चिरं शृणोति, विज्ञाय चार्थं भजते न कामात् ।
नासम्पृष्टो ह्युपयुङ्क्ते परार्थे, तत्प्रज्ञानं प्रथमं पण्डितस्य ॥६॥
नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् ।
आपत्सु च न मुह्यन्ति नराः पण्डितबुद्धयः ॥ ७ ॥
निश्चित्य यः प्रक्रमते नान्तर्वसति कर्मणः ।
अवन्ध्यकालो वश्यात्मा स वै पण्डित उच्यते॥ ८ ॥

आर्यकर्मणि रज्यन्ते भूतिकर्माणि कुर्वते ।
हितं च नाभ्यसूयन्ति पण्डिता भरतर्षभ ॥ ९ ॥
न हृष्यत्यात्मसंमाने नावमानेन तप्यते ।
गाङ्गो ह्रद इवात्तोभ्यो यः स पण्डित उच्यते ॥ १० ॥
तत्त्वज्ञः सर्वभूतानां योगज्ञः सर्वकर्मणाम् ।
उपायज्ञो मनुष्याणां नरः पण्डित उच्यते ॥ ११ ॥
प्रवृत्तवाक् चित्रकथ ऊहवान् प्रतिभानवान् ।
आशु ग्रन्थस्य वक्ता च यः स पण्डित उच्यते ॥१२॥
श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव श्रुतानुगा ।
असम्भिन्नार्यमर्यादः पण्डिताख्यां लभेत सः ॥ १३ ॥
अर्थं महान्तमासाद्य विद्यामैश्वर्यमेव वा ।
विचरत्यसमुन्नद्धो यः स पण्डित उच्यते ॥ १४ ॥

---

## ( मूढलक्षणम् )

अश्रुतश्च समुन्नद्धो दरिद्रश्च महामनाः ।
अर्थांश्चाकर्मणा प्रेप्सुर्मूढ इत्युच्यते बुधैः ॥ १ ॥
स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति ।
मिथ्या चरति मित्रार्थे यश्च मूढः स उच्यते ॥ २ ॥
अकामान् कामयति यः कामयानान् परित्यजेत् ।
बलवन्तं च यो द्वेष्टि तमाहुर्मूढचेतसम् ॥ ३ ॥
अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च ।
कर्म चारभते दुष्टं तमाहुर्मूढचेतसम् ॥ ४ ॥

संसारयति कृत्यानि सर्वत्र विचिकित्सते ।
चिरं करोति क्षिप्रार्थे स मूढो भरतर्षभ ॥५॥
अनाहूतः प्रविशति अपृष्टो बहु भाषते ।
अविश्वस्ते विश्वसिति मूढचेता नराधमः ॥६॥
परं क्षिपति दोषेण वर्त्तमानः स्वयं तथा ।
यश्च क्रुध्यत्यनीशानः स च मूढतमो नरः ॥७॥
आत्मनो बलमज्ञाय धर्मार्थपरिवर्जितम् ।
अलभ्यमिच्छन्नैष्कर्म्यान्मूढबुद्धिरिहोच्यते ॥८॥



( आर्यशीलः पुरुषः )

न वैरमुद्दीपयति प्रशान्तं
न दर्पमारोहति नास्तमेति ।
न दुर्गतोऽस्मीति करोत्यकार्यं
तमार्यशीलं परमाहुरार्याः ॥ १ ॥
न स्वे सुखे वै कुरुते प्रहर्षं
नान्यस्य दुःखे भवति प्रहृष्टः ।
दत्त्वा न पश्चात्कुरुतेऽनुतापं
स कथ्यते सत्पुरुषार्यशीलः ॥ २ ॥



## ( संख्यावन्ति सुभाषितानि )

एकः सम्पन्नमश्नाति वस्ते वासश्च शोभनम् ।
योऽसंविभज्य भृत्येभ्यः को नृशंसतरस्ततः ॥ १ ॥
एकः पापानि कुरुते फलं भुङ्क्ते महाजनः ।
भोक्तारो विप्रमुच्यन्ते कर्त्ता दोषेण लिप्यते ॥ २ ॥
एकं हन्यान्न वा हन्यादिपुर्मुक्तो धनुष्मता ।
बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ॥ ३ ॥
एकं विपरसो हन्ति शस्त्रेणैकश्च वध्यते ।
सराष्ट्रं सप्रजं हन्ति राजानं मन्त्रविप्लवः ॥ ४ ॥
एकः स्वादु न भुञ्जीत एकश्चार्थान्न चिन्तयेत् ।
एको न गच्छेदध्वानं नैकः सुप्तेषु जागृयात् ॥ ५ ॥
एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ ६ ॥
सोऽस्य दोषो न मन्तव्यः क्षमा हि परमं बलम् ।
क्षमा गुणो ह्यशक्तानां शक्तानां भूषणं क्षमा ॥ ७ ॥
क्षमा वशीकृतिर्लोके क्षमया किं न साध्यते ।
शान्तिखड्गः करे यस्य किं करिष्यति दुर्जनः ॥ ८ ॥
द्वाविमौ ग्रसते भूमिः सर्पो बिलशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥ ९ ॥
द्वे कर्मणी नरः कुर्वन्नस्मिँल्लोके विरोचते ।
अब्रुवन्परुषं किञ्चिदसतोऽनर्चयंस्तथा ॥ १० ॥

द्वाविमौ कण्टकौ तीक्ष्णौ शरीरपरिशोषिणौ ।
यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ॥ ११ ॥
द्वावेव न विराजेते विपरीतेन कर्मणा ।
गृहस्थश्च निरारम्भः कार्यवांश्चैव भिक्षुकः ॥ १२ ॥
द्वाविमौ पुरुषौ राजन्स्वर्गस्योपरि तिष्ठतः ।
प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥ १३ ॥
न्यायागतस्य द्रव्यस्य बोद्धव्यौ द्वावतिक्रमौ ।
अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् ॥ १४ ॥
द्वावम्भसि निवेष्टव्यौ गले बद्ध्वा दृढां शिलाम् ।
धनवन्तमदातारं दरिद्रं चातपस्विनम् ॥ १५ ॥
द्वाविमौ पुरुषव्याघ्र ! सूर्यमण्डलभेदिनौ ।
परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः ॥ १६ ॥
त्रयः पापा मनुष्याणां श्रूयन्ते भरतर्षभ ।
कनीयान्मध्यमः श्रेष्ठ इति वेदविदो विदुः ॥ १७ ॥
त्रिविधाः पुरुषा राजन्नुत्तमाधममध्यमाः ।
नियोजयेद्यथावत्तांस्त्रिविधेष्वेव कर्मसु ॥ १८ ॥
त्रय एवाधना राजन्भार्या दासस्तथा सुतः ।
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥ १९ ॥
हरणं च परस्वानां परदाराभिमर्शनम् ।
सुहृदश्च परित्यागस्त्रयो दोषाः क्षयावहाः ॥ २० ॥
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥२१॥

वरप्रदानं राज्यं च पुत्रजन्म च भारत ।
शत्रोश्च मोक्षणं कृच्छ्रात् त्रीणि चैकं च तत्समम् ॥२२॥
भक्तं च भजमानं च तवास्मीति च वादिनम् ।
त्रीनेताञ्छरणं प्राप्तान्विषमेऽपि न सन्त्यजेत् ॥२३॥
चत्वारि राज्ञा तु महाबलेन
वर्ज्यान्याहुः पण्डितस्तानि विद्यात् ।
अल्पप्रज्ञैः सह मन्त्रं न कुर्या-
न्न दीर्घसूत्रै रभसैश्चारणैश्च ॥२४॥
चत्वारि ते तात ! गृहे वसन्तु
श्रियाभिजुष्टस्य गृहस्थधर्मे ।
वृद्धो ज्ञातिरवसन्नः कुलीनः
सखा दरिद्रो भगिनी चानपत्या ॥२५॥
चत्वार्याह महाराज साद्यस्कानि बृहस्पतिः ।
पृच्छते त्रिदशेन्द्राय तानीमानि निबोध मे ॥२६॥
देवतानां च संकल्पमनुभावं च धीमताम् ।
विनयं कृतविद्यानां विनाशं पापकर्मणाम् ॥२७॥
चत्वारि कर्माण्यभयङ्कराणि
भयं प्रयच्छन्त्ययथाकृतानि ।
मानाग्निहोत्रमुत मानमौनं,
मानेनाधीतमुत मानयज्ञः ॥२८॥
पञ्चाग्नयो मनुष्येण परिचर्याः प्रयत्नतः ।
पिता माताग्निरात्मा च गुरुश्च भरतर्षभ ! ॥२९॥

पञ्चैव पूजयंल्लोके यशः प्राप्नोति केवलम् ।
देवान्पितॄन् मनुष्यांश्च भिक्षूनतिथिपञ्चमान् ॥३०॥

पञ्च त्वानुगमिष्यन्ति यत्र यत्र गमिष्यसि ।
मित्राण्यमित्रा मध्यस्था उपजीव्योपजीविनः ॥३१॥

पञ्चेन्द्रियस्य मर्त्यस्य छिद्रं चेदेकमिन्द्रियम् ।
ततोऽस्य स्रवति प्रज्ञा दृतेः पात्रादिवोदकम् ॥३२॥

षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रिता ॥३३॥

षडिमान् पुरुषो जह्याद्भिन्नां नावमिवार्णवे ।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥३४॥

अरक्षितारं राजानं भार्यां चाप्रियवादिनीम् ।
ग्रामकामं च गोपालं वनकामं च नापितम् ॥३५॥

षडेव तु गुणाः पुंसा न हातव्याः कदाचन ।
सत्यं दानमनालस्यमनसूया क्षमा धृतिः ॥३६॥

अर्थागमो नित्यमरोगिता च
प्रिया च भार्या प्रियवादिनी च ।
वश्यश्च पुत्रोऽर्थकरी च विद्या
षड् जीवलोकस्य सुखानि राजन् ! ॥३७॥

षण्णामात्मनि नित्यानामैश्वर्यं योऽधिगच्छति ।
न स पापैः कुतोऽनर्थैर्युज्यते विजितेन्द्रियः ॥३८॥

षडिमे षट्सु जीवन्ति सप्तमो नोपलभ्यते ।
चौराः प्रमत्ते जीवन्ति व्याधितेषु चिकित्सकाः ॥३९॥

प्रमदाः कामयानेषु यजमानेषु याजकाः ।
राजा विवदमानेषु नित्यं मूर्खेषु पण्डिताः ॥ ४० ॥
षडिमानि विनश्यन्ति मुहूर्तमनवेक्षणात् ।
गावः सेवा कृषिर्भार्या विद्या वृषलसङ्गतिः ॥ ४१ ॥
षडेते ह्यवमन्यन्ते नित्यं पूर्वोपकारिणम् ।
आचार्यं शिक्षिताः शिष्याः कृतदाराश्च मातरम् ॥ ४२ ॥
नारीं विगतकामास्तु कृतार्थाश्च प्रयोजकम् ।
नावं निस्तीर्णकान्तारा आतुराश्च चिकित्सकम् ॥४३॥

आरोग्यमानृण्यमविप्रवासः
सद्भिर्मनुष्यैः सह सम्प्रयोगः ।
स्वप्रत्यया वृत्तिरभीतवासः
षड् जीवलोकस्य सुखानि राजन्! ॥ ४४ ॥

ईर्षुर्घृणी न संतुष्टः क्रोधनो नित्यशङ्कितः ।
परभाग्योपजीवी च षडेते नित्यदुःखिताः ॥ ४५ ॥
सप्त दोषाः सदा राज्ञा हातव्या व्यसनोदयाः ।
प्रायशो यैर्विनश्यन्ति कृतमूला अपीश्वराः ॥ ४६ ॥
स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम् ।
महच्च दण्डपारुष्यमर्थदूषणमेव च ॥ ४७ ॥

अष्टौ गुणाः पुरुषं दीपयन्ति
प्रज्ञा च कौल्यं च दमः श्रुतं च ।
पराक्रमश्चाबहुभाषिता च
दानं यथाशक्ति कृतज्ञता च ॥ ४८ ॥

नवद्वारमिदं वेश्म त्रिस्थूणं पञ्चसाक्षिकम् ।
क्षेत्रज्ञाधिष्ठितं विद्वान्यो वेद स परः कविः ॥ ४९ ॥
दश धर्मं न जानन्ति धृतराष्ट्र ! निबोध तान् ।
मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ॥ ५० ॥
त्वरमाणश्च लुब्धश्च भीतः कामी च ते दश ।
तस्मादेतेषु सर्वेषु न प्रसज्जेत पण्डितः ॥ ५१ ॥



# कौटिलीयादर्थशास्त्रात्

## विद्यासमुद्देशः

आन्वीक्षिकी त्रयी वार्ता दण्डनीतिश्चेति विद्याः।

ताभिर्धर्मार्थौ यद्विद्यात्तद्विद्यानां विद्यात्वम्। सांख्यं योगो लोकायतं चेत्यान्वीक्षिकी। धर्माधर्मौ त्रय्याम्। अर्थानर्थौ वार्तायाम्। नयानयौ दण्डनीत्याम्। बलाबले चैतासां हेतुभिरन्वीक्षमाणा लोकस्योपकरोति, व्यसनेऽभ्युदये च बुद्धिमवस्थापयति, प्रज्ञावाक्यक्रियावैशारद्यं च करोति—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम्।
*आश्रयः सर्वधर्माणां शश्वदान्वीक्षिकी मता॥*

सामर्ग्यजुर्वेदास्त्रयस्त्रयी। अथर्ववेदेतिहासवेदौ च वेदाः। शिक्षा कल्पो व्याकरणं निरुक्तं छन्दोविचितिर्ज्योतिषमिति चाङ्गानि।

एष त्रयीधर्मश्चतुर्णां वर्णानामाश्रमाणां च स्वधर्मस्थापनादौपकारिकः।

स्वधर्मः स्वर्गायानन्त्याय च। तस्यातिक्रमे लोकः संकरादुच्छिद्येत—

तस्मात्स्वधर्मं भूतानां राजा न व्यभिचारयेत्।
स्वधर्मं संदधानो हि प्रेत्य चेह च नन्दति॥
व्यवस्थितार्यमर्यादः कृतवर्णाश्रमस्थितिः।
त्रय्या हि रक्षितो लोकः प्रसीदति न सीदति॥

कृषिपाशुपाल्ये वाणिज्या च वार्ता; धान्यपशुहिरण्यकुप्यविष्टिप्रदानादौपकारिकी। तया स्वपक्षं परपक्षं च वशीकरोति कोशदण्डाभ्याम्।

आन्वीक्षिकीत्रयीवार्तानां योगक्षेमसाधनो दण्डः। तस्य नीतिर्दण्डनीतिः; अलब्धलाभार्था, लब्धपरिरक्षणी, रक्षितविवर्धनी, वृद्धस्य तीर्थेषु प्रतिपादनी च। तस्यामायत्ता लोकयात्रा। तस्माल्लोकयात्रार्थी नित्यमुद्यतदण्डः स्यात्। न ह्येवंविधं वशोपनयनमस्ति भूतानां यथा दण्ड इत्याचार्याः। नेति कौटिल्यः। तीक्ष्णदण्डो हि भूतानामुद्वेजनीयः। मृदुदण्डः परिभूयते। यथार्हदण्डः पूज्यः।

चतुर्वर्णाश्रमो लोको राज्ञा दण्डेन पालितः।
स्वधर्मकर्माभिरतो वर्तते स्वेषु वर्त्मसु॥
(१।२-४)

मात्स्यन्यायाभिभूताः प्रजा मनुं वैवस्वतं राजानं चक्रिरे।
(१।१३)

न कञ्चिदवमन्येत सर्वस्य शृणुयान्मतम्
बालस्याप्यर्थवद्वाक्यमुपयुञ्जीत पण्डितः॥
(१।१५)

अनुत्थाने ध्रुवो नाशः प्राप्तस्यानागतस्य च।
प्राप्यते फलमुत्थानाल्लभते चार्थसंपदम्॥
(१।१६)

प्रजासुखे सुखं राज्ञः प्रजानां च हिते हितम्।
नात्मप्रियं हितं राज्ञः प्रजानां तु प्रियं हितम्॥
(१।१९)

चित्तानित्यत्वान्मनुष्याणाम्। अश्वसधर्माणो हि मनुष्या नियुक्ताः कर्मसु विकुर्वते। (२।९)

न त्वेवार्यस्य दासभावः। (३।१३)

पूज्या विद्याबुद्धिपौरुषाभिजनकर्मातिशयतश्च पुरुषाः।
(३।२०)

स्वयमुपस्थितं नावमन्येत। (५।६)

कालश्च सकृदभ्येति यं नरं कालकाङ्क्षिणम्।
दुर्लभः स पुनस्तस्य कालः कर्म चिकीर्षतः॥
(५।६)

विजिगीषुः शक्त्यपेक्षः षाड्गुण्यमुपयुञ्जीत। समज्यायोभ्यां संधीयेत। हीनेन विगृह्णीयात्। विगृहीतो हि ज्यायसा हस्तिना पादयुद्धमिवाभ्युपैति। समेन चामं पात्रमामेनाहतमिवोभयतः क्षयं करोति। कुम्भेनेवाश्मा हीनेनैकान्तसिद्धिमवाप्नोति।
(७।३)

व्यस्यत्येनं श्रेयस इति व्यसनम्। (८।१)

विल्वं विल्वेन हन्यताम्। (९।२)

लाभविघ्नाः—कामः कोपः साध्वसं कारुण्यं ह्रीः अनार्यभावः मानः सानुक्रोशता परलोकापेक्षा धार्मिकत्वम् अत्याहितत्वं (अत्यागित्वं वा) दैन्यम् असूया हस्तगतावमानो...अविश्वासो

भयम्...शीतोष्णवर्षाणामात्म्यं मङ्गलतिथिनक्षत्रेष्टित्वमिति।

नक्षत्रमतिपृच्छन्तं बालमर्थोऽतिवर्तते।
अर्थो ह्यर्थस्य नक्षत्रं किं करिष्यन्ति तारकाः॥
साधनाः (? सधनाः) प्राप्नुवन्त्यर्थान् नरा यत्नशतैरपि।
अर्थैरर्थाः प्रबध्यन्ते गजाः प्रतिगजैरिव॥९।४॥
एकं हन्यान्न वा हन्यादिषुः क्षिप्तो धनुष्मता।
प्राज्ञेन तु मतिः क्षिप्ता हन्याद् गर्भगतानपि॥१०।६॥

---

## चाणक्यसूत्रेभ्यः

जितात्मा सर्वार्थैः संयुज्येत॥१०॥
मन्त्ररक्षणे कार्यसिद्धिर्भवति॥२३॥
मन्त्रविस्रावी कार्यं नाशयति॥२४॥
पट्कर्णाद् भिद्यते मन्त्रः॥३४॥
मित्रसंग्रहणे बलं संपद्यते॥३६॥
तेजो हि संधानहेतुस्तदर्थानाम्॥५३॥
नातप्तलोहो लोहेन संधीयते॥५४॥
गजपादयुद्धमिव बलवद्विग्रहः॥५७॥
आमपात्रमामेन सह विनश्यति॥५८॥
अग्निदाहादपि विशिष्टं वाक्पारुष्यम्॥७५॥
आत्मनि रक्षिते सर्वं रक्षितं भवति॥८४॥
आत्मायत्तौ वृद्धिविनाशौ॥८५॥
नास्त्यग्नेर्दौर्बल्यम्॥८८॥
पुरुषकारमनुवर्तते दैवम्॥९८॥

पूर्वं निश्चित्य पश्चात् कार्यमारभेत ॥१०१॥
न चलचित्तस्य कार्यावाप्तिः ॥१०३॥
दोषवर्जितानि कार्याणि दुर्लभानि ॥१०५॥
कालातिक्रमात् काल एव फलं पिबति ॥१०८॥
परीक्ष्यकारिणि श्रीश्चिरं तिष्ठति ॥११३॥
यो यस्मिन् कर्मणि कुशलस्तं तस्मिन्नेव योजयेत् ॥११७॥
सिद्धस्यैव कार्यस्य प्रकाशनं कर्त्तव्यम् ॥१२१॥
ज्ञानवतामपि दैवमानुषदोषात्कार्याणि दुष्यन्ति ॥१२२॥
दैवं शान्तिकर्मणा प्रतिषेद्धव्यम् ॥१२३॥
मानुषीं कार्यविपत्तिं कौशलेन विनिवारयेत् ॥१२४॥
क्षीरार्थी वत्सो मातुरूधः प्रतिहन्ति ॥१२७॥
न दैवप्रमाणानां कार्यसिद्धिः ॥१२६॥
अपरीक्ष्यकारिणं श्रीः परित्यजति ॥१३३॥
स्वशक्तिं ज्ञात्वा कार्यमारभेत ॥१३५॥
धेनोः शीलज्ञः क्षीरं भुङ्क्ते ॥१४०॥
अतिभारः पुरुषमवसादयति ॥१४३॥
यः संसदि परदोषं शंसति स स्वदोषबहुत्वं प्रख्यापयति ॥१४७॥
साहसेन न कार्यसिद्धिर्भवति ॥१५०॥
अवमानेनागतमैश्वर्यमवमन्यते साधुः ॥१६०॥
बहूनपि गुणानेकदोषो ग्रसति ॥१६१॥
क्षुधार्तो न तृणं चरति सिंहः ॥१६४॥
नाल्पदोषाद् बहुगुणास्त्यजन्ते ॥१६६॥

विपश्चित्स्वपि सुलभा दोषाः ॥१७०॥

नास्ति रत्नमखण्डितम् ॥१७१॥

क्षीराश्रितं जलं क्षीरमेव भवति ॥१७३॥

रजतं कनकसङ्गात्कनकं भवति ॥१७६॥

नास्त्यलसस्यैहिकामुष्मिकम् ॥१८४॥

निरुत्साहाद्दैवं पतति ॥१८५॥

अविश्वस्तेषु विश्वासो न कर्तव्यः ॥१८७॥

विषं विषमेव सार्वकालम् ॥१८८॥

नीचस्य मतिर्न दातव्या ॥२०३॥

सुपूजितोऽपि दुर्जनः पीडयत्येव ॥२०५॥

चन्दनादीनपि दावाग्निर्दहत्येव ॥२०६॥

कदापि पुरुषं नावमन्येत ॥२०७॥

मितभोजनं स्वास्थ्यम् ॥२१८॥

पथ्यमपथ्याजीर्णे नाश्नीयात् ॥२१९॥

जीर्णभोजिनं व्याधिर्नोपसर्पति ॥२२०॥

जीर्णशरीरे वर्धमानं व्याधिं नोपेक्षेत ॥२२१॥

अजीर्णे भोजनं दुःखम् ॥२२२॥

शत्रोरपि विशिष्यते व्याधिः ॥२२३॥

मूर्खेषु विवादो न कर्तव्यः ॥२३०॥

मूर्खेषु मूर्खवत्कथयेत् ॥२३१॥

आयसैरायसं छेद्यम् ॥२३२॥

पररहस्यं नैव श्रोतव्यम् ॥२४४॥

स्वहस्तोऽपि विषदिग्धश्छेद्यः ॥२४८॥

व्यसनं मनागपि बाधते ॥२५३॥

अमरवदर्थजातमार्जयेत् ॥२५४॥

अर्थवान् सर्वलोकस्य बहुमतः ॥२५५॥

महेन्द्रमप्यर्थहीनं न बहु मन्यते लोकः ॥२५६॥

दारिद्र्यं खलु पुरुषस्य जीवितं मरणम् ॥२५७॥

विरूपोऽर्थवान् सुरूपः ॥२५८॥

अदातारमप्यर्थवन्तमर्थिनो न त्यजन्ति ॥२५९॥

अकुलीनोऽपि कुलीनाद्विशिष्टः ॥२६०॥

नास्त्यमानभयमनार्यस्य ॥२६१॥

परद्रव्यापहरणमात्मद्रव्यनाशहेतुः ॥२६९॥

न चौर्यात्परं मृत्युपाशः ॥२७०॥

विशेषज्ञं स्वामिनमाश्रयेत ॥२८३॥

पुरुषस्य मैथुनं जरा ॥२८४॥

स्त्रीणाममैथुनं जरा ॥२८५॥

अगम्यागमनादायुर्यशःपुण्यानि क्षीयन्ते ॥२८७॥

नास्त्यहंकारसमः शत्रुः ॥२८८॥

संसदि शत्रुं न परिक्रोशेत ॥२८९॥

यः परार्थमुपसर्पति स सत्पुरुषः ॥२९९॥

इन्द्रियाणां प्रशमं शास्त्रम् ॥३००॥

म्लेच्छभाषणं न शिक्षेत ॥३०३॥

म्लेच्छानामपि सुवृत्तं ग्राह्यम् ॥३०४॥

न स्त्रैणस्य स्वर्गाप्तिर्धर्मकृत्यं च ॥ ३१७ ॥

स्त्रियोऽपि स्त्रैणमवमन्यन्ते ॥ ३१८ ॥

न महाजनहासः कर्तव्यः ॥ ३२१ ॥

कार्यसंपदं निमित्तानि सूचयन्ति ॥ ३२२ ॥

नक्षत्रादपि निमित्तानि विशेषयन्ति ॥ ३२३ ॥

कथानुरूपं प्रतिवचनम् ॥ ३२९ ॥

विभवानुरूपमाभरणम् ॥ ३३० ॥

वयोऽनुरूपो वेषः ॥ ३३४ ॥

आत्मच्छिद्रं न पश्यति परच्छिद्रमेव पश्यति बालिशः ॥३४३॥

श्वो मयूरादद्य कपोतो वरः ॥ ३४८ ॥

सर्वं जयत्यक्रोधः ॥ ३५० ॥

अलोहमयं निगडं कलत्रम् ॥ ३५६ ॥

भूषणानां भूषणं सविनया विद्या ॥ ३६८ ॥

उपस्थितविनाशः पथ्यवाक्यं न शृणोति ॥ ३९५ ॥

न चक्षुषः समं ज्योतिरस्ति ॥ ४०३ ॥

चक्षुर्हि शरीरिणां नेता ॥ ४०४ ॥

अपचक्षुषः किं शरीरेण ॥ ४०५ ॥

न वेदबाह्यो धर्मः ॥ ४१४ ॥

न मीमांस्या गुरवः ॥ ४२२ ॥

मृगार्थमनुव्याधिर्नशोषः कर्तव्यः ॥ ४३५ ॥

नार्यत्ववज्ञा कार्या ॥ ४३७ ॥

जिह्वायत्तौ वृद्धिविनाशौ ॥ ४४० ॥

विषामृतयोराकरी जिह्वा ॥४४१॥

प्रियवादिनो न शत्रुः ॥४४२॥

स्तुता अपि देवतास्तुष्यन्ति ॥४४३॥

अनृतमपि दुर्वचनं चिरं तिष्ठति ॥४४४॥

श्रुतिसुखात् कोकिलालापात् तुष्यन्ति ॥४४६॥

एरण्डमवलम्ब्य कुञ्जरं न कोपयेत् ॥४५२॥

यथा श्रुतं तथा बुद्धिः ॥४५६॥

यथा कुलं तथाचारः ॥४६०॥

न चागतं सुखं त्यजेत् ॥४६२॥

स्वयमेव दुःखमधिगच्छति ॥४६३॥

गतानुगतिको लोकः ॥४७३॥

यमनुजीवेत्तं नापवदेत् ॥४७४॥

न च स्त्रीणां पुरुषपरीक्षा ॥४७८॥

स्त्रीणां मनः क्षणिकम् ॥४७९॥

देही देहं त्यक्त्वा ऐन्द्रपदं न वाञ्छति ॥४८४॥

अनार्यसंबन्धाद् वरमार्यशत्रुता ॥४८६॥

निहन्ति दुर्वचनं कुलम् ॥४८७॥

न दानसमं वश्यम् ॥४९४॥

असत्समृद्धिरसद्भिरेव भुज्यते ॥४९६॥

निम्बफलं काकैर्भुज्यते ॥४९७॥

नाम्भोधिस्तृष्णामपोहति ॥४९८॥

आत्मा न स्तोतव्यः ॥५०९॥

आर्यः स्वमिव परं मन्यते ॥५२०॥

यत्र सुखेन वर्तते तदेव स्थानम् ॥५२३॥

पुत्रो न स्तोतव्यः ॥५२६॥

श्वः कार्यमद्य कुर्वीत ॥५३६॥

आपराह्णिकं पूर्वाह्ण एव कर्तव्यम् ॥५४०॥

सर्वज्ञता लोकज्ञता ॥५४२॥

शास्त्रज्ञोऽप्यलोकज्ञो मूर्खतुल्यः ॥५४३॥

आत्मनः पापमात्मैव प्रकाशयति ॥५५३॥

व्यवहारेऽन्तर्गतमाकारः सूचयति ॥५५४॥

आकारसंवरणं देवानामशक्यम् ॥५५५॥

---

## मनुस्मृतेः

### ( आहारविषये श्लोकाः )

पूजयेदशनं नित्यमद्याच्चैतदकुत्सयन् ।
दृष्ट्वा हृष्येत्प्रसीदेच्च प्रतिनन्देच्च सर्वशः ॥
पूजितं ह्यशनं नित्यं बलमूर्जं च यच्छति ।
अपूजितं तु तद्भुक्तमुभयं नाशयेदिदम् ॥
नोच्छिष्टं कस्यचिद् दद्यान्नाद्याच्चैव तथान्तरा ।
न चैवाध्यशनं कुर्यान्न चोच्छिष्टः क्वचिद् व्रजेद् ॥
अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम् ।
अपुण्यं लोकविद्विष्टं तस्मात्तत्परिवर्जयेत् ॥
( २।५४—५७ )

---

### ( इन्द्रियसंयमः )

इन्द्रियाणां विचरतां विषयेष्वपहारिषु ।
संयमे यत्नमातिष्ठेद्विद्वान्यन्तेव वाजिनाम् ॥
( २।८८ )

इन्द्रियाणां प्रसङ्गेन दोषमृच्छत्यसंशयम् ।
संनियम्य तु तान्येव ततः सिद्धिं नियच्छति ॥
न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥

यश्चैतान्प्राप्नुयात्सर्वान्यश्चैतान्केवलांस्त्यजेत् ।
प्रापणात्सर्वकामानां परित्यागो विशिष्यते ॥
न तथैतानि शक्यन्ते संनियन्तुमसेवया ।
विषयेषु प्रजुष्टानि यथा ज्ञानेन नित्यशः ॥
वेदास्त्यागश्च यज्ञाश्च नियमाश्च तपांसि च ।
न विप्रदुष्टभावस्य सिद्धिं गच्छन्ति कर्हिचित् ॥
श्रुत्वा स्पृष्ट्वा च दृष्ट्वा च भुक्त्वा घ्रात्वा च यो नरः ।
न हृष्यति ग्लायति वा स विज्ञेयो जितेन्द्रियः ॥
इन्द्रियाणां तु सर्वेषां यद्येकं क्षरतीन्द्रियम् ।
तेनास्य क्षरति प्रज्ञा दृतेः पात्रादिवोदकम् ॥
वशे कृत्वेन्द्रियग्रामं संयम्य च मनस्तथा ।
सर्वान्संसाधयेदर्थानक्षिण्वन्योगतस्तनुम् ॥
(२।९३-१००)

---

## ( ब्रह्मचारिनियमाः )

सेवेतेमांस्तु नियमान्ब्रह्मचारी गुरौ वसन् ।
सन्नियम्येन्द्रियग्रामं तपोवृद्ध्यर्थमात्मनः ॥
नित्यं स्नात्वा शुचिः कुर्याद्देवर्षिपितृतर्पणम् ।
देवताभ्यर्चनं चैव समिदाधानमेव च ॥
वर्जयेन्मधु मांसं च गन्धं माल्यं रसान्स्त्रियः ।
शुक्तानि यानि सर्वाणि प्राणिनां चैव हिंसनम् ॥
अभ्यङ्गमञ्जनं चाक्ष्णोरुपानच्छत्रधारणम् ।
कामं क्रोधं च लोभं च नर्तनं गीतवादनम् ॥

द्यूतं च जनवादं च परिवादं तथानृतम् ।
स्त्रीणां च प्रेक्षणालम्भमुपघातं परस्य च ॥
एकः शयीत सर्वत्र न रेतः स्कन्दयेत्क्वचित् ।
कामाद्धि स्कन्दयन्रेतो हिनस्ति व्रतमात्मनः ॥
(२।१७५-१८०)

---

## ( योऽनूचानः स नो महान् )

अध्यापयामास पितृन्शिशुराङ्गिरसः कविः ।
पुत्रका इति होवाच ज्ञानेन परिगृह्य तान् ॥
ते तमर्थमपृच्छन्त देवानागतमन्यवः ।
देवाश्चैतान्समेत्योचुर्न्याय्यं वः शिशुरुक्तवान् ॥
अज्ञो भवति वै बालः पिता भवति मन्त्रदः ।
अज्ञं हि बालमित्याहुः पितेत्येव तु मन्त्रदम् ॥
न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः ।
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान् ॥
विप्राणां ज्ञानतो ज्यैष्ठ्यं क्षत्रियाणां तु वीर्यतः ।
वैश्यानां धान्यधनतः शूद्राणामेव जन्मतः ॥
न तेन वृद्धो भवति येनास्य पलितं शिरः ।
यो वै युवाप्यधीयानस्तं देवाः स्थविरं विदुः ॥
(२।१५१-१५६)

---

धर्मार्थकाममोक्षाणामारोग्यं मूलमुत्तमम् ।

सम्यक्प्रयोगं सर्वेषां सिद्धिराख्याति कर्मणाम् ।

सुखार्थाः सर्वभूतानां मताः सर्वाः प्रवृत्तयः ।

आत्मानमेव मन्येत कर्तारं सुखदुःखयोः ।

ज्ञानवतापि च नात्यर्थमात्मनो ज्ञानेन विकत्थितव्यम् ।

आप्तादपि हि विकत्थमानादत्यर्थमुद्विजन्ति अनेके ।

कृत्स्नो हि लोको बुद्धिमतामाचार्यः । शत्रुश्चाबुद्धिमताम् ।

ज्ञानपूर्वकं कर्मणां समारम्भं प्रशंसन्ति कुशलाः ।

परीक्ष्यकारिणो हि कुशला भवन्ति ।

हेतावीर्ष्युः फले नेर्ष्युः ।

नान्यदोषान् ब्रूयात् । नान्यरहस्यमागमयेत् ।

नासंवृतमुखो जृम्भां क्षवथुं हास्यं वा प्रवर्तयेत् ।

न नियमं भिन्द्यात् ।

न सर्वविश्रम्भी, न सर्वाभिशङ्की ।

न कार्यकालमतिपातयेत् ।

न सिद्धावौत्सुक्यं गच्छेत् । नासिद्धौ दैन्यम् ।

नापरीक्षितमभिनिविशेत् ।

प्रत्यक्षं ह्यल्पमनल्पमप्रत्यक्षमस्ति ।

न ह्यतः पापात्पापीयोऽस्ति यदनुपकरणस्य दीर्घमायुः ।

पुरुषोऽयं लोकसम्मितः।......यावन्तो हि मूर्त्तिमन्तो लोके भावविशेषास्तावन्तः पुरुषे, यावन्तः पुरुषे तावन्तो लोके।

सम्यक्प्रयोगनिमित्ता हि सर्वकर्मणां सिद्धिरिष्टा। व्यापच्चा-सम्यक्प्रयोगनिमित्ता।

तद्विद्यसंभाषा हि ज्ञानाभियोगसंहर्षकरी भवति। वैशारद्यमपि चाभिनिर्वर्त्तयति। वचनशक्तिमपि चाधत्ते। यशश्चाभिदीपयति। पूर्वश्रुते च संदेहवतः पुनः श्रवणात् श्रुतसंशयमपकर्षति। श्रुते चासन्देहवतो भूयोऽध्यवसायमभिनिर्वर्तयति। अश्रुतमपि च कश्चिदर्थं श्रोत्रविषयमापादयति।

नरो हिताहारविहारसेवी समीक्ष्यकारी विषयेष्वसक्तः।
दाता समः सत्यपरः क्षमावानाप्तोपसेवी च भवत्यरोगः॥
ग्राम्यो हि वासो मूलमशस्तानाम्।
तत्त्वं हि दुष्प्रापं पक्षसंश्रयात्।

---

## रश्मिमालायाः

परितापेन दुःखानां
तप्तानां प्राणिनां भृशम् ।
कल्याणार्थाय संनद्धा
ये तान् वममुपास्महे ॥१॥

### आशा सर्वोत्तमं ज्योतिः

निराशायाः समं पापं मानवस्य न विद्यते ।
समुत्सार्य समूलं तामाशावादपरो भव ॥
मानवस्योन्नतिः सर्वा साफल्यं जीवनस्य च ।
चारितार्थ्यं तथा सृष्टेराशावादे प्रतिष्ठितम् ॥
आशा सर्वोत्तमं ज्योतिर्निराशा परमं तमः ।
तस्माद् गमय तज्ज्योतिस्तमसो मामिति श्रुतिः ॥

---

१. ग्रन्थकर्त्रा निर्मितं पद्यमयं पुस्तकम् । 'हिन्दी साहित्य सम्मेलन, प्रयाग' इति संस्थया प्रकाशितम् ।

२. तु० "तमसो मा ज्योतिर्गमय"

(बृहदारण्यकोपनिषदि १।३।२८)

आस्तिक्यमात्मविश्वासः कारुण्यं सत्यनिष्ठता।
उत्तरोत्तरमुत्कर्षो नूनमाशावतामिह ॥
निराशावादिनो मन्दा मोहावर्तेऽत्र दुस्तरे।
निमग्ना अवसीदन्ति पङ्के गावो यथावशाः ॥
(१।१-४; २।४)

## संयतस्व जीवनाय

प्राप्य मानवीयजन्म पुण्यकर्मसंचयेन।
दीनदुःखिरक्षणेन संयतस्व जीवनाय ॥
सत्पथानुवर्त्तनेन भव्यभावभावनेन।
लोकशंप्रसारणेन संयतस्व जीवनाय ॥
दैन्यभावभञ्जनेन धैर्यधर्मधारणेन।
वीरतासमाश्रयेण संयतस्व जीवनाय ॥
जीवनं त्विदं मुधेति पामरा जना वदन्ति।
नैव तत्तथा, ततोऽत्र संयतस्व जीवनाय ॥
( ३।१-४ )

## जयन्ति के जना भुवि ?

परोपकारतत्पराः स्वदेशभक्तिवत्सलाः।
अमत्सरास्तथापि ये जयन्ति ते जना भुवि ॥
उदात्तकर्मशालिनो न दैन्यभावधारिणः।
तथापि सन्ति प्रश्रिता जयन्ति ते जना भुवि ॥
विहातुमुद्यताः सदा परार्थमात्मनो हितम्।
अथाभिमानवर्जिता जयन्ति ते जना भुवि ॥

विसृष्टकीर्तिकामना: स्वधर्मपालने रता: ।
तथापि ये यशस्विनो जयन्ति ते जना भुवि ॥
विरागमूर्तयोऽपि ये स्वदेशरागशोभिता: ।
अरण्यवासनि:स्पृहा जयन्ति ते जना भुवि ॥
अमायिनो दृढव्रतास्तपस्विनो जितेन्द्रिया: ।
सदाशया महाशया जयन्ति ते जना भुवि ॥
(४।१-६)

## सत्त्ववन्तो महान्तः

महतामथ क्षुद्राणामन्तराय उपस्थिते ।
कृशानौ कनकस्येव परीक्षा जायते ध्रुवम् ॥
वातेरिताः प्रकम्पन्ते वृक्षा एव, न पर्वताः ।
आपत्तिसमये वृत्तं क्षुद्राणां महतां तथा ॥
तस्मादापत्तिकाले ये महान्तोऽन्तरवेक्षिणः ।
तिष्ठन्ति निश्चला धैर्यमूर्तयो न विकुर्वते ॥
यथा सोपानमारोहन् क्रमशः सपरिश्रमम् ।
प्रासादस्योत्तमं खण्डमासादयति मानवः ॥
तथा सोपानरूपास्ता: संकटानां परम्पराः ।
समाक्रम्य समुत्कृष्टं पदमाप्नोति सत्त्ववान् ॥
(८।१-५)

## इन्द्रियाश्वान् वशीकृत्य

इन्द्रियाणां प्रसङ्गेन प्रजा नित्यं विमोहिताः ।
यममन्दिरसान्निध्यं स्वयं यान्तीति विस्मयः !॥

मूलं प्रायेण रोगाणामिन्द्रियाणामसंयमः ।
संयमस्तु पुनस्तेषामारोग्याय बलाय च ॥
इन्द्रियाश्वान् वशीकृत्य नियतं नियतात्मना ।
जीवनाध्वानुसर्तव्यः कल्याणमभिलष्यता ॥
वश्येन्द्रियस्तदर्थान् वै भुञ्जानो न विषीदति ।
जीवनस्य च साफल्यं लभते नात्र संशयः ॥

( १२।१-४ )

## सुखस्य कारणं स्वान्तम्

विषयानुपभुञ्जानैः सुखप्राप्तिधिया नरैः ।
सुखस्य कारणं स्वान्तमित्येतदवधार्यताम् ॥
तमेव विषयं प्राप्य सुखदुःखे ततो नृणाम् ।
मनोऽवस्थितिभेदेन जायेते इति दृश्यते ॥
अत एवाभियुक्तानां मतमेतन्मनीषिणाम् ।
आत्मायत्तं मनो यस्य स एव सुखमश्नुते ॥

( १३।१-३ )

---

दृष्ट्वाप्यनन्तप्रसरां मानवो गतिमात्मनः ।
आश्चर्यं मूढतादोषाद् दीनं हीनं च मन्यते ॥

( १६।१ )

( आत्मन उन्नतेः क्वापि काष्ठा न विद्यत इति दृष्ट्वापि मोहवशान्मनुज आत्मानं दीनं हीनं च मन्यत इति महदाश्चर्यमित्यर्थः )

यदतीतमतीतं तत् संदिग्धं यदनागतम् ।
तस्माद् यत्प्राप्तकालं तन्मानवेन विधीयताम् ॥

( १६।१ )

यत्कर्मकरणेनान्तःसन्तोषं लभते नरः ।
वस्तुतस्तद्धनं मन्ये न धनं धनमुच्यते ॥

( २६।१ )

निधानं सर्वरत्नानां हेतुः कल्याणसंपदाम् ।
सर्वस्या उन्नतेर्मूलं महतां सङ्ग उच्यते ॥

( ३८।१ )

लोकेऽत्र जीवनमिदं परिवर्तशीलं
दृष्ट्वा विभावय सखे ! ध्रुवसत्यमेतत् ।
रात्रिर्गमिष्यति भविष्यति सुप्रभातं
भास्वानुदेष्यति हसिष्यति पङ्कजालिः ॥

( ४३।३ )

---

## आत्मपरीक्षणम्

लोको मामभिजानीयात् सादरं चावलोकयेत् ।
इतियत्नपरो नित्यमितिचिन्ताकुलो भवान् ? ॥
परमन्तर्मुखं कृत्वा चक्षुर्भ्रातर्निगद्यताम् ।
आत्मानमभिजानासि ? नात्मानमवमन्यसे ? ॥

( २३।१-२ )

## मानसी पुष्पवाटिका

उत्तुङ्गादर्शवृक्षाणामावल्या परितो वृता ।
सदाशयसरोभिश्च सद्भावकुसुमैश्चिता ॥
उद्वेगोपद्रवैः शून्या निरस्ताशेषकल्मषा ।
प्रसन्नतापरागैश्च रञ्जिताखिलभूतला ॥
कल्याणकामनाकान्त्या कमनीया चतुर्दिशम् ।
स्वच्छा स्वच्छतलादर्शप्रख्या शोभातिशायिनी ॥
सूक्तिपक्षिसमूहानामारावैरुपकूजिता ।
शान्तेर्निकेतनं मे स्यात् मानसी पुष्पवाटिका ॥
(३३।१-४)

## मनःप्रसादः

लोकोत्तरेण दिव्येन माधुर्येण समन्विता ।
येयं प्रसादनी शक्तिर्लोके सर्वत्र संस्थिता ॥
सूर्ये चन्द्रे जले वायावुत्फुल्लकुसुमावलौ ।
सहजस्नेहमूर्तीनां साधूनामाननेषु वा ॥
पित्रोः प्रेमलतापुष्पीभूते रम्ये च शैशवे ।
सेयमाविर्भवेत् शश्वत् विष्टान्मम मानसे ॥
(३४।१-२)

## दृष्ट्वा कुसुममारामे !

सुगन्धि दर्शनीयं च लोकरञ्जनतत्परम् ।
दृष्ट्वा कुसुममारामे सर्वैरप्यभिनन्दितम् ॥

प्रसादसुमुखः शीलचारित्र्याभ्यां सुवासितः ।
उद्युक्तो लोकसेवायां भवेयमिति भावये ॥
(३६।१-२)

## ध्वान्तं धावति दूरतः

नानाधिष्ण्याधिखिन्नेभ्यो मानवेभ्यः परात्मना ।
मनःप्रसादरूपोऽयं प्रसादो नूनमर्पितः ॥
यथा सूर्योदये प्रातर् ध्वान्तं धावति दूरतः ।
तथा मनःप्रसादेन सर्वा बाधा प्रशाम्यति ॥
प्रत्यक्षं देवता ह्येषा सद्यः कल्याणकारिणी ।
जयाय सर्वलोकानाममोघो मन्त्र एव वा ॥
कर्तव्यमिदमस्माकं प्रथममवधार्यताम् ।
सर्वदा सर्वथा तस्य परिरक्षा विधीयताम् ॥
'अस्मद्धिताय संसृष्टा सृष्टिरेषा परात्मना ।'
मनःप्रसादरक्षार्थे चिन्तनीयं मुहुर्मुहुः ॥
सत्यं दमोऽनसूया च बुद्धिर्लोकहितैषिणी ।
उपायास्तस्य रक्षाया अभियुक्तैः प्रकीर्तिताः ॥
(४४।१-६)

## राजते रजनीमुखम्

यथा तमोवृतं सद्म प्रकाशे सति दीप्यते ।
यथारण्यं निरानन्दमारामैरुपशोभते ॥
आरामरमणीयत्वं यथा पुष्पैश्च जायते ।
यथोदयेन चन्द्रस्य राजते रजनीमुखम् ॥

सुविचारैर्जपेनेशनामसंकीर्तनेन च ।
तथैव मानसं सद्यः प्रसन्नं जायते ध्रुवम् ॥
एवं भूयः प्रयत्नेन ज्ञानविज्ञाननाशनम् ।
मोहं नैराश्यमुन्मूल्य यतात्मा विचरेन्मुनिः ॥
(४८।१-४)

## परात्मना रक्षितो वर्त्ते

नूनं स्वजन्मनः पूर्वमन्तर्यामिनियन्त्रितः ।
अभूवमहम्, एवं वै मृत्योः पश्चात्स्थितिर्ध्रुवा ॥१॥
सत्येवम्, 'अल्पकालेऽस्मिञ्जीवनेऽपि परात्मना ।
सर्वथा रक्षितो वर्त्ते' इत्येवमवधार्यताम् ॥२॥
(४६।१-२)

## जीवने नाट्यसादृश्यम्

धनव्ययेन दृश्यानि नाट्यादीनि समुत्सुकाः ।
पश्यन्ति लौकिकास्तद्वद् वर्त्तेया जीवनं प्रति ॥
(५०।१)

# सोऽयं मे निधिरव्ययः

## १—हृद्यैः कलकलालापैलापिनी वारिवाहिणी

दृढतास्थिरतादर्शा लोकोपकृतितत्पराः ।
एकान्तशान्तिधामानि गिरयः सज्जनैः समाः ॥

वनलक्ष्म्या निवासास्ता: सुरम्या वनराजयः ।
मधुराराविणो नानारूपिणः पक्षिणस्तथा ॥
नेत्रोत्सवं वितन्वन्ति दिव्यगन्धानि भूरिशः ।
पुष्पाणि प्रकृतेर्देव्या यैर्हासायते ननु ॥
ह्लद्यैः कलकलालापैर्लापिनी वारिवाहिणी ।
अमन्दानन्ददो नित्यं सोऽयं मे निधिरव्ययः ॥

(५३।१-४)

## २—भास्वदम्बरमण्डलम्

स्वयंसूर्यैरसंख्येयैर्दस्मत्सूर्यातिशायिभिः ।
तारागणैः समाच्छन्नं मुक्तामणिगणैरिव ॥
नानासंतापखिन्नानां मनोनिर्वाणदायिना ।
मनोज्ञचन्द्रिकासंपच्चारुचन्द्रेण चर्चितम् ॥
त्रिलोक्याः प्राणशक्तेर्यन्निधानेन विवस्वता ।
सवित्रा तमसां हन्त्रा प्रेरकेण धियां तथा ॥
ज्योतिषां ज्योतिषा दीप्तं भास्वदम्बरमण्डलम् ।
मण्डनं प्रकृतेर्देव्याः सोऽयं मे निधिरव्ययः ॥

(५५।१-४)

## ३—सौम्या मनःस्थितिः

अभिमानेन दम्भेन दर्पेण परिवर्जिता ।
शान्ता न मायया स्पृष्टा संयमेन पुरस्कृता ॥

श्रद्धया च विवेकेन सत्यमार्गानुसारिणी ।
लोककल्याणबुद्ध्यर्थैव ज्ञानोपार्जनकारिणी ॥
हितबुद्ध्या समस्तानां प्राणिनां या समन्विता ।
उत्तरोत्तरमुत्कृष्टचारित्र्यपरिपोषिणी ॥
नैराश्येन विनिर्मुक्ता यासौ सौम्या मनःस्थितिः ।
सन्तुष्टा च प्रसन्ना च सोऽयं मे निधिरव्ययः ।

(५८।१-४)

---

## नूनं सा प्रथमा बुद्धिः

### जगद्धात्री महाशक्तिः

विश्वमेतद् यया शक्त्या धार्यते पाल्यते तथा ।
नूनं सा प्रथमा बुद्धिश्चेतना चैव मन्यताम् ॥
तया सहेतुकं विश्वमाब्रह्माण्डं व्यवस्थितम् ।
चाल्यते हितभावेन तामेवाहं समाश्रये ॥
यस्याः शक्तेः प्रभावेण विश्वमेतद्व्यवस्थितम् ।
वर्ततेऽभिन्नमर्यादं तामेवाहं समाश्रये ॥

(६६।१-३)

### यासौ प्रभामयी देवी

यासौ प्रभामयी देवी सर्वस्यान्तर्विराजते ।
मोहान्धकारखिन्नस्त्वं तस्याः शरणमाप्नुहि ॥
यैषा सर्वमयी देवी मातृरूपेण वर्तते ।
तस्याः क्रोडं समाश्रित्य वर्तेथास्त्वं गतव्यथः ॥

(६७।१;६८।१)

## दैवी नौका

संसारसागरे यात्रां कर्तुकामोऽभयेन यः।
परात्मदेवतानौकामाश्रयेत् स प्रयत्नतः॥
दैव्या नावोह्यमानोऽहं सुतरामापदापगाः।
असंशयं तरिष्यामि नात्र कार्या विचारणा॥
(६८।२-३)

## महती देवता

महती देवता यैषा हृन्मन्दिर उपस्थिता।
तां ध्यायेच्छ्रद्धयोपेतो य इच्छेच्छ्रेय आत्मनः॥
महती देवता यैषा ह्यात्मनोऽभ्यन्तरं स्थिता।
आत्मानमर्पयेत्तस्यै क्षेमार्थी यो भवेन्नरः॥
(६८।४-५)

## कामकामी न शान्तिभाक्

स्वल्पेऽपि कारणे हर्षमुद्वेगं मोहमेव वा।
भजमानो विमूढात्मा कामकामी न शान्तिभाक्॥
तरङ्गैरुह्यमानस्य विवशस्य कथा यथा।
तथा भावतरङ्गौघैर्विक्षिप्तानां कथा नृणाम॥
ये पुनर्वशिनो धीराः स्वरूपे समवस्थिताः।
साक्षिरूपेण भावानां त ईक्षन्ते गमागमौ॥
तरङ्गिणीस्तरीतुं यः कलां जानाति तत्त्वतः।
क्रीडन्निवाभयः शान्तो नद्याः पारमुपैति सः॥
(७६।१-४)

## तदेव वस्तुतो द्वारम्

विरजं वितमस्कं च प्रसन्नं यद्धि मानसम् ।
तदेव वस्तुतो द्वारं ब्रह्मकोशस्य दृष्टये ॥
विशुद्धसच्चिदानन्दरूपं यद् ब्रह्मणो मतम् ।
प्रसन्नं निर्मलं चित्तं प्रमाणं तत्र केवलम् ॥

(८०।१-२)

---

## अमृतमन्थनात्[1]

सन्तो मधुव्रताः सान्द्रं
पीत्वा शास्त्ररसामृतम् ।
लोकोत्तरं तथाक्षय्य-
मानन्दमुपभुञ्जते ॥१॥

## आदर्शचिन्तनम्

सौभाग्यमेतदतुलं मम येन लब्धं
मानुष्यकं प्रभुप्रसादललामभूतम् ।
याचे तमीशमधुना सदसद्विचारो-
द्युक्तां धियं सफलताधिगमाय तस्य ॥
याचे मुहुर्मुहुरहं तमजं परेशं
सत्ये दृढामथ विवेकरतां सुबुद्धिम् ।
मार्गे ययातिविषमे निजजीवनस्य
कर्तव्यपालनपरः कुशली व्रजेयम् ॥
रे रे मनो ! विसृज दैन्यमिदं दुरन्तं
नैराश्यमाहुरिह सर्वविनाशहेतुम् ।

---

१. ग्रन्थकर्त्रैव निर्मितं पद्यात्मकं पुस्तकम् । 'चौखम्बा विद्याभवन, बनारस' इति संस्थया प्रकाशितम्

आशावतां धृतिमतां मत एष लोको
विश्वासमात्मनि च ये नियतं भजन्ते ॥

( ६।१-३ )

## चारित्र्यमात्मनः स्वास्थ्यम्

सुरम्यं कुसुमं दृष्ट्वा
यथा सर्वः प्रसीदति ।
प्रसन्नानपरान् दृष्ट्वा
तथा त्वं सुखमाप्नुयाः ॥

प्रसन्नानपरान् दृष्ट्वा यस्यान्तर्न प्रसीदति ।
अप्रसन्नांस्तथा दृष्ट्वा यस्यान्तर्न विषीदति ॥
नूनं तस्यात्मनोऽस्वास्थ्यं कारणं तत्र विद्यते ।
अस्वस्थस्य जनस्येह द्राक्षापि विरसायते ॥
ततः सदात्मनः स्वास्थ्यकृते यत्नपरो भव ।
तदर्थमात्मनो हीनभावनाया विवर्जनम् ॥
तथा चैवाभिमानस्य दुरन्तस्यापसारणम् ।
कर्तव्यं प्रथमं तावन्मन्यते तत्त्वदर्शिभिः ॥

**अभिमानेन[१] मूढत्वमात्मनो हीनभावना[२] ।**
**आत्मनः स्वास्थ्यनाशस्य द्वयमेवात्र कारणम् ॥**

---

१. तु० "पराभवस्य हैतन्मुखं यदतिमानः" ( शतपथब्राह्मणे ५।१।१।१ )

२. तु० "नात्मानमवमन्येत" ( मनुस्मृतौ ४।१३७ ) । "मावमंस्थाः स्वमात्मानम्" ( मनुस्मृतौ ८।८४ ) ।

देहस्वास्थ्यकृते लोकाः सप्रयत्ना निरन्तरम् ।
तत्मूलमात्मनः स्वास्थ्यमिति ते नैव जानते ॥
विकारा मानसाः सर्वेऽस्वस्थ आत्मन्यसंशयम् ।
आप्नुवन्ति पदं, तस्मादात्मस्वास्थ्यपरो भवेत् ॥
चारित्र्यमात्मनः स्वास्थ्यं, जीवनस्य कृतार्थता ।
तत्रैव विद्यते, तस्मात्तदर्थं यत्नमाचरेत् ॥
(७।१-६)

---

## सत्यं जयति सर्वत्र

सत्यं जयति सर्वत्र नैवासत्यं कदाचन ।
तस्मात्सत्यपरो भूत्वा निर्द्वन्द्वो विचरेन्नरः ॥
सत्ये स्वरूपसंरक्षानपलापौ हि तिष्ठतः ।
तत्र स्वात्मविरोधोत्थदौर्मनस्यं न जायते ॥
अतस्तत्रात्मसंतोषो मनःस्वास्थ्यमकृत्रिमम् ।
सर्वैरप्यनुभूयेते निर्भयावस्थितिस्तथा ॥
सत्याधारेण तिष्ठन्ति मनःस्वास्थ्योद्भवा गुणाः ।
मनःप्रसादः सौम्यत्वमार्जवं शान्तिरेव च ॥
यथा प्रकाशो लोकानां हितमातनुते सदा ।
सत्यशीलास्तथा सन्तः परसन्तापहारिणः ॥
(१४।१-५)

## सत्यस्य हि प्रतिष्ठायां चारित्र्यं स्थितिमश्नुते

स्वरूपे संस्थितिः सत्यमसत्ये तद्विरुद्धता ।
मृत्युरूपं ततोऽसत्यं सत्येऽमृतनिधिः स्थितः ॥
सत्यरक्षाकृते तस्मात् सन्तः प्राणपणैरपि ।
तत्परा नियतं लोके दृश्यन्ते देवसन्निभाः ॥
सत्यस्य हि प्रतिष्ठायां चारित्र्यं स्थितिमश्नुते ।
सर्वे धर्माः क्षयं यान्ति यदि सत्यं न विद्यते ॥
सत्याश्रयेण लोकस्य व्यवहारः प्रसिध्यति ।
सत्ये सत्येव विश्वासो व्यवहारस्तदुद्भवः ॥
यथाऽभावस्य भावेन विरोधः शाश्वतो मतः ।
प्रकाशसंनिधाने हि तमः सद्यो निलीयते ॥
यथा मनःप्रसादेन शोकोद्वेगौ विनश्यतः ।
तथासत्यस्य सत्येन सहभावो न सिद्ध्यति ॥ (१५।१,३-७)

## विचरेद्विजितेन्द्रियः

सुदीर्घस्याध्वनः पारं गन्तुकामोऽत्र जीवने ।
स्वलक्ष्यैकमना नित्यं विचरेद्विजितेन्द्रियः ॥
स्पर्धायाः शत्रुताया वा रागस्याप्यथ कुत्रचित् ।
प्रसङ्गोऽवसरोऽप्येवमुपयोगो न विद्यते ॥
निरुद्देश्यं निरादर्शं कर्तव्येन विवर्जितम् ।
जीवनं यस्य, कामं स व्यर्थं तदतियापयेत् ॥ (२०।१-२)

## चतुरस्रेष्टसंसिद्धिः

कर्मणा रहितं ज्ञानं पङ्गुना सदृशं भवेत्।
न तेन प्राप्यते किंचित् न च किंचित्प्रसाध्यते॥
एवं ज्ञानेन हीनं यत् कर्मान्धेन समं स्मृतम्।
मार्गो वा मार्गलक्ष्यं वा नैव तस्य प्रतीयते॥
कर्मणा मनसा वाचा कर्तव्यं कर्म कुर्वतः।
तस्मादेवेष्टसंसिद्धिश्चतुरस्रा प्रजायते॥ (२३।१-३)

## शारीरं स्वास्थ्यमाश्रित्य सर्वमन्यत् प्रवर्तते

शारीरं स्वास्थ्यमाश्रित्य सर्वमन्यत्प्रवर्तते।
ततः स्वास्थ्यस्य यत्नेन परिरक्षा विधीयताम्॥
चारित्र्यं ब्रह्मचर्यं च संयमः श्रम एव च।
साधनं प्रथमं तस्य पौष्टिकाहार एव च॥ (१६।१-२)

## धीरा धैर्यधुरन्धराः

पङ्कादुत्पद्यते पद्ममहो रात्र्याः प्रजायते।
ग्रीष्मादनन्तरं वर्षा विद्युन्मेघात् प्रजायते॥
शुक्लपक्षसमारम्भः कृष्णपक्षादनन्तरम्॥
कण्टकाचितवृक्षेभ्यो मनोज्ञकुसुमोद्गमः॥
दास्यात्स्वतन्त्रतावाप्तिः स्वास्थ्यं रोगादनन्तरम्।
दारिद्र्यं सम्पदो भूमिस्तपसः सिद्धिरेव च॥

वृत्तेऽस्मिन् दृश्यमाने तु सृष्टावस्थां समन्ततः ।
कस्याञ्चिद् दुःस्थितौ नैव नैराश्यमुपयुज्यते ॥
लोकेशस्य जगद्धर्तु र्विश्वकल्याणकारिणी ।
प्रवृत्तिर्धीमतां शश्वच्छ्रद्धाविश्वासदायिनी ॥
सर्वापि दुःस्थितिस्तस्मात् सुस्थितेरेव कारणम् ।
एवं दुःखागमो नूनं कल्याणायैव जायते ॥
सिद्धान्तमिममाश्रित्य धीरा धैर्यधुरन्धराः ।
निरातङ्काः समुन्नत्यै प्रयतन्ते निरन्तरम् (२६।१-३७-५-७)

## परमतत्त्वमहं नतोऽस्मि

व्याप्य स्थितं त्रिभुवनं परितोऽप्रमेयं
पुण्यं परं परमनिर्वृतिधाम सत्यम् ।
पापापहं त्रिविधतापहरं वरेण्यं
शान्तं शिवं परमतत्त्वमहं नतोऽस्मि ॥
यस्यास्ति वाङ्मनसयोर्महिमा न गम्यो
लोकानतीत्य निखिलानपि संस्थितं यत् ।
भूत्वा यतो विलयमेति च यत्र विश्वं
तच्छाश्वतं किमपि तत्त्वमहं नतोऽस्मि ॥
( ३४।१-२ )

## स्रोतः सुखस्य सलिलेन परिप्लुतं तत्

प्राप्तुं सुखं हि मनुजा जगति भ्रमन्तः
क्लेशान् बहूननुभवन्ति न चाप्नुवन्ति ।

स्रोतः सुखस्य सलिलेन परिप्लुतं यत्
स्वान्तस्तले प्रवहतीति न जानते ते ॥
(३७१)

## शिलासंघातसंकाशाः सुस्थिरा दृढनिश्चयाः

जीवनेऽस्मिन्नवस्थानामागमोऽपाय एव च ।
स्वभावतः समायाति सर्वस्यापीति निश्चयः ॥
तत्त्वमेकं परं तत्र कूटस्थत्वेन वर्तते ।
तदेव शरणं गत्वा शान्तिमृच्छति मानवः ॥
हर्षेण वा विषादेन स्वरूपाद्विच्युतो नरः ।
वात्यावेगेन संक्षुब्धतृणावलिसमो मतः ॥
शिलासंघातसंकाशाः सुस्थिरा दृढनिश्चयाः ।
सत्त्ववन्तो महात्मानः शोभन्ते क्षोभवर्जिताः ॥
(४११-४)

## तदहं नित्यमाश्रये

प्रेमकारुण्ययोर्धाम तत्त्वं विश्वनियन्तृ यत् ।
जीवनस्य परं मूलं तदहं नित्यमाश्रये ॥
विस्मृतेनापि बहुधा मया मोहवशेन हा ! ।
विस्मयं न कृतं येन तदहं नित्यमाश्रये ॥
प्राणानामपि मे प्राणः परमं यत्परायणम् ।
वरेण्यं शरणं पुण्यं तदहं नित्यमाश्रये ॥

ध्यायते योगिभिर्नित्यं ज्ञानिभिश्चिन्त्यते तथा।
भक्ता गानरता यस्य तदहं नित्यमाश्रये ॥
सन्तोऽपि यस्य सत्ताया विश्वासेन निरन्तरम्।
जीवन्मुक्ता वसन्तीह तदहं नित्यमाश्रये ॥
गीयते कीर्तिसंगीतं सुगन्धिसुमनोहरैः।
निःशब्दं कुसुमैर्यस्य तदहं नित्यमाश्रये ॥
सौन्दर्यं विश्वविस्तीर्णं कवयः क्रान्तदर्शिनः।
पश्यन्त्यलौकिकं यस्य तदहं नित्यमाश्रये ॥
शुद्धोदात्तविचारेषु परार्थे जीवने तथा।
मन्ये मे दर्शनं यस्य तदहं नित्यमाश्रये ॥
व्यष्टेरस्या मदीयायाः सर्वस्वं निलयस्तथा।
समष्टिरूपं यत्तत्त्वं तदहं नित्यमाश्रये ॥
अपूर्णतासु सर्वासु तथाकाङ्क्षास्वसंशयम्।
संकेतो यस्य पूर्णस्य तदहं नित्यमाश्रये ॥
यन्नूनं परमं सत्यं नैव किञ्चिद् बहिर्यतः।
सन्निधावथ दूरे यत् तदहं नित्यमाश्रये ॥

(५३।१-११)

## अयि विश्वभावन ! विश्वभृद्

(परमेश्वरस्य महिमा)

अयि ! विश्वभावन विश्वभृद्
करुणानिधान नमोऽस्तु ते।

महिमा महान् मम मानसे
महनीय देव ! विभाति ते ॥
गिरिमूर्ध्नि निर्जनकानने
रमणीयतैकनिकेतने ।
तडितां गणैरतिशोभने
परिभाति ते महिमा घने ॥
तपनातपेन विभासिते
गगनाङ्गणे विधु-भा-सिते ।
उडुवृन्ददीप्तिविचित्रिते
तव रोचिरेव विरोचते ॥
द्विजवृन्दशब्दनिकूजिते
कुसुमावलीपरिशोभिते ।
मलयानिलेन सुगन्धिते
मृगसंचयेन निषेविते ॥
शुभशीतनिर्झरवारिणा
सरसीतटे परिपूरिते ।
मुनियोगिवृन्दसमर्चिते
महिमा विभो ! तव भासते ॥
मुनिभिर्भवानिह चिन्त्यते
व्रतिभिर्भवान् परिचीयते ।
निगमस्त्वया जगदीश ! ते
ह्यपवर्गनेत्यवसीयते ॥

निजनीडसंश्रितपक्षिभि-
रुपसीह सायमु राविभिः।
गुणकीर्तनं तव योगिभिः
क्रियते समाहितबुद्धिभिः ॥
यदजं ध्रुवं परितस्ततं
निगमागमैरपि संस्तुतम् ।
तव तत्स्वरूपमहं भजे
शिव ! शान्तिधाम निरन्तरम् ॥
( ५८।१-५, ८-६, १२ )

## धम्मपदात्

नहि वेरेन वेरानि सम्मन्तीध कुदाचनं ।
अवेरेन च सम्मन्ति एस धम्मो सनन्तनो ॥५॥
(=न हि वैरेण वैराणि शाम्यन्तीह कदाचन ।
अवैरेण च शाम्यन्ति धर्म एष सनातनः ॥ )

अप्पमत्तो पमत्तेसु सुत्तेसु वहुजागरो ।
अवलस्सं'व सीघस्सो हित्वा याति सुमेधसो ॥२६॥
(=अप्रमत्तः प्रमत्तेषु सुप्तेषु वहुजागरः ।
अवलाश्वं व[1] शीघ्राश्वो हित्वा याति सुधीर्नरः ॥ )

चित्तं दन्तं सुखावहं ॥३५॥
(=दान्तं चित्तं सुखावहम् )

नत्थि जागरतो भयं ॥३९॥
(=जाग्रतो हि भयं नास्ति )

यथापि रुचिरं पुप्फं वण्णवन्तं अगन्धकं ।
एवं सुभासिता वाचा अफला होति अकुब्बतो ॥५१॥
(=यथा हि रुचिरं पुष्पं वर्णवच्चाप्यगन्धकम् ।
एवं सुभाषितापि वागफला स्यादकुर्वतः ॥ )

---

१—इवार्थे व-शब्दः ।

यो वालो मञ्ञती वाल्यं पण्डितो चापि तेन सो ।
वालो च पण्डितमानी स वे वालो'ति वुच्चति ॥६३॥
(=यो वालो मन्यते वाल्यं तेन चापि स पण्डितः ।
वालश्च पण्डितंमन्यः स वै वाल इति स्मृतः ॥ )
वालः=मूर्खः ।

अत्तानं दमयन्ति पण्डिता ॥८०॥
( =आत्मानं दमयन्ति पण्डिताः । )

अप्पका ते मनुस्सेसु ये जना पारगामिनो ।
अथायं इतरा पजा तीरमेवानुधावति ॥८५॥
(=अल्पकास्ते मनुष्येषु ये जनाः पारगामिनः ।
अथेयमितरा प्रजा तीरमेवानुधावति ॥ )

मासे मासे सहस्सेन यो यजेथ सतं समं ।
एकञ्च भावितत्तानं मुहुत्तमपि पूजये ॥
सा येव पूजना सेय्यो यं चे वस्ससतं हुतं ॥१०६॥
(=मासे मासे सहस्रेण यो यजेत शतं समाः ।
एकं च भावितात्मानं मुहूर्तमपि पूजयेत् ॥
पूजैव श्रेयसी तस्माद् यच्चेद् वर्षशतं हुतम् ॥ )

विसं जीवितुकामो'व पापानि परिवज्जये ॥१२३॥
(=विषं जीवितुकामो व[1] पापानि परिवर्जयेत् । )

---

१—इवार्थो व-शब्दः ।

न विज्जती सो जगति प्पदेसो
यत्थट्ठितं न प्पसहेय्य मच्चू ॥१२८॥
(=न विद्यते जगति स प्रदेशो
यत्र स्थितं न प्रसहेत मृत्युः ॥)

अत्तानं उपमं कत्वा न हनेय्य न घातये ॥१२९॥
(=आत्मानमुपमां कृत्वा न हन्यान्न च घातयेत् ॥)

न नग्गचरिया न जटा न पङ्का
नानासका थण्डिलसायिका वा ।
रजोवजल्लं उक्कुटिकप्पधानं
सोधेन्ति मच्चं अवितिण्णकङ्खं ॥१४१॥
(=न नग्नचर्या न जटा न पङ्का
नानशनं स्थण्डिलशायिका वा ।
रजोलेपनमुत्कुटिकप्रधानं[1]
शोधयन्ति मर्त्यमवितीर्णाकाङ्क्षम् ॥)

अप्पस्सुतायं पुरिसो बलिवद्दो 'व जीरति ।
मंसानि तस्स वड्ढन्ति पञ्ञा तस्स न वड्ढति ॥१५२॥
(=अल्पश्रुतोऽयं पुरुषो बलीवर्दो व जीर्यति ।
मांसानि तस्य वर्धन्ते प्रज्ञा तस्य न वर्धते ॥)

मिच्छादिट्ठिं न सेवेय्य ॥१६७॥

---

१—उत्कुटिकासनं नामासनविशेषः ।

(=मिथ्यादृष्टिं न सेवेत)

उत्तिट्ठे नप्पमज्जेय्य ॥१६८॥

(=उत्तिष्ठेन्न प्रमाद्येत् ।)

आरोग्यपरमा लाभा सन्तुट्ठी परमं धनं ॥२०४॥

(=आरोग्यं परमो लाभः सन्तुष्टिः परमं धनम् ॥)

निन्दन्ति तुण्हीमासीनं निन्दन्ति बहुभाणिनं ।
मितभाणिनम्पि निन्दन्ति नत्थि लोके अनिन्दितो ॥२२७॥

(=निन्दन्ति तूष्णीमासीनं निन्दन्ति बहुभाणिनम् ।
मितभाणिनमपि निन्दन्ति नास्ति लोके ह्यनिन्दितः ॥)

असज्झायमला मन्त्रा अनुट्ठानमला घरा ॥२४१॥

(=अस्वाध्यायमला मन्त्रा अनुत्थानमला गृहाः ॥)

न जटाहि न गोत्तेहि न जच्चा होति ब्राह्मणो ।
यम्हि सच्चञ्च धम्मो च सो सुची सो च ब्राह्मणो ॥३९३॥

(=न जटाभिर्न वा गोत्रैर्न जात्या ब्राह्मणो भवेत् ।
यस्मिन्सत्यं च धर्मश्च स शुचिः स च ब्राह्मणः ॥)

— —

# सन्नीतिमुक्तावल्याः[1]

योऽस्मात्रशेषविश्वस्य
प्रभुरन्तर्नियामकः ।
तमेव श्रद्धया युक्तो
विश्वासेन समाश्रय ॥१॥

विश्वभर्तुः परेशस्य प्रार्थनायां रतो भव ।
मानवस्याल्पसत्त्वस्य मा भूर्याञ्चापरः पुरः ॥२॥
कटुकौषधेन तुल्यमादौ कष्टप्रदाप्यन्ते ।
आलम्बती जनानां हितमापत्तिर्भवेन्नूनम् ॥३॥
शस्त्रप्रयोगमातन्वन् स्फोटे शल्यचिकित्सकः ।
कष्टं ददाति तत्कालं परिणामे हितावहः ॥४॥
न विद्यया तथा कश्चिच् छोभां समधिगच्छति ।
विद्यया प्राप्तज्ञानस्याचरणेन यथा नरः ॥५॥
योग्यताया अभावं चेत्पश्येत्कार्यस्य कस्यचित् ।
प्राज्ञ आत्मनि तद्भारं दूरतः परिवर्जयेत् ॥६॥
अङ्गीकुर्वन्ति चेत्किञ्चित्कार्यं कर्तुं मनस्विनः ।
जायन्ते तत्पराः पूर्णशक्त्याथोत्साहसम्पदा ॥७॥

---

१. ग्रन्थकर्त्रैव निर्मिता 'सन्नीतिमुक्तावली' अद्य यावदप्रकाशिता ।

मृत्योः संरक्षणं तावत्कठिनं नैव विद्यते ।
यावत्संरक्षणं पापान्मानवस्य भवेदिह ॥८॥

प्रातः प्रातः सुमधुरं
खगान् श्रुत्वा विराविणः ।
गुणवादान् परेशस्य
गायतस्तान् विभावये ॥९॥

बुद्ध्या तत्त्वावगाहिन्या
संपन्नोऽपीह मानवः ।
प्रभोर्गुणान्न गायेच्चेत्
खेदस्य विषयो महान् ॥१०॥

संमानेन च संपत्त्या प्रभावेण च संयुतम् ।
दृष्ट्वा दुष्कर्म मा मोहं यासीस्त्वं क्षीणचेतनः ॥११॥
चाकचक्येन चकितो मा भूस्त्वं, तद्विलपताम् ।
दुरन्तां किन्तु संपश्यन्दूरतः परिवर्जयेः ॥१२॥
साहसोत्साहहीनस्त्वं मा गा निःसत्त्वतां तथा ।
यथोत्थातुमशक्तो हि सकृत्पातेन जायसे ॥१३॥
सुदृढोऽध्यवसायश्चेद्विजयो नियतस्तव ।
निरुत्साहस्य वै पुंसो दुर्दशा संमुखे स्थिता ॥१४॥
'सत्कार्यं शक्यते कर्तुं किमत्र विषये मया' ?
स्वार्थमूढे जगत्यस्मिन्प्रश्न एष महान् मम ॥१५॥
सौभाग्यं किं ? कुतश्चैतद् ? जिज्ञासा जायते यदि ।
परिश्रमस्य सन्तानं तदवेहीति निश्चितम् ॥१६॥

दुःखराशिर्मनुष्याणां योऽसावतिभयंकरः।
वस्तुमूल्यावबोधस्याभावस्तत्र हि कारणम् ॥१७॥
चिन्तामणेर्वितन्वन्तः काचमूल्येन विक्रयम्।
हन्त! मूढा वयं सर्वे इति कस्य तिरोहितम् ॥१८॥
वर्तन्ते सख्यमाश्रित्य तपसः संयमस्य ये।
तेऽपेक्षन्ते न साहाय्यं धनिनामन्धचेतसाम् ॥१९॥

यावन्त्यपि हि कार्याणि
कर्तुमिच्छन्ति मानवाः।
ईशितुः शासनक्षेत्र-
स्यान्तस्तानि न संशयः ॥२०॥
कार्यं किञ्चिदनुष्ठातुं
योग्यश्चेद्वर्तते भवान्।
अपि सम्यगनुष्ठातुं
तद्धि योग्यो भवान् ध्रुवम् ॥२१॥

पुरस्तादात्मनो नित्य-
मादर्शान् महतो बुधः।
स्थापयेच्चाधिगन्तुं तान्
प्रयतेत निरन्तरम् ॥ २२ ॥
जीवनस्य स्वकीयस्य
सिद्धान्ता ये विनिश्चिताः।
रक्षां प्राणव्ययेनापि
सन्तस्तेषां प्रकुर्वते ॥ २३ ॥

धन्यः स मानवो नूनं
सफलं तस्य जीवितम् ।
श्रुत्वा यस्य गुणग्रामं
पितरौ सुखमाप्नुतः ॥ २४ ॥
सत्येन धार्यते लोकः
सत्ये सर्वं प्रतिष्ठितम् ।
नहि सत्यात् परो धर्मो
देवाः सत्यमया मताः ॥ २५ ॥
आपत्तिबहुले लोके
नापत्तिरतिरिच्यते ।
एतस्माद्यन्मनुष्यस्य
स्वजनेष्ववमानना ॥ २६ ॥
कामं स्वार्थवशा लोका
विवदन्तां परस्परम् ।
तथाप्यन्यप्रतिष्ठाया
अपवादो न युज्यते ॥ २७ ॥
विद्या संमाननामूलं
विद्या सर्वोत्तमं धनम् ।
आरोग्यं परमो लाभः
सन्तोषः परमं सुखम् ॥ २८ ॥
सुस्थिरः क्षत्रियस्तिष्ठे-
दापदां समुपस्थितौ ।

नैवानमेद् दुर्बलः सन्
कामं भज्येत धर्मवित् ॥ २६ ॥
हानि विनैव पुष्पाणां
भ्रमरो वर्णगन्धयोः ।
आदत्ते मधु सामोदं
गुञ्जन् मञ्जु मनोरमम् ॥ ३० ॥
एवमेव मनुष्येण
लोकरञ्जनपूर्वकम् ।
सद्भावनासहायेन
कार्यसिद्धिर्विधीयताम् ॥ ३१ ॥
सुरूपमपि निर्गन्धं
यथा पुष्पं भवेत्तथा ।
परोपदेशकुशलः
स्वयमाचारवर्जितः ॥ ३२ ॥
रूपवन्ति सुगन्धीनि
पुष्पाणीव जना हि ते ।
येषां परोपदेशा वै
स्वीयाचारोपशोभिताः ॥ ३३ ॥
उत्तिष्ठ जागृहि भ्रातर्
निद्रया तन्द्रया च किम् ?
जीवनस्यास्य साफल्यं
जाग्रतामेव जायते ॥ ३४ ॥

आर्तानां दुःखतप्तानां
कृते व्यग्रा भवन्ति ये।
यथेषुविद्धगात्राणां
स्वापस्तेषां कथं भवेत् ? ॥ ३५ ॥

प्रमाद आत्मनोऽस्वास्थ्य-
मवसादस्तथैव च।
दुःखदारिद्र्यहानार्थं
समुत्साहं समाश्रय ॥ ३६ ॥

शत्रोः प्रत्यपकारेण
तत्साम्यं लभते नरः।
क्षाम्यंस्तस्यापकारं तु
तत उत्कर्षमश्नुते ॥ ३७ ॥

यादृशं व्यवहारं त्व-
मन्यस्मात्स्वयमिच्छसि ।
तथा तं प्रति वर्तेथा
न्याय्यमेतन्मतं सताम् ॥ ३८ ॥

जलबिन्दुनिपातेन
क्रमशः पूर्यते घटः।
एवं क्रमेण सिध्यन्ति
कार्याणि सुमहान्त्यपि ॥ ३९ ॥

कष्टावस्थामुपेतश्चेत्
किञ्चिच्चिन्तयते भवान्।

परेशस्यानुकम्पाया
बीजं तत्रोपलभ्यते ॥४०॥

नातिवादी भवेत्सम्यक्
चिन्तयित्वा वदेन्नरः ।
तूष्णींभावः शतं शिक्षा
नापृष्टः कस्यचिद्वदेत् ॥४१॥

केनापि सह वार्तासु
नम्रस्त्वमवधारयेः ।
यत्सोऽपि त्वत्समो बुद्धया
नाधिकश्चेन्नु मन्यते ॥४३॥

कस्य चिद्वस्तुनोऽवाप्त्यै
मूल्येन रहितोऽसि चेत् ।
तदा तच्चिन्तया भ्रातर्
मा गाः कातरतां मुधा ॥४४॥

कस्यापि वस्तुनो दृष्ट्वा
बाह्यमाडम्बरं महत् ।
न कर्तुं युज्यते सद्यः
स्वरूपस्यावधारणम् ॥४५॥

पदेन तेन को लाभो
गौरवेणापि वा पुनः ।
विवेकान्धोऽभिमानेन
जनो येन हि जायते ॥४६॥

दृष्ट्वा ह्यन्यापदा वापि
ग्रस्तानन्यान् प्रसन्नताम् ।
मा गाः, संभाव्यते सैवा-
वस्था ते भाग्यपर्ययात् ॥४७॥

कस्यापि वस्तु संवीक्ष्या-
स्वामिकं वापि यस्य वै ।
मनो न विक्रियां याति
सदाचारी स मे मतः ॥४८॥

आत्मसद्वृत्तप्रख्यातेर्
विरताः, कारणं विना ।
सदाचारपरा ये वै
ते ततोऽपि महत्तराः ॥४९॥

प्रथमं शृणुयात् पश्चात्
तदर्थमवधारयेत् ।
अनन्तरं प्रयुञ्जीत
वचः सामयिकं बुधः ॥५०॥

वाक्यमेकं प्रयुञ्जीत
श्रुत्वा वाक्यद्वयं बुधः ।
विधात्रा रचिता यस्माज्
जिह्वैका कर्णयोर्द्वयम् ॥५१॥

क्रोध एष महान् शत्रुस्
तन्मातादानमुच्यते ।

राभस्येन कृतं कर्म
तस्य मातामही स्मृता ॥५२॥
अत एव यदा क्रोधे-
नाविष्टो जायते नरः ।
बुद्धिस्तस्माद् बहिर्यान्ती
सर्वैरप्यनुभूयते ॥५३॥

## विद्याया वन्दना

विद्या समुन्नतिपथं विशदीकरोति
बुद्धिं विचारविषये प्रखरीकरोति ।
कर्तव्यपालनपरां धियमादधाति
विद्या सखा परमबन्धुरथेह लोके ॥५४॥

## सत्सङ्गमाहात्म्यं सज्जनानां स्वभावश्च

सङ्गः सतां शर्मशतानि सूते
सङ्गोऽसतां तद्विपरीतवृत्तिः ।
यस्तेजसां यस्तमसां स्वभावो
भेदस्तयोः सर्वजगत्प्रसिद्धः ॥५५॥
समुज्ज्वलं प्रेम हि सज्जनानां
दिने दिने पोषमुपैति नूनम् ।
स्थिरस्वभावं सुतरामुदारं
ह्रासोन्मुखत्वं भजते न जातु ॥५६॥

आपन्निमग्ना अपि साधुवर्या
हरन्ति दुःखानि सदा परेषाम् ।
आच्छादितोऽहर्पतिरासमन्ता-
दभ्रैस्तमो वारयतीह नूनम् ॥५७॥

न दुर्जनानामपकृत्यमन्तः
सतां कदाचित्पदमादधाति ।
पादाहतोऽप्येष तरुर्विशालश्
छायाश्रितानामपहन्ति तापम् ॥

कदर्थितोऽपीह खलेन साधुर्
हितं परेषां नियतं करोति ।
मुहुर्मुहुश्चन्दनमङ्ग ! घृष्टं
मनोरमं सौरभमातनोति ॥५८॥

इक्षोः प्रवृत्तेरनुगामिनस्ते
सन्तो महान्तो विचरन्ति लोके ।
प्रपीडितोऽपीक्षुरमन्दमोदं
रसप्रदानेन सदा तनोति ॥

पदं वरेण्यं समुशन्ति सन्तोऽ-
सन्तः पुनस्तद्विपरीतभावाः ।
गृध्रः श्मशाने रमते स्वभावाद्
हंसः पुनर्मानसमेव भुङ्क्ते ॥५९॥

क्षोभं प्रयाता अपि नैव सन्तो
दुष्टामशिष्टां गिरमुद्गृणन्ति ।
दुष्टाः प्रसन्ना अपि शीलयुक्तां
वक्तुं न जातु प्रभवन्ति वाचम् ॥६०॥

इति श्रीमङ्गलदेवशास्त्रिविरचितस्य
प्रबन्धप्रकाशस्य द्वितीयभागे
सुविचारमाधुकरी नाम
द्वितीयोल्लासः ।
समाप्तश्चायं ग्रन्थः ।

# शुद्धाशुद्धसूची

| पङ्क्तिः | अशुद्धम् | शुद्धम् |
|---|---|---|
| १३ | सततम- | सततमग्र- |
| ५ | वम- | वय- |
| २१ | -यां | -णां |
| १५ | तामेवा | तामेवाहं |
| २ | तत्मू- | तन्मू- |
| १६ | -प्रसादा | -प्रसादः |
| १० | -रेव्र | -रेव |
| १ | -र्भ- | -र्म- |
| ७ | -द्य- | -द्रय- |

— —

प्रबन्धप्रकाश

भाग २

पर

# प्रख्यात विद्वानों की बहुमूल्य सम्मतियाँ

## *Extracts from Select Opinions.*

**1. The late Dr Bhagavan dasa, M, A., D. Litt. Varanasi:—**

......स एष संस्कृतभाषायामिदं प्रथमत्वेन कृतो यत्नः संस्कृतज्ञानामवश्यमभिनन्दनीयो भविष्यतीति मे विश्वासः। तदस्य विषये

देववाण्याः समुत्कर्षं भावयंस्तद्विदां तथा।
ग्रन्थ एष चिरं भूयाद्विदुषां हर्षवर्धनः॥

इत्येव मदीयं शुभाशंसनम्।"

**2. Shri M. S. Aney, Ex-Governor of Bihar:—**

"......*The book, if prescribed for general reading by the students going up for University Examinations, will certainly be a great help in popularising the study of Sanskrit among the students.*"

3. **Mahamahopadhyaya Dr. P. V. Kane, Ex-Vice-Chancellor, Bombay University, Bombay :—**

......प्रबन्धप्रकाशाख्यो ग्रन्थः......मया दृष्टः। महान् संतोषः संजातः। भवद्भिर्भारतीयसंस्कृतेः स्वरूपं सम्यक् निर्दिष्टम्। देववाण्या अवनतिः कथं जाता, अस्माभिः किं च कर्तव्यं तदपि सम्यक्तया प्रतिपादितम्। गीर्वाणवाण्या व्यवहारः कथं सुकरो जायते तद्भवद्भिरनेन ग्रन्थेन सम्यक् प्रदर्शितम्।

......'प्रबन्धप्रकाश' इत्याख्येन ग्रन्थेन बहूपकृतं तत्रभवद्भिः।......

4. **His Excellency Shri Shri Prakash, Governor of Maharashtra :—**

......मैं आपको बधाई और धन्यवाद देता हूँ कि आपने इतनी उपयोगी पुस्तक लिखी।......

5. **Shri C. D. Deshmukh, ex-Chairman, University Grants Commission, New Delhi :**

......सुरवाग्गुपासकेष्वेकमात्मानं गणयतोऽनतिविदग्धस्यापि मे भवतां प्रबन्धप्रकाशोऽनल्पं प्रमोदमाततान।......

6. **His Excellency Shri N. V. Gadgil, Governor of the Punjab :**

......I am glad to state that *it is a unique book of its kind.*

7. **The late Shri B. G. Kher, Chief Minister, Government of Bombay, Bombay :**

......प्राप्तो मया भवदीयप्रवचनसंग्रहात्मकः......'प्रबन्धप्रकाश' नामको ग्रन्थः।......विशेषतो गीताजयन्तीमहोत्सवशुभावसरे आविष्कृतं भगवद्गीतायाः स्वरूपं प्रत्यक्षीकृत्य सहर्षं समाधानमभून्मे मनसि।...... अत्यन्तमनुगृहीतोऽस्मि......

8. **Dr. Shri Sampurnanand, Ex-Chief Minister, U. P., Lucknow :—**

......मैं आपकी पुस्तक 'प्रबन्धप्रकाश' ( भाग २ ) को पढ़ गया। मुझे वह बहुत पसन्द आई।......संस्कृत पढ़नेवालों को इस प्रकार की बहुत कम पुस्तकें अब तक उपलब्ध रही हैं।......

9. **The late Pandit Madho Sarup Vats, M. A.' Director General of Archaeology in India, New Delhi :**

......*The book is thought-provoking and a valuable contribution to modern Sanskrit literature.*

10. **Well known Vedic Scholar Pandit Brahma Datt Jijnasu, Editor of 'Veda - Vani, Varanasi :—**

......हम चाहते हैं कि यह ग्रन्थ भारत के सभी विश्वविद्यालयों में संस्कृत भाषा पर अधिकार प्राप्तिके लिये प्रामाणिक माना जावे और पाठ्यग्रन्थों में रखा जावे।

11. **Dr. Babu Ram Saxena, M. A., D. Litt., Ex-Professor and Head of the Sanskrit Department, Allahabad University, Allahabad :—**

......प्रस्तुत ग्रन्थ में, अन्य महत्त्वपूर्ण विषयों के साथ-साथ, संस्कृत भाषा, साहित्य तथा संस्कृतज्ञ का क्या स्थान वर्तमान स्वतन्त्र भारत में होना चाहिए इस विषय का गम्भीर विवेचन है और अनेक ऐसे सुझाव हैं जिनसे राष्ट्र अग्रसर हो सकता है।

12. **Dr. Surya kanta, M. A., D. Litt. ( Punjab ), D. Phil. ( Oxon. ), Officer D, Academie Francaise, Head of the Sanskrit Dept., Banaras Hindu University :—**

······पुस्तक के प्रबन्ध पढ़ते ही बनते हैं। उनके भाव, उनकी भाषा, उनकी शैली आपके व्यक्तित्व से अनुस्यूत हैं, और प्रबन्धों की विविधता तथा सामयिकता ने पुस्तक में जान डाल दी है। मैं आशा करता हूँ कि संस्कृत के प्रेमी इसका आदर करेंगे।.....

13. **Prof. L. Renou, Professor of Sanskrit, University of Paris :—**

"I have received your excellent book in Sanskrit—Prabandha Prakāsa, II, and admired your easy and elegant 'Riti' in Sanskrit. The book is full of new ideas about Sanskrit education and learning. It may be recommended to every University interested in the treasure of Old Traditions,"............

14. **Prof. K. K. Handiqui, M. A., ( Calc. Et Oxon. ) Vice-Chancellor, Gauhati University, Gauhati :—**

...The book contains his learned and thoughtful Addresses on cultural topics and the Problems of Sanskrit Education......

15. **Prof. Dharmendra Nath Shastri, Tarkashiromani, M. A., D. Litt. :—**

"The Prabandha Prakāśa Part II mainly comprises the addresses delivered by Dr. Mangal Deva Shastri at the convocations of some National Universities and academies and at some cultural conferences. These addresses mark an altogether a new style of Sanskrit Prose. Never before have I come across modern ideas being expressed in chaste and idiomatic Sanskrit with such ease. It shows how our classical language, in the hands of a master, is capable not only of expressing modern thoughts, but also imparting them a new vigour and richness.------The book will fulfil a long-felt need of Sanskrit Scholars of the post-graduate classes of Indian Universities."

## ग्रन्थकर्त्रा डा० मङ्गलदेवशास्त्रिणा प्रणीतानां

## संपादितानां वा ग्रन्थानां[1] परिचयः—

### ( संस्कृते )

मूल्यम्

( १ ) ऋग्वेदप्रातिशाख्यम्, उवटाचार्यकृतभाष्येण सहितम् ८॥)

( २ ) प्रबन्धप्रकाशः। ( संस्कृतनिबन्धसंग्रहात्मकः ) प्रथमो भागः दशमं संस्करणम् ४)

( ३ ) प्रबन्धप्रकाशः। द्वितीयो भागः

( ४ ) न्यायसिद्धान्तमाला ( द्वौ भागौ )। १॥-)

( ५ ) उपनिदानसूत्रम् ( सामवेदीयम् )। ॥)

( ६ ) उपेन्द्रविज्ञानसूत्रम् ( वेदान्तः )। १)

( ७ ) आश्वलायनश्रौतसूत्रम् ( सिद्धान्तिभाष्यसहितम् ) (द्वौ भागौ)

( ८ ) आर्यविद्यासुधाकरः। १०)

( ९ ) भारतीयसंविधानस्य ( उत्तरार्धस्य ) संस्कृतानुवादः।

( १० ) ऐतरेयारण्यक-पर्यालोचनम् २)

( ११ ) जीवनज्योतिः २॥)

### ( इङ्गलिशभाषायाम् )

( १२ ) ऋग्वेदप्रातिशाख्यम् English Translation, Critical Notes, Appendices, etc. २०)

---

१. 'वाराणसेय राजकीय संस्कृत महाविद्यालयस्य' अध्यक्षरूपेण ग्रन्थकर्त्रा संपादितानामनेकेषां ग्रन्थानां नात्रोल्लेखः क्रियते।

( १३ ) ऋग्वेदप्रातिशाख्यम् (Critical Introduction, Text in Sanskrit Stanzas, Appendices, etc. २०)

## ( हिन्दीभाषायाम् )

( १४ ) भाषाविज्ञान ( अथवा तुलनात्मक-भाषाशास्त्र ), पंचम संस्करण ६)

( १५ ) भारतीय आर्यधर्म की प्रगतिशीलता ( भारतीय संस्कृति के विकास का विवेचनात्मक अध्ययन ) ।।)

( १६ ) मिना ( = प्रेम और प्रतिष्ठा का संघर्ष ) ( 'मिना फ़न वार्नह्यल्म' नामक जर्मन नाटक का अनुवाद ) । २।)

( १७ ) वेदों का वास्तविक स्वरूप अथवा—वेदों के महान् आदर्श ।=)

( १७ ) रश्मिमाला ( अथवा 'जीवनसंदेश-गीताञ्जलि' ) । मूल संस्कृत पद्य तथा हिन्दी अनुवाद । उत्तरप्रदेश सरकार द्वारा पुरस्कृत ३।।।)

( १९ ) भारतीयसंस्कृति का विकास । प्रथम खण्ड, वैदिक धारा ७)

( २० ) अमृतमन्थन । मूल संस्कृत पद्य तथा हिन्दी अनुवाद । उत्तरप्रदेश सरकार द्वारा पुरस्कृत ४।।)

( २१ ) संस्कृत साहित्य का इतिहास ( प्रोफ़ेसर ए० बी० कीथ की History of Sanskrit Literature का अनुवाद ) २५)

( २२ ) वैदिक संस्कृति के तत्त्व ३)
( २३ ) सुभाषितसप्तशती २॥)

## ( प्रकाशनार्थं प्रस्तुतग्रन्थाः )

( १ ) शतपथब्राह्मणपर्यालोचनम्
( २ ) कौषीतकिब्राह्मणपर्यालोचनम्
( ३ ) सांख्ययोगपारिभाषिकशब्दकोषः,

इत्यादयः

ग्रन्था एते वाराणस्याः समस्तप्रसिद्धपुस्तकविक्रेतॄणां सकाशाद् लभ्याः सन्ति ।